स्त्रीपुंसावात्म(१)भागौ ते भिन्नमूर्तेः सिसृक्षया
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ ७ ॥
स्वकाल(२)परिमाणेन व्यस्तरात्रिंदिवस्य ते ।
(३)यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥८॥

स्त्रीपुंसाविति ॥ स्त्री च पुमांश्च स्त्रीपुंसौ ॥ "अचतुर—" इत्यादिनाच्प्रत्ययान्तो निपातः ॥ सिसृक्षया स्रष्टुमिच्छया भिन्नमूर्तेर्द्विधाकृतविग्रहस्य ते तवात्मनो देहस्य भागावात्मभागौ ॥ "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि" इति विश्वः ॥ तौ एव भागौ प्रसूतिभाज उत्पत्तिभाजः । सृज्यत इति सर्गः तस्य । निजसृष्टेरित्यर्थः । माता च पिता च पितरौ ॥ "पिता मात्रा" इत्येकशेषः ॥ स्मृतौ । वृद्धैः इति शेषः ॥ अत्र मनुः—"द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः" इति ॥ ७ ॥

स्वकालेति । स्वकालस्य परिमाणेन "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इत्युक्तरूपेण व्यस्तं विभक्तं रात्रिंदिवं रात्र्यहनी यस्य तस्य ॥ यद्यपि "अचतुर—" आदिसूत्रेण रात्रौ च दिवा च रात्रिंदिवमिति सप्तम्यर्थे वृत्तौ द्वन्द्व इत्युक्तं तथापि "दोषामन्यमहः" "दिवमन्या रात्रिः" इत्यादौ कर्मवदत्रापि प्रातिपदिकार्थवृत्तित्वं कथञ्चित्प्रयोगबलादाश्रयणीयम् ॥ ते तव यौ तु स्वप्नावबोधौ तावेव भूतानां प्रलयोदयौ संहारसृष्टी । यदाहुः—"यदा स देवो जागर्ति तदेव चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते" इति ॥ एतच्च दैनंदिनसृष्टिप्रलयाभिप्रायकं महाप्रलयस्य ब्रह्मणो वर्षशतान्ते भावित्वात् ॥ ८ ॥

---

(१) -भावौ । (२) परिणामेन ।
(३) यौ स्वप्नबोधौ तावेव, स्वप्नावबोधौ भूतानां तावेव ।

जगद्योनिरयोनिस्त्वं (४)जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं (५)जगदीशो निरीश्वरः॥९॥
आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे॥१०॥

जगदिति॥ हे भगवन्। त्वं जगद्योनिः जगत्कारणं स्वयमयोनिरनादित्वादकारणकस्त्वम्। अन्तयतीत्यन्तः॥ पचाद्यच्॥ जगतोऽन्तर्जगत्संहर्ता स्वयं निरन्तको नित्यत्वादन्तरहितः। त्वं जगतामादिः जगदादिः। सृष्टेः प्रागपि सन्नित्यर्थः। अतएव त्वमनादिः आदिरहितः। त्वं जगतामीशो नियन्ता स्वयं निरीश्वरः। अनियम्य इत्यर्थः॥ "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिरेव अत्र प्रमाणम्॥ अत्रायोनिरित्यादौ नञ्‌तत्पुरुषाश्रयणे विरोधः। बहुव्रीहिणा तु तत्परिहार इति विरोधाभासालङ्कारः। यथाहुः—"विरोधाभासत्वे विरोधः" इति॥ ९॥

तव तु न प्रपञ्चस्येव जन्मतिरोधानस्थानेषु परापेक्षेत्याह—

आत्मानमिति॥ हे भगवन्। त्वमात्मानं लोकानुग्रहार्थं ब्रह्मरूपेणोत्पिपादयिषितं स्वस्वरूपमात्मनैव वेत्सि जानासि। सर्वापि क्रिया कर्तव्यार्थज्ञानपूर्विकेति भावः। तथात्मानमात्मनैव। आत्मन्येवेत्यत्रापि सम्बध्यते। स्वस्मिन्नेव सृजसि। अधिष्ठानमपि स्वयमेवेत्यर्थः॥ "स्वे महिम्नि प्रतिष्ठितम्" इति श्रुतेः॥ कृतिना समर्थेन। इदं सर्वत्र सम्बध्यते। आत्मना स्वेनैवात्मन्येव प्रलीयसे स्वस्मिन्नेव प्रलीनो भवसि॥ लीयतेर्दैवादिकात्कर्तरि लट्। "प्रकृत्यादिभ्य उपसंख्यानम्" इति वार्तिकात्सर्वत्रात्मनेति तृतीया। न हि ते प्रपञ्चस्येव स्थानोत्पत्तिलयेषु परापेक्षेति फलितार्थः॥ १०॥

---

(४) अनन्तो जगदन्तकः, जगदन्तोऽप्यनन्तकः।
(५) जगदीशोऽप्यनीश्वरः।

द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो (६)लघुर्गुरुः ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥११॥
(७)उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥१

द्रव इति ॥ त्वमिति अनुषज्यते । हे भगवन् । त्वं द्रव सरित्समुद्रादिवद्द्रवात्मकोऽसि । सङ्घातेन निविड़संयोगेन कठिनो महीधरादिवत् । स्थूल इन्द्रियग्रहणयोग्यो घटादिवत् । सूक्ष्मोऽतीन्द्रियः परमाण्वादिवत् । लघुरुत्पतनयोग्यस्तूलादिवत् । गुरुर्हेमाद्रिवदचलनीयः । व्यक्तः कार्यरूपोऽसि । व्यक्तेतरः कारणरूपश्चासि । एवं विभूतिष्वणिमादिषु ते तव । प्रकामस्य भावः प्राकाम्यं यथाकामत्वम् ॥ ११ ॥

उद्घात इति ॥ हे भगवन् । यासां गिरां वाचामुद्घात उपक्रमः प्रणव ओंकारात्मकः ॥ "ओंकारप्रणवौ समौ" इति । "स्यादभ्यादानमुद्घात आरम्भः" इति चामरः ॥ इदमुपसंहारस्याप्युपलक्षणम् ॥ "ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वतः । दद्यत्यनः क्षतं पूर्वं परस्ताच्च विशेषतः" इति निरुक्तपरिशिष्टयोर्यास्कः ॥ नीयन्त एभिरर्थविशेषा इति न्यायाः स्वराः । उक्तं च—"स्वरविशेषादर्थप्रतिपत्तिः" । "यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति ॥ यासां गिरां त्रिभिर्न्यायैरुदात्तानुदात्तस्वरितैः स्वरैरुदीरणमुच्चारणम् । यासां कर्म । प्रतिपाद्यमित्यर्थः । यज्ञो ज्योतिष्टोमादिः । न तु चैत्यवन्दनादिरिति भावः । फलं स्वर्गः । कर्मद्वारेति शेषः । कर्मस्वर्गौ ब्रह्मापवर्गयोरप्युपलक्षणे । त्वं तासां गिराम् । वेदानामित्यर्थः । प्रभवत्यस्मात् इति प्रभवः कारणम् । प्रणेता स्मर्ता वा मतभेदेन ॥ १२ ॥

---

(६) गुरुर्लघुः । (७) उद्गीथः ।

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥ १३॥
त्वं पितृणामपि पिता देवानामपि देवता।
परतोऽपि परश्चासि विधाता वेधसामपि॥१४
त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः।

सांख्यमतेन स्तुवन्ति—

त्वामिति॥ हे भगवन्। त्वां पुरुषस्यार्थौ भोगापवर्गरूपस्तदर्थं प्रवर्तत इति पुरुषार्थप्रवर्तिनीं तां प्रकृतिं त्रैगुण्यात्मकं मूलकारणम्॥ "प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इति यादवः॥ आमनन्ति कथयन्ति॥ "म्ना अभ्यासे" इति धातोर्लट्। "पाघ्राध्मास्थाम्ना—" इत्यादिना मनादेशः॥ प्रकृतिपुरुषभेदाग्रहणात्प्रकृतिपुरुषाभेदव्यपदेशः। त्वामेव तां प्रकृतिं साक्षित्वेन पश्यतीति तद्दर्शिनमुदासीनं कूटस्थं पुरुषं विदुर्विदन्ति॥ "विदो लटो वा" इति झेर्जुसादेशः॥ "अजामेकां लोहितशुक्लकृष्णाम्" इति श्रुतिरत्र प्रमाणम्॥ १३॥

त्वमिति॥ हे भगवन्। त्वं पितृणामग्निष्वात्तादीनामपि पिता। तेषामपि तर्पणीय इत्यर्थः। देवानामिन्द्रादीनामपि देवता। तेषामपि यजनीय इत्यर्थः। परतोऽपि परश्चासि। सर्वोत्तरोऽसीत्यर्थः॥ "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महान्परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति सर्वोत्तरत्वाभिधानात्॥ वेधसां दक्षादीनामपि विधाता स्रष्टासि॥ १४॥

त्वमेवेति॥ शश्वद्भवः शाश्वतः॥ शैषिकोऽण्प्रत्ययः। यद्यपि "कालाट्ठञ्" इति ठञपवादः। अतएव सूत्रकारस्यापि प्रयोगः—"येषां च विरोधः शाश्वतिकः" इति। तथापि प्रयोगवशात्साधुरिति वामन इति॥ शाश्वतः प्रयुक्तः शाश्वतस्त्वमेव। हूयत इति हव्यं हविः आज्यादिकम्। जुहोतीति

(८)वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम्
॥ १५ ॥

इति तेभ्यः स्तुतीः श्रुत्वा (९)यथार्था हृदयङ्गमाः ।
प्रसादाभिमुखो (१)वेधाः प्रत्युवाच दिवौकसः ॥१६॥
पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥१७॥

होता यजमानश्चासि । भोज्यमभ्यवहार्यमन्नम् ॥ "भोज्यं भक्ष्ये" इति निपातनात् कुत्वाभावः । भोक्ता अन्नादश्चासि । वेद्यं साक्षात्कार्यं वस्तु वेदिता साक्षात्कर्ता चासि । ध्याता स्मर्ता च यत्परं वस्तु ध्येयं तच्चासि । साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहो ध्यानम् ॥ १५ ॥

इतीति ॥ वेधा ब्रह्मेति तेभ्यो देवेभ्यः ॥ "आख्यातोपयोगे" इत्यपादानत्वात्पञ्चमी ॥ यथार्थाः सत्या अतएव हृदयं गच्छन्तीति हृदयङ्गमा मनोहराः ॥ खच्प्रकरणे "गमेः सुप्युपसंख्यानम्" इति खच्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः ॥ स्तुतीः स्तोत्राणि श्रुत्वा प्रसादाभिमुखोऽनुग्रहप्रवणः सन् । दिवौकसो देवान् प्रत्युवाच ॥ १६ ॥

अथ कविराह—

पुराणस्येति ॥ द्रव्यगुणक्रियाजातिभेदेन चत्वारोऽवयवा यस्या इति चतुष्टयी चतुर्विधा ॥ "संख्याया अवयवे तयप्" इति तयप् । "टिड्ढाणञ्द्वयसच्—" इत्यादिना ङीप् ॥ शब्दानां प्रवृत्तिर्वैखरीप्रमुखा वाग्वृत्तिः । उक्तं च—"वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा । द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी" इति । पुराणस्य पुरातनस्य ॥ पृषोदरादित्वात्

(८) वेद्यं वेदयिता, वेद्यस्य वेदिता ।

(९) यथार्थं ।  (१) ब्रह्मा ।

स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य वः।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥१८॥

(२)किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा।
हिमक्लिष्ट(३)प्रकाशानि ज्योतींषीव मुखानि वः ॥ १९ ॥

साधुः ॥ कवेः कवयितुस्तस्य ब्रह्मणश्चतुर्भिर्मुखैः समीरिता सती ॥ "तद्धितार्थ—" इत्यादिनोत्तरपदसमासः ॥ समाहारे चतुर्मुखीति स्यात् ॥ चरितार्थान्वर्थाभीत्। चतुर्मुखोच्चारणाच्चातुर्विध्यं सफलमासीदित्यर्थः ॥ १७ ॥

भगवानाह—

स्वागतमिति ॥ हे प्राज्यविक्रमाः प्रभूतपराक्रमा देवाः ॥ "प्राज्यं भूरि प्रभूतं च" इति यादवः ॥ स्वान् स्वकीयानधीकारान् नियोगान् ॥ "उपसर्गस्य घञि—" इति वा दीर्घः ॥ प्रभावैः सामर्थ्यैरवलम्ब्याश्रित्य। यथाधिकारं स्थित्वापीत्यर्थः। युगपत्समकालं प्राप्तेभ्यः। युगपत्प्राप्त्या महत्कार्यमनुमीयत इति भावः। युगबाहुभ्यः। दीर्घबाहुभ्य इत्यर्थः। आजानुबाहुत्वं भाग्यलक्षणम्। वो युष्मभ्यम् ॥ "बहुवचनस्य वस्नसौ" इति वसादेशः। "कर्मणा यमभिप्रैति—" इत्यत्र कर्मपदेन क्रियाग्रहणात्संप्रदानत्वम् ॥ स्वागतं शोभमानमागमनम्। काकुरत्रानुसन्धेया ॥ १८ ॥

किमिति ॥ "वत्साः" इत्युत्तरश्लोकीयं (४।२८) सम्बोधनमत्राप्यनुषञ्जनीयम्। हे वत्साः पुत्रकाः। हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि ज्योतींषि नक्षत्राणीव ॥ "दीप्तितारा हुताशेषु ज्योतिः" इति शाश्वतः ॥ वो युष्माकं मुखानि पुरा यथा पूर्वमिवात्मीयां द्युतिं न बिभ्रति। इदं किम्। किं

---

(२) इमाम्, इति। (३) -प्रभाणि।

प्रशमादर्चिषामेत(४)दनुद्गीर्णसुरायुधम् ।
वृत्रस्य हन्तुः कुलिशं (५)कुण्ठिताश्रीव लक्ष्यते २

किं चाय(६)मरिदुर्वारः पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥२१॥

कुवेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥

निबन्धनमित्यर्थः ॥ किमिदमित्यनेन वाक्यार्थः परामृश्यते ॥ १८ ॥

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः—

प्रशमादिति ॥ अर्चिषां तेजसां प्रशमान्निर्वाणादनुद्गीर्णं सुरायुधम् । अनुदितचित्रप्रभमित्यर्थः । एतद् वृत्रस्य हन्तुरिन्द्रस्य कुलिशं वज्रम् । कुण्ठिता अश्रयो यस्य तत् कुण्ठिताश्रि कुण्ठितकोटीव लक्ष्यते दृश्यते ॥ २० ॥

किं चेति ॥ किं चायमरिदुर्वारो रिपुदुष्प्रधर्षः प्रचेतसो वरुणस्य ॥ "प्रचेता वरुणः पाशी" इत्यमरः ॥ पाणौ पाशो रज्ज्वायुधविशेषः । मन्त्रेण गारुडेन हतवीर्यस्य प्रतिबद्धशक्तेः फणिनः सर्पस्य दैन्यं शोच्यत्वमाश्रितः ॥ अत्र फणिनिष्ठदैन्यस्य पाशेऽसम्भवाद्दैन्यमिव दैन्यमिति कल्पनादसम्भवद्वस्तुसम्बन्धो निदर्शनालङ्कारः ॥ २१ ॥

कुवेरस्येति ॥ अपविद्धा त्यक्ता गदा येन सोऽपविद्धगदः । अतएव भग्नशाखो द्रुम इव स्थितः कुवेरस्य बाहुर्मनःशल्यम् । दुःखहेतुत्वान्मनसः शल्यप्रायमित्यर्थः । पराभवम् । शत्रुकृतमिति शेषः । शंसतीव कथयतीव । लक्षणया अनुमापयतीत्यर्थः ॥ बाहौ मुख्यकथनस्यासम्भवादिवशब्दोऽप्यत एव ॥२२॥

(४) अनूढ़ूर्ण, अनुगूर्ण । (५) कुण्ठितश्री । (६) अपि ।

यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥२३

अमी च कथमादित्याः प्रतापक्षतिशीतलाः।
चित्रन्यस्ता इव (७)गताः प्रकामालोक(८)नीय-
ताम् ॥ २४ ॥

पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥

यम इति ॥ अस्तं नाशमिताः प्राप्ताः ॥ अस्तमिति मका-रान्तमव्ययम् ॥ तस्य "द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति समासः ॥ अस्तमितास्त्विषो यस्य तेन निस्तेजस्केन दण्डेन यमोऽपि भूमिं विलिखन्नमोघेऽपि। प्राग्गिति भावः। अस्मिन् दण्डे निर्वाणालातस्य शान्तोल्मुकस्य। अलातं नाम भूलेखनशलाका तस्य यल्लाघवं क्षैव्यं तत् कुरुते ॥ "अलातमुल्मुकं ज्ञेयम्" इति हलायुधः ॥ "निर्वाणोऽवाते" इति निपातनान्निष्ठानत्वम् ॥ अत्रापि लाघवमिव लाघवमिति कल्पनान्निदर्शनालङ्कारः ॥ २३ ॥

अमी इति ॥ प्रतापक्षत्या तेजसां क्षयेण शीतला अमी आदित्याश्च। द्वादशेति शेषः। कथम्। केन हेतुना इत्यर्थः। चित्रन्यस्ताश्चित्रलिखिता इव। प्रकाममत्यन्तमालोकनीयतां द्रष्टव्यतां गताः प्राप्ताः ॥ २४ ॥

पर्याकुलेति ॥ मरुतां वायूनाम्। सप्तसप्तानामिति शेषः। पर्याकुलत्वात् स्खलितगतित्वाद्धेतोर्वेगस्य भङ्गोऽम्भसां जलानां प्रतीपगमनात्। उत्तानावरोहादित्यर्थः। ओघस्य संरोधः प्रवाहप्रतिबन्ध इवानुमीयते ॥ २५ ॥

---

(७) आयताः। (८) दर्शिनः, दर्शनम्।

आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्धानः (६)क्षतहुङ्कारशंसिनः ॥२६

लब्धप्रतिष्ठाः प्रथमं (१)यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥

तद्‌ ब्रूत वत्साः किमितः (२)प्रार्थयध्वं समागताः
मयि सृष्टिर्हि (३)लोकानां रक्षा युष्मास्ववस्थिता
॥ २८ ॥

आवर्जितेति ॥ आवर्जितेषु परिभवदुःखावनम्रेषु जटानां मौलिषु जटाजूटेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयश्चन्द्ररेखा येषां ते तथोक्ताः। रुद्राणामपि। एकादशानामिति शेषः। मूर्धानः क्षतं हुङ्कारं शंसन्तीति तथोक्ताः। हुङ्कारक्षत्यनुमापका इत्यर्थः। हुङ्कारशस्त्रा हि रुद्रा इति भावः॥ २६ ॥

लब्धेति॥ प्रथमं पूर्वं लब्धप्रतिष्ठा लब्धस्थितयः। लब्धावकाशा इत्यन्यत्र। यूयं बलवत्तरैः पौरुषातिरेकात् प्रबलतरैः। निरवकाशैरित्यपरत्र। परैः शत्रुभिरुत्सर्गाः सामान्यशास्त्राणि "मा हिंस्यात्" इत्येवमादीनि। अपोद्यन्त एभिरित्यपवादैः "गामालभेत" इत्यादिभिर्विशेषशास्त्रैरिव किं कृतव्यावृत्तयः कृतप्रतिष्ठाभङ्गाः। कृतविषयसङ्कोचरूपबाधा इत्यन्यत्र॥ "विषयसङ्कोच एव बाधः" इत्याचार्याः। निषेधशास्त्रस्य वैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनाद्विषयसङ्कोच इत्यलमतिगहनावगाहनेन॥ २७ ॥

तदिति॥ तत् तस्मात्कारणात्। हे वत्साः पुत्रकाः॥ "वत्सस्तर्णकपुत्राद्योर्वर्षे वत्सं तु वक्षसि" इति विश्वः॥ स्वयं पितामहत्वाद्‌ वत्सा इत्यामन्त्रयते। संभूयागताः समागता

---

(६) क्षताहङ्कार। (१) न खलु स्थ बलोत्तरैः।
(२) प्रार्थयध्वे। (३) भूतानाम्।

ततो मन्दानिलोद्धूतकमलाकरशोभिना।
गुरुं नेत्रसहस्रेण (४)नोदयामास (५)वासवः २९
स (६)द्विनेत्रं हरेश्चक्षुः (७)सहस्रनयनाधिकम्।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥३०॥
एवं (८)यदात्थ भगवन्नामृष्टं नः परैः पदम्।

इतो मत्तः किं प्रार्थयध्वम्। किमिच्छतेत्यर्थः। ब्रूत। लोकरक्षणे यूयमेव कर्तार इत्याह—मयि लोकानां सृष्टौ रक्षा युष्मास्ववस्थिता। अतस्तदर्थमपि नास्ति मदपेक्षेत्यर्थः ॥२८॥

तत इति॥ ततो भगवत्प्रश्नानन्तरं वासव इन्द्रो गुरुं बृहस्पतिम्॥ "गुरू गीष्पतिपित्राद्यौ" इत्यमरः॥ मन्दानिलोद्धूतो यः कमलाकरः स इव शोभत इति तेन तथोक्तेन नेत्राणां सहस्रेण नोदयामास प्रेरयामास। सहस्रग्रहणमास्थातिशयार्थम्। अनिमिषाणामपि प्रयत्नवशादक्षिस्पन्दो न विरुध्यते ॥ २९ ॥

स इति॥ हरेरिन्द्रस्य॥ "इन्द्रो दुश्च्यवनो हरिः" इति हलायुधः॥ सहस्रान्नयनेभ्योऽधिकं सहस्रनयनाधिकम्। तदगोचरदर्शित्वादिति भावः। द्वे नेत्रे यस्य तद् द्विनेत्रम्। प्रसिद्धाच्चक्षुषोऽयं विशेष इत्यर्थः। चक्षुश्चक्षुर्भूतः॥ चक्षुष्ट्वारोपस्य प्रकृतोपयोगात् परिणामालङ्कारः॥ स वाचस्पतिः॥ कस्कादित्वादलुक्सत्वे। "षष्ठ्याः पतिपुत्र—" इत्यादिना सत्वमिति स्वामी तन्न छन्दोविषयत्वात्॥ प्राञ्जलिः सन्। जलजासनं ब्रह्माणमिदमुवाच ॥ ३० ॥

एवमिति॥ हे भगवन् षड्गुणैश्वर्यसम्पन्न। यदात्थ "क्षतव्याहृतयः परैः" ( २। २७ ) इति यद् ब्रवीषि॥ ब्रुवः पञ्चानाम्—" इत्यादिनाहादेशः। "वर्तमानसामीप्ये वर्तमा-

(४) चोदयामास, प्रेरयामास। (५) वृत्रहा।
(६) द्विनेत्रः। (७) दशचक्षुःशताधिकम्। (८) यथा।

प्रत्येकं विनियुक्तात्मा कथं न (८)ज्ञास्यसि प्रभो ॥ ३१ ॥

(१)भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३२ ॥

पुरे तावन्तमेवास्य (२)तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥३३॥

नवहा" इति वर्तमानप्रयोगः ॥ वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह । आहेति भूते णलन्तभ्रमवर्दिति । आहेत्युपलक्षणम् ॥ तदेवं सत्यम् । नोऽस्माकं पदमधिकारः परैः शत्रुभिरामृष्टमाक्रान्तम् । हे प्रभो प्रत्येकं प्रतिपुरुषं विनियुक्तात्मा प्रवेशितस्वरूपः । सर्वान्तर्यामीत्यर्थः । कथं न ज्ञास्यसि न वेत्सि ॥ वर्तमानेऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः ॥ "अपह्नवे ज्ञः"। "अकर्मकाच्च" इत्यात्मनेपदविकल्पः ॥ ३१ ॥

उक्तमेव प्रपञ्चयति—

भवदिति ॥ भवतस्त्वत्तो लब्धेन वरेण उदीर्ण उद्धतः । तारक इत्याख्या नामधेयं यस्य स तारकाख्यः । महानसुरो महासुरः ॥ "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति तत्पुरुषः ॥ धूमकेतुरुत्पातविशेष इव लोकानामुपप्लवायोपद्रवायोत्थित उत्पन्नः ॥ ३२ ॥

पुर इति ॥ अस्य तारकस्य पुरे रविः सूर्यस्तावन्तं तावन्मात्रमेवातपं तनोति । यावन्मात्रेण यावतैव । यावती मात्रा मितिर्यस्य यावन्मात्रं तेन वा । अल्पपरिमाणेनेत्यर्थः ॥ "मात्रा परिच्छेदे । अल्पे च परिमाणे सा मात्रं मात्र् कात्स्न्येऽवधारणे" इत्यमरः ॥ दीर्घिकासु क्रीडावापीषु कमलानामुन्मेषो विकाशः साध्यते निष्पाद्यते । कठोरकिरणोऽपि मन्दोष्णः सन्नेव तद्भीत्या पुरे प्रकाशत इत्यभिप्रायः ॥ ३३ ॥

---

(८) ज्ञास्यति प्रभुः । (१) त्वया दत्त, भवदत्त । (२) करोति ।

सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते केवलां लेखां हरचूडामणीकृताम् ॥३४॥
व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ३५
पर्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥
तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।

सर्वाभिरिति ॥ चन्द्रः तं तारकं सर्वदा । कृष्णपक्षेऽपीत्यर्थः । सर्वाभिः कलाभिर्निषेवते ॥ "कला तु षोडशो भागः" इत्यमरः ॥ केवलां हरचूडामणीकृतां शिवशिरोमणीकृतां लेखां नादत्ते न गृह्णाति ॥ ३४ ॥

व्यावृत्तेति ॥ वायुः । स्तेनस्य भावः कर्म वा स्तेयं चौर्यम् ॥ "स्तेनाद्यन्नलोपश्च" इति यत्प्रत्ययो नलोपश्च ॥ कुसुमानां स्तेयं तस्मात् स्तेयाभियोगाद्दण्डाद्वा साध्वसं भयं तस्माद्धेतो-रुद्याने व्यावृत्तगतिः । निवृत्तोद्यानसञ्चारः सन्नित्यर्थः ॥ सापेक्षत्वेऽपि गमकत्वात्समासः ॥ तत्पार्श्वे तत्समीपे । तालस्य वृन्तैरुद्ग्रथ्यते । तालस्येव वृन्तमस्येति वा तालवृन्तं तस्या-निलाद् व्यजनसञ्चारपवनात् अधिकं यथा तथा न वाति ॥ "व्यजनं तालवृन्तकम्" इत्यमरः ॥ ३५ ॥

पर्यायेति ॥ ऋतवः वसन्तादयः पर्यायसेवामुत्सृज्य पुष्पाणां सम्भारे संग्रहे तत्पराः । आसक्ताः सन्त इत्यर्थः ॥ "तत्परे प्रसितासक्तौ" इत्यमरः ॥ उद्यानपालैः उद्यानाधि-कृतैः सामान्यं साधारणं यथा भवति तथा तं तारकम् उपासते सेवन्ते । शीतोष्णादिदोषप्रकाशनं तु दूरापास्तमि-त्यर्थः ॥ ३६ ॥

तस्येति ॥ सरितां पतिः समुद्रस्तस्य तारकस्योपायनानां प्राभृतानां योग्यानि ॥ "प्राभृतं तु प्रदेशनम् । उपायनम्"

कथमप्यम्बुसामन्तरा निष्पत्तेः प्रतीक्ष्यते ॥ ३७ ॥

ज्वलन्मणिशिखाश्चैनं (३)वासुकिप्रमुखा निशि ।
स्थिरप्रदीपतामेत्य भुजङ्गाः पर्युपासते ॥ ३८ ॥

तत्कृतानुग्रहापेक्षी (४)तं मुहुर्दूतहारितैः ।
अनुकूलयतीन्द्रोऽपि (५)कल्पद्रुमविभूषणैः ॥३९॥

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत् (६)प्रत्यपकारेण नोपकारेण दुर्जनः ॥४०॥

इत्यमरः ॥ रत्नान्यम्बुसामन्तरा निष्पत्तेः परिपाकपर्यन्तम् ॥ विकल्पादसमासः ॥ कथमपि महता यत्नेन प्रतीक्ष्यते । कदा वा परिपच्येरन्नित्येकाग्रेण पालयतीत्यर्थः । ३७ ॥

ज्वलदिति ॥ किञ्चेति चार्थः । ज्वलन्त्यो मणीनां शिरोरत्नानां शिखा ज्वाला येषां ते वासुकिप्रमुखा भुजङ्गाः सर्पाः । सिद्धाश्च ध्वन्यन्ते ॥ "भुजङ्गः सिद्धसर्पयोः" इत्यमरः ॥ निशि स्थिरप्रदीपतामनिर्वाणदीपत्वमेत्य एनं तारकं पर्युपासते परिवृत्य सेवन्ते ॥ ३८ ॥

तत्कृतेति । इन्द्रोऽपि तेन तारकेण कृतं तत्कृतमनुग्रहं प्रसादमपेक्षत इति तथोक्तः सन् । मुहुर्दूतहारितैर्दूतप्रापितैः कल्पद्रुमाणां विभूषणैः । तत्प्रसूनैरित्यर्थः । तं तारकमनुकूलयत्यनुकूलं करोति ॥ ३९ ॥

इत्थमिति ॥ इत्थमुक्तप्रकारेण रविशशिपवनोदधिभुजङ्गसुरेन्द्रैराराध्यमानोऽपि भुवनत्रयं क्लिश्नाति पीडयति । तथाहि । दुर्जनः प्रत्यपकारेण प्रतीकारेणैव शाम्येच्छान्तो भवेत् । उपकारेण तु न शाम्येत् । प्रत्युत प्रकुप्यतीति भावः ॥ ४० ॥

---

(३) वासुकिप्रहिताः । (४) प्रत्यहम् ।
(५) स्वर्गद्रुम । (६) प्रत्युपकारेण ।

तेनामरवधू(८)हस्तैः सदयालूनपल्लवाः।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः॥४१
वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः।
चामरैः सुरबन्दीनां बाष्पशीकरवर्षिभिः॥४२॥
उत्पाट्य मेरुशृङ्गाणि क्षुसानि हरितां खुरैः।
आक्रीड़पर्वतास्तेन कल्पिताः स्वेषु वेश्मसु॥४३॥
मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम्।

तेनेति॥ तेन तारकेण अमरवधूहस्तैः। सुकुमारैरिति भावः। तैरपि सदयम् आलूना अवतंसार्थं छिन्नाः पल्लवा येषां ते नन्दनद्रुमाः। छेदाश्च पाताश्च छेदपातास्तेषाम्। अभिजानन्तीत्यभिज्ञाः॥ ज्ञयोगात् कर्मणि षष्ठी॥ क्रियन्ते॥४१॥

वीज्यत इति॥ हि यस्मात् कारणात् स तारकः संसुप्तः सन्। श्वाससाधारणो निश्वाससमानोऽनिलो येषां तैः। ततोऽप्याधिक्ये निद्राभङ्गभयादिति भावः। बाष्पशीकरवर्षिभिः। तासां स्त्रीणां रोदनस्यायमवसर इति भावः। सुरबन्दीनां सुरप्रग्रहस्त्रीणां सम्बन्धिभिः॥ "प्रग्रहापग्रहौ बन्द्याम्" इत्यमरः॥ चामरैः वीज्यते। ४२॥

उत्पाट्येति॥ तेन तारकेण हरितां सूर्याश्वानाम्॥ "हरित् सूर्ये च सूर्याश्वे वर्णे च हरिते दिशि" इति विश्वः॥ खुरैः शफैः क्षुसानि चूर्णितानि। एतेन तेषामत्यौन्नत्यं सूचितम्। मेरुशृङ्गाण्युत्पाट्य स्वेषु वेश्मसु। वेश्मस्विति बहुवचनेनास्य भुवनत्रयनिवासः सूचितः। आक्रीड़न्त एष्वित्याक्रीड़ाः। ते च ते पर्वताः कल्पिताः कृताः॥ ४३॥

मन्दाकिन्या इति॥ सांप्रतं संप्रति मन्दाकिन्या भागीरथ्या दिग्वारणानां दिग्गजानां मदैराविलं कलुषं पयो जल-

---

(८) -हस्त।

हैमाम्भोरुहसस्यानां तद्वाप्यो धाम सांप्रतम् ॥४४

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात्पथि ॥४५॥

यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी (८)मिषतामाच्छिनत्ति नः
॥ ४६ ॥

उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च ।

मेव। ग्रिष्यत इति ग्रेषं ग्रिष्टम् ॥ कर्मण्यण्प्रत्ययः ॥ "त्रिष्व-न्यत्रोपयुज्यते" इति नपुंसकत्वम् ॥ तर्हि कनककमलानि क्व गतानीत्याह—हैमेति। हैमाम्भोरुहाण्येव सस्यानि तेषां तु तस्य वाप्यः तद्वाप्य एव धाम स्थानम्। सर्वाण्युत्पाट्य स्वदीर्घिकास्वेव प्रतिरोपितवानित्यर्थः ॥ ४४ ॥

भुवनेति ॥ तस्य तारकस्यापातात्समापत्तेर्भयाद्विमानानां पथि खिलीभूतेऽप्रहतीभूते सति ॥ "द्वे खिलाप्रहते समे" इत्यमरः ॥ स्वर्गिभिः देवैः भुवनानामालोकने प्रीतिः नानुभू-यते ॥ ४५ ॥

यज्वभिरिति ॥ यज्वभिर्विधिवदिष्टवद्भिः ॥ "यज्वा तु विधिनेष्टवान्" इत्यमरः ॥ "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्र-त्ययः ॥ विततेष्वध्वरेषु यज्ञेषु संभृतं दत्तं हव्यं हविर्मायी मायावी ॥ व्रीह्यादित्वादिनिप्रत्ययः ॥ स तारको नोऽस्माकं मिषतां पश्यताम्। पश्यत्सु सत्स्वित्यर्थः ॥ "षष्ठी चानादरे" इति षष्ठी ॥ जातवेदा वह्निरेव मुखं तस्माज्जातवेदोमुखात् आच्छिनत्ति। आच्छिद्य गृह्णातीत्यर्थः ॥ ४६ ॥

उच्चैरिति ॥ किञ्चेति चार्थः। तेन तारकेणोच्चैर्महत उच्चैः-श्रवा नाम। हयो रत्नमिव हयरत्नम् अश्वश्रेष्ठः ॥ "रत्नं श्रेष्ठे

---

(८) पिबताम्।

देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥ ४७ ॥

तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः।
वीर्यवन्त्यौषधानीव विकारे सान्निपातिके ॥४८॥

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा।
हरिचक्रेण तेनास्य कण्ठे (९)निष्कमिवार्पितम्
॥ ४९ ॥

मणावपि" इति विश्वः ॥ अस्य शुभ्रत्वादुत्प्रेक्षते—देहबद्धं बद्धदेहम्। मूर्तिमदित्यर्थः ॥ आहिताग्न्यादित्वान्निष्ठायाः परनिपातः ॥ चिरकालार्जितमिन्द्रस्य यश इवाहार्यपहृतम् ॥४७॥

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह—

तस्मिन्निति॥ क्रूरे घातुके॥ "नृशंसो घातुकः क्रूरः" इत्यमरः॥ तस्मिन्नसुरे नोऽस्माकं सर्वे उपायाः सन्निपातदोषत्रयस्य प्रकोपजे सान्निपातिके विकारे ज्वरादौ॥ "सन्निपाताच्च" इति वक्तव्याट्ठक्॥ वीर्यवन्ति सारवन्ति औषधानीव प्रतिहतक्रिया विफलप्रयोगा भवन्ति॥ ४८॥

तदेव प्रतिहतक्रियत्वमाह—

जयाशेति॥ किञ्चेति चार्थः। नूनमनेन हरिचक्रेण वयं जेष्याम इति यत्र हरिचक्रे अस्माकं जयाशा विजयाशंसा। आसीदिति शेषः। प्रतिघातेन प्रतिहत्योत्थितार्चिषोद्गततेजसा तेन हरिचक्रेण विष्णोः सुदर्शनेनास्य तारकस्य कण्ठे निष्कमुरोभूषणमर्पितमिवेत्युत्प्रेक्षा। स्वयमेव निष्कमिव स्थितमित्यर्थः। तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं तदपि नष्टशक्ति जातमिति भावः॥ "साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले। दीनारेऽपि च निष्कोऽस्त्री" इत्यमरः॥ ४९॥

---

(९) निष्क इवार्पितः।

तदीयास्तोयदेष्वद्य पुष्करावर्तकादिषु ।
अभ्यस्यन्ति (२)तटाघातं निर्जितैरावता गजाः ५०

तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५१ ॥

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो वन्दीमिव जयश्रियम् ॥५२॥

तदीया इति ॥ अद्य सम्प्रति निर्जित ऐरावतो यैस्ते तथोक्ताः । तस्य तारकस्येमे तदीया गजाः पुष्कराश्च आवर्तकाश्च नामादयो येषां तेषु तोयदेषु मेघेषु तटाघातं वप्रक्रीड़ाम् अभ्यस्यन्ति ॥ ५० ॥

तदिति ॥ तत् तस्मात् कारणात् । हे विभो स्वामिन् । मोक्तुं भवं त्यक्तुमिच्छवो मुमुक्षवो विरक्ता भवस्य संसारस्य शान्तये निवृत्तये कर्मैव बन्धस्तं छिनत्तीति कर्मबन्धच्छित्तं धर्ममिव । आत्मज्ञानहेतुभूतमिति शेषः । "तमेव विदित्वातिमृत्युमेति" इति ज्ञानादेव मुक्तिः ॥ तस्य तारकस्य शान्तये नाशाय । सेनां नयतीति सेनानीश्चमूपतिः ॥ "सत्सूद्विष—" इत्यादिना क्विप् ॥ तं सेनान्यं कञ्चित् स्रष्टुमिच्छामः । वयमिति शेषः ॥ ५१ ॥

सेनानीसृष्टेः फलमाह—

गोप्तारमिति ॥ सुरसैन्यानां देवतासेनानां गोप्तारं रक्षितारं यं सेनान्यं पुरस्कृत्य पुरोधाय ॥ "पुरोऽव्ययम्" इति गतित्वात् "नमस्पुरसोर्गत्योः" इति सकारः ॥ गां पृथ्वीं त्रायन्त इति गोत्रास्तान् भिनत्तीति गोत्रभिदिन्द्रो जयश्रियं वन्दीमिव वन्दीकृतां स्त्रियमिव शत्रुभ्यः सकाशात्प्रत्यानेष्यति प्रत्याहरिष्यति । तं स्रष्टुमिति पूर्वेण सम्बन्धः ॥ ५२ ॥

(२) तटाघातान् ।

(३)वचस्यवसिते (४)तस्मिन् ससर्ज गिरमात्मभूः।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय (५)सा
॥ ५३ ॥

सम्पत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम्।
न त्वस्य (६)सिद्धौ यास्यामि सर्गव्यापारमात्मना
॥ ५४ ॥

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥५५॥

वचसीति॥ तस्मिन् वाक्पत्यौ वचस्यवसिते परिसमाप्ते सत्यात्मभूर्ब्रह्मा गिरं वाचं ससर्ज जगादेत्यर्थः। सा गौः सौभाग्येन मनोहरत्वेन॥ "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः॥ गर्जितादृर्जितस्य वानन्तरं प्रवृत्तां वृष्टिं जिगाय जितवती। गर्जितपरत्वाद् वृष्टेरिव तद्विज्ञापनफलत्वाद्गिरः सुभगत्वमिति भावः॥ ५३॥

सम्पत्स्यत इति॥ अयं वो युष्माकं कामो मनोरथः सेनानीरूपः सम्पत्स्यते सेत्स्यति। कश्चित् कियानपि कालः प्रतीक्ष्यताम्। तु किं तु अस्य सेनान्यः सिद्धौ विषय आत्मना स्वयं सर्गः सृष्टिरेव व्यापारस्तं न यास्यामि। नाहं स्रक्ष्यामीत्यर्थः ॥ ५४॥

कुत इत्याशङ्क्याह—

इत इति॥ इतो मत्त एव प्राप्तश्रीर्लब्धोदयः स दैत्यस्तारकासुर इतो मत्त एव क्षयं नाशं नार्हति। तथाहि। अन्यो वृक्षस्तावदास्ताम्। विषस्य वृक्षो विषवृक्षोऽपि संवर्ध्य कुतश्चित्कारणात्सम्यग्वर्धयित्वा स्वयं छेत्तुमसाम्प्रतमनर्हः॥ अस्मा-

(३) वचस्युपरते।　(४) तस्य।
(५) या।　(६) सिद्धेय।

(७)हृतं तेनेदमेव (८)प्राक्षया चास्मै प्रतिश्रुतम् ।
वरेण (९)शमितं लोकानलं दग्धुं हि तत्तपः ॥५६
संयुगे सांयुगीनं (१)तमुद्यतं प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ ५७ ॥
स हि देवः परं ज्योतिस्तमःपारे (२)व्यवस्थितम् ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥५८॥

ऋतमित्यनेन निपातेनाभिहितत्वाद्वृत्र इति द्वितीयान्तो न भवत्यनभिहिते कर्मणि द्वितीयाभिधानात् । यथाह वामनः— "निपातेनाप्यभिहिते कर्मणि न विभक्तिः परिगणनस्य प्रायिकत्वात्" इति ॥ ५५ ॥

हृतमिति ॥ प्राक् पूर्वं तेनासुरेणेदमेव देवैरवध्यत्वमेव हृतं प्रार्थितम् । मया चास्मै तारकाय प्रतिश्रुतं प्रतिज्ञातम् ॥ "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता" इति सम्प्रदानत्वाच्चतुर्थी ॥ कर्तव्यं चैतदित्याह—लोकान्दग्धुमलं शक्तम् ॥ "पर्याप्तिवचनेष्वलमर्थेषु" इति तुमुन्प्रत्ययः ॥ तस्य तपस्तत्तपो वरेण वरदानेन शमितं हि । मयेति शेषः ॥ ५६ ॥

संयुग इति ॥ संयुगे युद्ध उद्यन्तं व्याप्रियमाणम् । संयुगे साधु सांयुगीनम् ॥ "प्रतिजनादिभ्यः खञ्" इति खञ्प्रत्ययः ॥ तं तारकं निषिक्तस्य क्वचित् क्षेत्रे क्षरितस्य ॥ "नीलः कण्ठे लोहितश्च केशेष्विति नीललोहित इति पुराणम्" इति स्वामी ॥ तस्य नीललोहितस्य धूर्जटे रेतसः शुक्रस्यांशादृतेऽंशं विनान्यः कः प्रसहेत अभिभवेत् ॥ "प्रसहनमभिभवे" इति वृत्तिकारः ॥ ५७ ॥

कथमसावीदृक्शक्तिरित्याह—

स इति ॥ स देवो नीललोहितस्तमसः पारे परतो व्यव-

---

(७) हृतः । (८) प्रह्म, प्राटी । (९) प्रशमितम् ।
(१) तमुद्यन्तम्, तं युद्धन्तम् । (२) प्रतिष्ठितम् ।

उमारूपेण ते यूयं संयमस्तिमितं मनः।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥५९॥
उभे एव क्षमे (३)वोढुमुभयोर्वीजमाहितम्।
सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम ॥६०
तस्यात्मा शितिकण्ठस्य (४)सैनापत्यमुपेत्य वः।

स्थितं तमोगुणातीतं परं ज्योतिः परमात्मा हि। अतएव मया
परिच्छिन्नप्रभावर्धिरवगाढमहिमातिशयो न भवति तथा
विष्णुना च न। अतस्तस्यासाध्यं नास्तीत्यर्थः ॥ ५८ ॥

सम्प्रति तदंशोत्पत्तावुपायं दर्शयति—

उमेति ॥ ते कार्यार्थिनो यूयं संयमस्तिमितं समाधिनि-
श्चलं शम्भोर्मन उमारूपेणोमासौन्दर्येण ॥ "रूपं स्वभावे सौन्दर्ये
नाणके पशुशब्दयोः। ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि"
इति विश्वः ॥ अयस्कान्तेन मणिविशेषेण ॥ "कस्कादिषु च"
इति सकारः ॥ लोहवत् अयोधातुमिव ॥ "तेन तुल्यं क्रिया
चेद्वतिः" इति वतिप्रत्ययो द्रष्टव्यः ॥ आक्रष्टुमाहर्तुं यतध्वमु-
द्युक्ता भवत ॥ ५९ ॥

न च गत्यन्तरमस्तीत्याह—

उभे इति ॥ उभयोः शम्भोर्मम चाहितं निषिक्तं वीजं तेजो
वोढुं सोढुं सा वोमा शम्भोरष्टमूर्तेस्तस्येयं तदीया जलमयी
मूर्तिर्वा मम। उभे एव क्षमे। न तृतीयेत्यर्थः ॥ वाशब्दो द्वन्द्वार्थे
न त्वन्यार्थे। एतदेवोदाहृत्येत्यमेव व्याख्यातं गणव्याख्याने ॥ अत्र
दीपकालङ्कारः प्राकरणिकयोरुमामहेश्वरयोरप्राकरणिकयो-
रीशजलमूर्त्योश्चौपम्यस्य गम्यत्वात्। यथाह भोजराजः—
"प्रस्तुतानामप्रस्तुतानां चौपम्यस्य गम्यत्वे दीपकम्" इति। न
चेयं तुल्ययोगिता तस्याः केवलप्रस्तुतविषयत्वेन केवलाप्रस्तुत-
विषयत्वेन चोत्थानादिति ॥ ६० ॥

तस्येति ॥ तस्य शितिकण्ठस्याष्टमूर्तेरात्मा। पुत्र इत्यर्थः ॥

(३) सोढुम्। (४) सैनापत्यम्।

मोच्यते सुरबन्दीनां (५)वेणीर्वीर्यविभूतिभिः ॥६१

इति व्याहृत्य विबुधान्विश्वयोनिस्तिरोदधे ।

मनस्याहितकर्तव्यास्तेऽपि (६)देवा दिवं ययुः ६२

तत्र निश्चित्य कन्दर्पमगमत्पाकशासनः ।

मनसा (७)कार्यसंसिद्धौ त्वराद्विगुणरंहसा ॥६३॥

अथ (८)स ललितयोषिद्भ्रूलताचारु(९)शृङ्गं

रतिवलयपदाङ्के चापमासज्य कण्ठे ।

"आत्मा वै पुत्रनामासि" इति श्रुतेः ॥ वो युष्माकं सेनापतेर्भावः सैनापत्यम् ॥ "पत्यन्तपुरोहितादिभ्यो यक्"इति यक्प्रत्ययः ॥ उपेत्य प्राप्य वीर्यविभूतिभिः शौर्यसम्पत्तिभिः सुरबन्दीनां वेणीः मोक्ष्यते विस्रंसयिष्यति । तारकासुरं हनिष्यतीति भावः ॥ ६१ ॥

इतीति ॥ विश्वस्य योनिः कारणम् ॥ "योनिः स्त्रीणां भगस्थाने कारणे ताम्रिके पणे" इति वैजयन्ती ॥ विबुधान् सुरानिति व्याहृत्याभिधाय तिरोदधेऽन्तर्हितवान् । ते देवा अपि मनस्याहितं कर्तव्यं यैस्ते तथोक्ताः सन्तो दिवं स्वर्गं ययुः प्रापुः ॥ ६२ ॥

तत्रेति ॥ पाको नाम कश्चिदसुरस्तस्य शासन इन्द्रः तत्र हरचित्ताकर्षणकृत्ये कन्दर्पं निश्चित्य । साधकत्वेनेति शेषः । कार्यसंसिद्धौ त्वरयौत्सुक्येन । द्वौ गुणौ यस्य तद् द्विगुणं द्विरावृत्तं रंहो वेगो यस्य तेन तथोक्तेन ॥ "गुणस्तु वृत्तिशब्दादिज्येन्द्रियमुख्यतन्तुषु" इति वैजयन्ती ॥ मनसा अगमत् । सस्मारेत्यर्थः ॥ गमेर्लुङ् । लृदित्वाच्च्लेरङादेशः ॥ ६३ ॥

अथेति ॥ अथ स्मरणानन्तरम् । स स्मृत इत्यर्थः ॥ पुष्पं

---

(५) वेणीर्बन्धानदूषितान् । (६) प्रति ।
(७) कर्मसंसिद्धि, कार्यसंसिद्धेः, कार्यसंसिद्धि ।
(८) सुललित । (९) शार्ङ्गम् ।

सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः (१)पुष्पधन्वा ॥६४॥

---

## तृतीयः सर्गः ।

तस्मिन्मघोनस्त्रिदशान् विहाय
सहस्रमक्ष्णां युगपत्पपात ।

धनुर्यस्य स पुष्पधन्वा कामः ॥ "वा संज्ञायाम्" इत्यनङ् ॥ "ललितं त्रिषु सुन्दरम्"इत्यमरः ॥ ललितायाः सुन्दर्या योषितो भ्रुवौ लते इव चारुणी शृङ्गे कोटी यस्य तत्तथोक्तं चापम् । रतिः स्मरप्रिया ॥ "रतिः स्मरप्रिया" इत्यमरः ॥ तस्या वलयपदानि कङ्कणस्थानान्यङ्कश्चिह्नं यस्य स तथोक्ते कण्ठ आसज्य लगयित्वा ॥ चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेस्त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते ॥ सहचरस्य सख्युर्मधोः वसन्तस्य हस्ते न्यस्तं चूताङ्कुरमेवास्त्रं यस्य स तथोक्तः प्राञ्जलिः कृताञ्जलिः सन् । शतमखमिन्द्रमुपतस्थे सङ्गतवान् ॥ सङ्गतिकरणार्थादात्मनेपदम् ॥ अत्र स्वभावोक्तिः— "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" इति ॥ मालिनीवृत्तमेतत्—"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ ६४ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये ब्रह्मसाक्षात्कारो नाम द्वितीयः सर्गः ।

---

तस्मिन्निति ॥ मघोन इन्द्रस्याक्ष्णां सहस्रं त्रिराहृत्ता दश परिमाणमेषामिति त्रिदशान्देवान् ॥ "संख्ययाव्ययासन्नादूरा-

(१) पुष्पकेतुः ।

प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥

स वासवेनासनसन्निकृष्ट-
मितो निषीदेति (१)विसृष्टभूमिः ।
भर्तुः प्रसादं (२)प्रतिनन्द्य मूर्ध्ना
वक्तुं मिथः प्राक्रमतैवमेनम् ॥ २ ॥

आज्ञापय ज्ञातविशेष पुंसां
लोकेषु यत्ते करणीयमस्ति ।

धिकसंख्याः संख्येये" इति बहुव्रीहिः । "बहुव्रीहौ संख्येये-
इति डच्प्रत्ययः । उक्तार्थत्वात्सुचो निवृत्तिः ॥ विहाय त्यक्त्वा
तस्मिन् कामे युगपत्प्रपात । सहस्रेणाक्षिभिरद्राक्षीदित्यादर
तिशयोक्तिः ॥ ननु सुचिरपरिचितानेकसुरपरित्यागेन भगवत
महेन्द्रस्य कथमकाण्डे तस्मिन्नेकस्मिन् पक्षपात इत्याशङ्क्याथ
न्तरं न्यस्यति—प्रायो भूम्ना प्रभूणामाश्रितेषु सेवकेषु विष
गौरवमादरः प्रयोजनापेक्षितया कार्यार्थित्वेन हेतुना च
चञ्चलम् । फलतन्त्राः प्रभवो न तु गुणतन्त्रा इति भावः ॥१॥

स इति ॥ स कामो वासवेनेन्द्रेणासनस्य सिंहासन
सन्निकृष्टं सन्निहितमासनसन्निकृष्टं यथा तथा ॥ शेषषष्ठ्या
समासः कृद्योगलक्षणया तु न "न लोकाव्ययनिष्ठाखलर्थत
नाम्" इति षष्ठीनिषेधात् ॥ इतो निषीदेहोपविशेति विसृ
भूमिर्दत्तावकाशः सन् । भर्तुः स्वामिनः प्रसादमनुग्रहं मू
प्रतिनन्द्य संभाव्य मिथो रहसि ॥ "मिथोऽन्योन्यं रहस्यपि
इत्यमरः ॥ एनमिन्द्रमेवं वक्ष्यमाणप्रकारेण वक्तुं प्राक्रमतो
क्रान्तवान् ॥ "प्रोपाभ्यां समर्थाभ्याम्" इत्यात्मनेपदम् ॥ २

आज्ञापयेति ॥ हे पुंसां ज्ञातविशेष ज्ञातसार । ज्ञातपुं

---

(१) निसृष्टभूमिः । (२) प्रतिवन्द्य ।

अनुग्रहं संस्मरणप्रवृत्त-
मिच्छामि (३)संवर्धितमाज्ञया ते ॥ ३ ॥
केनाभ्यसूया (४)पदकाङ्क्षिणा ते
नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य
मत्कार्मुकस्यास्य निदेशवर्ती ॥ ४ ॥
असम्मतः कस्तव मुक्तिमार्गं
पुनर्भवक्लेशभयात्प्रपन्नः ।

शेषेत्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः॥ आज्ञापय। तदिति शेषः॥ उत्तरवाक्ये यच्छब्दप्रयोगान्न पूर्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः॥ किं तदित्याह—लोकेषु ते तव यत्करणीयं कर्तव्यमस्ति। संस्मरणेन प्रवृत्तमुत्पन्नं ते तवानुग्रहं प्रसादमाज्ञया नियोगेन संवर्धितं वृद्धिं गमितमिच्छामि। संस्मरणजातमनुग्रहं केनचिन्नियोगेन वर्धय क्वचित् कर्मणि नियुङ्क्ष्वेत्यर्थः। अन्यथा मे नास्ति परितोष इति भावः॥ तुमुन्नन्तपाठे णिजर्थे यत्नः कार्यः॥ ३॥

न च मे किञ्चिदसाध्यमस्तीत्याह—

केनेति॥ पदकाङ्क्षिणा स्वाराज्यकामेन केन पुंसा नितान्तदीर्घैरतिप्रभूतैस्तपोभिस्ते तव अभ्यसूयेर्ष्या जनिता। तं ब्रूहीति शेषः। किमर्थम्। यावद्यतः स भवद्वैर्याहितसायकस्य संहितबाणस्यास्य मत्कार्मुकस्य निदेशे वर्तत इति निदेशवर्त्याज्ञावशो भवति। अविलम्बेनैव भविष्यतीत्यर्थः॥ "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट्॥ ४॥

संप्रति चतुर्वर्गे मोक्षमधिकृत्याह—

असम्मत इति॥ तवासम्मतः कः पुनर्भवः पुनरुत्पत्तिः।

---

(३) संवर्धितुम्।  (४) फलकाङ्क्षिणा।

बद्धश्चिरं तिष्ठतु सुन्दरीणाम्
(५)आरेचितभ्रूचतुरैः (६)कटाक्षैः ॥ ५ ॥
अध्यापितस्योशनसापि नीतिं
प्रयुक्तराग(७)प्रणिधिर्द्विषस्ते ।
कस्यार्थधर्मौ वद पीड़यामि
सिन्धोस्तटावोघ इव प्रवृद्धः ॥ ६ ॥
कामेकपत्नीव्रतदुःखशीलां
लोलं मनश्चारुतया प्रविष्टाम् ।

संसार इति यावत् । तत्र ये क्लेशा जन्मजरामरणादयस्तेभ्यो भयात् मुक्तिमार्गं प्रपन्नस्तं वद । यतः सोऽप्यारेचिताभिरेकैकशो विवर्तिताभिर्भ्रूभिश्चतुरैः सुन्दरीणां कटाक्षैर्बद्धश्चिरं तिष्ठतु ॥ आरेचितलक्षणं तु—"स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम् । तयोर्मूलसमुत्क्षेपं कौटिल्याद्भ्रुकुटिं विदुः" इति ॥५॥

धर्मार्थावधिकृत्याह—

अध्यापितस्येति ॥ उशनसा शुक्रेण नीतिं नीतिशास्त्रमध्यापितस्यापि ॥ अपिशब्दाच्छुक्रशिष्याणामप्रधृष्यत्वं मन्यते ॥ "गतिबुद्धि—" इत्यादिना द्विकर्मकादिङ्धातोर्ण्यन्तादप्रधाने कर्मणि क्तः "अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" इति वचनात् ॥ ते द्विषस्तव शत्रोः कस्यार्थधर्मौ प्रयुक्तः प्रहितो रागो विषयाभिलाष एव प्रणिधिर्दूतो येन सोऽहम् ॥ "प्रणिधिः प्रार्थने चरे" इति यादवः ॥ प्रवृद्ध ओघः प्रवाहः सिन्धोर्नद्यास्तटाविव पीडयामि वद ॥ ६ ॥

काममधिकृत्याह—

कामिति ॥ एकः पतिर्यस्याः सैकपत्नी पतिव्रता ॥ "नित्यं सपत्न्यादिषु" इति ङीप् ॥ तस्या व्रतं पातिव्रत्यं तेन दुःख-

(५) आरोपित । (६) विलासैः । (७) -प्रणिधेः ।

नितम्बिनीमिच्छसि मुक्तलज्जां
कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥ ७ ॥
कयासि कामिन् (८)सुरतापराधात्
पादानतः कोपनयावधूतः ।
तस्याः करिष्यामि दृढानुतापं
प्रवालशय्याशरणं शरीरम् ॥ ८ ॥
प्रसीद विश्राम्यतु वीर वज्रं
शरैर्मदीयैः कतमः सुरारिः ।

शीलां दुःखस्वभावाम् । दृढव्रतामित्यर्थः ॥ 'शीलं स्वभावे सद्वृत्ते" इत्यमरः ॥ चारुतया सुन्दरत्वेन हेतुना लोलं मनस्त्वचित्तं प्रविष्टां कां नितम्बिनीं नारीं मुक्तलज्जां सतीं कण्ठे स्वयंग्राहनिषक्तबाहुम् । स्वयं गृह्णातीति स्वयंग्राहा । "विभाषा ग्रहः" इति णप्रत्ययः । न च जलचर एव ग्राह इति नियमो जलचरे ग्राह एवेति नियमादिति ॥ स्वयंग्राहा च सा निषक्तबाहुश्च तां तथाभूतामिच्छसि । त्वदर्थे पतिव्रतामपि व्रताद् भ्रंशयिष्यामीत्यर्थः ॥ एतच्चेन्द्रस्य पारदारिकत्वादुक्तम् । तथा च श्रुतिः—"अहल्यायै जारः" इति ॥ ७ ॥

त्रिविधा नायिका । स्वकीया परकीया साधारणी चेति । तत्र परकीयां प्रत्युक्तम् । इतरे प्रत्याह—

कयेति ॥ हे कामिन् कामुक सुरतापराधात् । अन्यासङ्गादित्यर्थः । पादानतः प्रणतः सन् । कोपनया कोपनशीलया कया स्त्रिया अवधूतस्तिरस्कृतोऽसि । तस्याः शरीरं दृढानुतापं गाढपश्चात्तापमतएव प्रवालशय्याशरणं करिष्यामीति ॥ ८ ॥

प्रसीदेति ॥ हे वीर प्रसीद प्रसन्नो भव । वज्रं कुलिशं

(८) सन्नतापराधः ।

विभेतु मोघीकृतबाहुवीर्यः
स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥ ९ ॥
तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणे-
र्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ १० ॥
अथोरुदेशादवतार्य पादम्
आक्रान्तिसम्भावितपादपीठम् ।

बिभ्राम्यतु । उदास्तामित्यर्थः । मदीयैः शरैर्मोघीकृतबाहुवीर्यो विफलीकृतभुजशक्तिः कतमो दैत्यदानवादिषु यः कश्चन सुरारिः ॥ "वा बहूनां जातिपरिप्रश्ने डतमच्" इति डतमच् प्रत्ययः ॥ कोपेन स्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु । किमु वक्तव्यं पुंभ्य इत्यर्थः । सकलोतः सर्वतो बिभेतीति भावः ॥ "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात्पञ्चमी ॥ ९ ॥

तवेति ॥ किं बहुना तव प्रसादादनुग्रहात् कुसुमायुधोऽप्यतिदुर्बलास्त्रोऽप्यहमेकं मधुं वसन्तमेव सहायं लब्ध्वा पिनाकः पाणौ यस्य सः पिनाकपाणिः ॥ "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" । तस्य हरस्यापि । हरः पिनाकी चेत्यतिदारुण इति भावः । धैर्यच्युतिं धैर्यहानिं कुर्याम् । कर्तुं शक्नुयामित्यर्थः ॥ "शकि लिङ् च" इति शक्यार्थे लिङ् ॥ अन्ये धन्विनो धनुर्भृतो मम के । न केऽपीत्यर्थः ॥ किंशब्दः कुत्सायाम् । "कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते" इति शाश्वतः ॥ १० ॥

अथेति । अथ स्मरवाक्यश्रवणानन्तरमाखण्डलः सहस्राक्ष ऊरुदेशात्पादमाक्रान्त्याक्रमणेन सम्भावितं पादपीठं यस्मिंस्तथा तथावतार्य सङ्कल्पितार्थे हरचित्ताकर्षणरूपे विषये

(१)सङ्कल्पितार्थे विवृतात्मशक्ति-
माखण्डल: काममिदं बभाषे ॥ ११ ॥

सर्वं सखे त्वय्युपपन्नमेत-
दुभे ममास्त्रे कुलिशं भवांश्च ।
वज्रं तपोवीर्यमहत्सु कुण्ठं
त्वं सर्वतोगामि च साधकं च ॥ १२ ॥

अवैमि ते सारमत: खलु त्वां
कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेष: ॥ १३ ॥

विवृतात्मशक्तिम् "कुर्यां हरस्यापि—" (३ । १०) इत्यादिना प्रकटीकृतस्वसामर्थ्यं कामं स्मरमिदं वक्ष्यमाणं बभाषे ॥ ११ ॥

सर्वमिति ॥ हे सखे। सखे इति सम्बोधनं गौरवार्थम्। सर्वमेतत्त्वयि उपपन्नं सिद्धम्। मम कुलिशं वज्रं भवांश्चोभे अस्त्रे। तत्र वज्रं तपोवीर्येण तपोबलेन महत्सु प्रबलेषु कुण्ठं प्रतिबद्धप्रसरम्। त्वमस्त्रं सर्वतोगामि च साधकं च। तापसेष्वप्यकुण्ठमित्यर्थः ॥ १२ ॥

अवैमीति ॥ हे सखे ते सारं बलमवैमि वेद्मि। अत: खल्वत एवात्मसमं मत्तुल्यं त्वां गुरुणि महति कार्ये "तस्मै हिमाद्रे:—" (३ । १६) इति वक्ष्यमाणे नियोक्ष्ये ॥ "स्वराद्यन्तोपसर्गादिति वक्तव्यम्" इति वार्तिकादात्मनेपदनियम: ॥ तथाहि। सारपरीक्षापूर्वक एव सर्वत्र नियोग इत्याह— कृष्णेन विष्णुना। धरतीति धर:। पचाद्यच् ॥ भुवो धरो

---

(१) सङ्कल्पितेऽर्थे।

आशंसता बाणगतिं वृषाङ्के
कार्यं त्वया नः प्रतिपन्नकल्पम् ।
निबोध यज्ञांशभुजामिदानी-
मुच्चैर्द्विषामीप्सित(२)मेतदेव ॥ १४ ॥
अमी हि वीर्यप्रभवं भवस्य
जयाय सेनान्यमुशन्ति देवाः ।

भूधरस्तस्य भावस्तत्तां भूधरताम् । भूधरणशक्तिमित्यर्थः । अवेत्य ज्ञात्वा शेषः सर्पराजो देहोद्वहनाय स्वदेहमुद्वोढुम् ॥ "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी ॥ आदिश्यते नियुज्यते । शेषशायी हि भगवान् ॥ १३ ॥

नियोगाङ्गीकारं सिद्धवत्कृत्वाह—

आशंसतेति ॥ वृषाङ्के हरे बाणगतिं बाणप्रसरमाशंसता कथयता । "कुर्यां हरस्यापि पिनाकपाणेः" (३ । १०) इत्यादिनेति शेषः । त्वया नोऽस्माकं कार्यं प्रतिपन्नकल्पमङ्गीकृतप्रायम् ॥ "ईषदसमाप्तौ—" इत्यादिना कल्पप्प्रत्ययः ॥ कथमेतदत आह—इदानीमुच्चैरुन्नता द्विषो येषां तेषामुच्चैर्द्विषां यज्ञांशभुजां देवानाम् । एतेन द्विषद्धृतयज्ञभागत्वं सूच्यते । ईप्सितमाप्तुमिष्टम् एतदेव हरे बाणप्रयोगरूपमेव निबोध । हरायत्तं बुध्यस्वेत्यर्थः ॥ "बुध बोधने" इति धातोर्लोट् ॥ अत्र "आशंसता प्रार्थयमानेन" इति नाथव्याख्यानमनाथव्याख्यानम् । आङ्पूर्वयोः शास्तिशंसत्योरिच्छार्थत्वे आत्मनेपदनियमात् । याच्ञार्थत्वस्याप्रामाणिकत्वात् । "कुर्यां हरस्यापि—" (३ । १०) इत्यत्रानयोरभावादयोगाच्चेति ॥ १४ ॥

किं तत् कार्यं कथं वा तस्य हरायत्तत्वं कुतो वा मदपेक्षेत्यत्राह—

अमी इति ॥ हि यस्मात् अमी देवा जयाय शत्रुजयार्थं

---

(२) अर्थमत्र ।

स च त्वदेकेषुनिपातसाध्यो
ब्रह्माङ्गभू(३)र्ब्रह्मणि योजितात्मा ॥ १५ ॥
तस्मै हिमाद्रेः प्रयतां तनूजां
(४)यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः
सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ १६ ॥
गुरोर्नियोगाच्च नगेन्द्रकन्या
स्थाणुं तपस्यन्तमधित्यकायाम् ।

तस्य हरस्य वीर्यप्रभवं तेजःसंभूतं सेनान्यं सेनापतिमुशन्ति कामयन्ते । "वश कान्तौ" इति धातोर्लट् ॥ ब्रह्मणां सद्योजातादिमन्त्राणामङ्गानां हृदयादिमन्त्राणां भूः स्थानं ब्रह्माङ्गभूः । कृतमन्त्रन्यास इत्यर्थः । ब्रह्मणि निजतत्त्वे ॥ "वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा" इति उभयत्राप्यमरः ॥ योजितात्मा नियमितचित्तः । मन्त्रन्यासपूर्वकं ब्रह्म ध्यायन्नित्यर्थः । स चावश्य त्वदेकेषोस्तवैकबाणस्य निपातेन साध्यः । अनन्यसाध्योऽयमस्मिन्नवसर इति भावः ॥ १५ ॥

तस्मा इति ॥ यतात्मने नियतचित्ताय तस्मै भवाय ॥ "रुच्यर्थानां प्रीयमाणः" इति सम्प्रदानत्वात् चतुर्थी ॥ प्रयतां हिमाद्रेः तनूजां पार्वतीं रोचयितुं यतस्व ॥ भवितव्यं चात्र पार्वत्यैवेत्याह—योषित्सु स्त्रीषु मध्ये ॥ "यतश्च निर्धारणम्" इति सप्तमी ॥ क्षमा शक्ता तस्य हरस्य वीर्यं रेतस्तस्य निषेकः क्षरणं तस्य भूमिः सैवं सा पार्वत्येवेत्यात्मभुवा ब्रह्मणोपदिष्टम् । "उभे एव क्षमे वोढुम्" (२ । ६०) इत्यादिनोक्तमित्यर्थः ॥१६॥

सापीदानीं सन्निकृष्टैव तस्येत्याह—

---

(३) ब्रह्मनियोजितात्मा । (४) जितात्मने ।

अन्वास्त नृत्यप्सरसां मुखेभ्यः
श्रुतं मया मत्प्रणिधिः स वर्गः ॥ १७ ॥

तद्गच्छ सिद्ध्यै कुरु देवकार्य-
मर्थोऽयमर्थान्तरभाव्य एव ।
अपेक्षते (५)प्रत्ययमुत्तमं त्वां
बीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १८ ॥

गुरोरिति ॥ नगेन्द्रकन्या पार्वती च गुरोः पितुः नियोगा-च्छासनादधित्यकायां हिमाद्रेरूर्ध्वभूमौ ॥ "भूमिरूर्ध्वमधि-त्यका" इत्यमरः ॥ "उपाधिभ्यां त्यकन्नासन्नारूढयोः" इति त्यकन्प्रत्ययः ॥ तपस्यन्तं तपश्चरन्तम् ॥ "कर्मणो रोमन्थत-पोभ्यां वर्तिचरोः" इति क्यङ्प्रत्ययः। ततः शतृप्रत्ययः ॥ स्थाणुं रुद्रमन्वास्ते। उपास्त इत्यर्थः। इतीदं मयाप्सरसां मुखेभ्यः श्रुतम् ॥ न चैतदैतिह्यमात्रमित्याह—स वर्गः सोऽप्-सरसां गणो मत्प्रणिधिर्मम गूढचरः ॥ "प्रणिधिः प्रार्थने चरे" इति यादवः ॥ १७ ॥

तदिति ॥ तत्तस्मात्सिद्ध्यै कार्यसिद्ध्यर्थं गच्छ। देवकार्यं कुरु ॥ आशिषि लोट् ॥ अयमर्थः प्रयोजनमर्थान्तरभाव्यः कारणान्तरसाध्य एव। तच्च कारणान्तरं पार्वतीसन्निधान-मिति भावः ॥ "अर्थः प्रकारे विषये वित्तकारणवस्तुषु। अभि-धेये च शब्दानां वृत्तौ चापि प्रयोजने" इति विश्वः ॥ तथापि बीजसाध्योऽङ्कुरो बीजाङ्कुर उदयादुत्पत्तेः प्रागम्भ इव त्वामु-त्तमं प्रत्ययं चरमं कारणमपेक्षते ॥ "प्रत्ययोऽधीनशपथज्ञान-विश्वासहेतुषु" इत्यमरः ॥ तस्मादस्मिन्नर्थे तव चरमसहकारि-त्वादनन्यसाध्योऽयमर्थ इति भावः ॥ १८ ॥

---

(५) प्रत्ययसङ्कल्पौ ।

(६)तस्मिन् सुराणां विजयाभ्युपाये
तवैव (७)नामास्त्रगतिः कृती त्वम्।
अप्यप्रसिद्धं यशसे हि पुंसा-
मनन्यसाधारणमेव कर्म॥ १९॥

सुराः समभ्यर्थयितार एते
कार्यं त्रयाणामपि विष्टपानाम्।
चापेन ते कर्म न चातिहिंस्र-
महो बतासि स्पृहणीयवीर्यः॥ २०॥

तस्मिन्निति॥ सुराणां विजयाभ्युपाये जयस्योपायभूते तस्मिन् हरेऽस्त्रगतिरस्त्रप्रसरस्तवैव नाम। नामेति सम्भावनायाम्। अन्येषां तु सम्भावनापि नास्तीति भावः॥ अतस्त्वं कृती कृतमस्यास्तीति कृती कृतार्थः। तथाहि। अप्रसिद्धमप्यनन्यसाधारणमेव कर्म पुंसां यशसे हि। इदं तु प्रसिद्धमसाधारणं चेत्यतियशस्करमिति भावः॥ १९॥

प्रोत्साहनार्थं स्तौति—

सुरा इति॥ एते सुराः समभ्यर्थयितारो याचितारः। कार्यं प्रयोजनं त्रयाणां विष्टपानामपि सम्बन्धि। सर्वलोकार्थमित्यर्थः। कर्म ते तव चापेन। न त्वन्येनेति भावः। अतिहिंस्रमतिघातुकं च न। अहो बत इति सम्बोधने॥ "अहो बतानुकम्पायां खेदे सम्बोधनेऽपि च" इति विश्वः॥ अथवा अहो आश्चर्ये। बतेत्यामन्त्रणे सन्तोषे च इति। "बतामन्त्रणसन्तोषखेदानुक्रोशविस्मये" इति विश्वः॥ स्पृहणीयवीर्योऽस्याश्चर्यविक्रमोऽसि॥ "आश्चर्यं स्पृहणीयं च इति नानार्थकोशः॥२०॥

---

(६) यस्मिन्।　　　　(७) कामास्त्रगतिः।

मधुश्च ते मन्मथ साहचर्या-
दसावनुक्तोऽपि सहाय एव ।
(८)समीरणो नोदयिता भवेति
व्यादिश्यते केन हुताशनस्य ॥ २१ ॥

तथेति शेषामिव भर्तुराज्ञा-
मादाय मूर्ध्ना मदनः प्रतस्थे ।
(९)ऐरावतास्फालनकर्कशेन
हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥

मधुरिति। हे मन्मथ। असौ मधुश्च वसन्तोऽपि ते साहचर्यात्सहचरत्वादेवानुक्तोऽप्यप्रेरितोऽपि सहायः सहकार्येव। तथाहि। समीरणो वायुर्हुताशनस्याग्नेर्नोदयिता प्रेरको भवेति केन व्यादिश्यते॥ अत्र मधुसमीरणयोरुक्तिमन्तरेण सहायताकरणं सामान्यधर्मः। स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथङ्निर्दिष्ट इति प्रतिवस्तूपमालङ्कारोऽयम्। तदुक्तम्—"यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये यदि। गम्यौपम्याश्रिता सा स्यात्प्रतिवस्तूपमा मता" इति ॥ २१ ॥

तथेति॥ तथास्त्विति भर्तुः स्वामिनः शेषामिव प्रसाददत्तां मालामिव॥ "प्रसादान्निजनिर्माल्यदाने शेषेति कीर्तिता" इति विश्वः। "माल्याक्षतादिदाने स्त्री शेषा" इति वैजयन्ती-केशवौ॥ आज्ञां मूर्ध्नादाय शिरसा गृहीत्वा मदनः प्रतस्थे॥ "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्॥ इन्द्र ऐरावतास्फालनेन प्रोत्साहनार्थेन ताडनेन कर्कशेन परुषेण हस्तेन तदङ्गं मदनदेहं पस्पर्श। हस्तस्पर्शेन सम्भावयामासेत्यर्थः॥ "शेषामिवाज्ञाम्" इत्यत्र साधकबाधकप्रमाणाभावादुपमोत्प्रेक्षयोः सन्देहसङ्कर इति। यदि भर्त्रा शेषापि दत्ता तदा तामाज्ञामिवेत्यु-

(८) समीरणश्चोदयिता, समीरण प्रेरयिता। (९) दिग्वारण।

स माधवेनाभिमतेन सख्या
रत्या च साशङ्कमनुप्रयातः।
अङ्गव्ययप्रार्थित(१)कार्यसिद्धिः
स्थाण्वाश्रमं हैमवतं जगाम ॥ २३ ॥

तस्मिन्वने संयमिनां मुनीनां
तपःसमाधेः प्रतिकूलवर्ती।
सङ्कल्पयोनेरभिमानभूत-
मात्मानमाधाय मधुर्जजृम्भे ॥ २४ ॥

पमा। अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता। शेषादानं तु सन्दिग्धमिति ॥ २२ ॥

स इति ॥ स मदनोऽभिमतेन प्रियेण सख्या सुहृदा माधवेन वसन्तेन रत्या स्वदेव्या च साशङ्कं सङ्कटमापतितमिति सभयमनुप्रयातः सन्। तथाङ्गस्य व्ययेनापि प्रार्थिता कार्यसिद्धिर्येन स तथोक्तः। मृत्वापि सर्वथा देवकार्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः। हैमवतं हिमवति भवं स्थाणो रुद्रस्याश्रमं जगाम ॥ २३ ॥

तस्मिन्निति ॥ तस्मिन्वने स्थाण्वाश्रमे संयमिनां समाधिमतां मुनीनां तपसः समाधेरेकाग्रतायाः प्रतिकूलं वर्तत इति प्रतिकूलवर्ती विरोधी मधुर्वसन्तः सङ्कल्पयोनेर्मनोभवस्याभिमानभूतम्। गर्वहेतुभूतमित्यर्थः ॥ कार्यकारणयोरभेदोपचारः। आत्मानं निजस्वरूपमाधाय सन्निधाय जजृम्भे प्रादुर्बभूव। वसन्तधर्मान् प्रवर्तयामासेत्यर्थः ॥ २४ ॥

वसन्तधर्मानाह—

---

(१) -कर्मसिद्धिः।

(२)कुबेरगुप्तां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग्दक्षिणा गन्धवहं मुखेन
व्यलीकनिश्वासमिवोत्ससर्ज ॥ २५ ॥

असूत सद्यः कुसुमान्यशोकः
स्कन्धात्प्रभृत्येव सपल्लवानि ।

कुबेरेति ॥ उष्णरश्मौ सूर्ये साहसिके च नायके समयं दक्षिणायनकालं सङ्गमकालं च विलङ्घ्य अकाण्डे व्यतिक्रम्य कुबेरगुप्तां धनपतिपालितां कुत्सितशरीरेण केनचिद्रक्षितां च दिशमुदीचीं स्त्रीलिङ्गाक्षिप्तां कामिन्नायिकां च गन्तुं चलितुं संगन्तुं च प्रवृत्ते सति दक्षिणा दिग्दाक्षिण्यवती नायिका च मुखेन अग्रभागेन वक्त्रेण च । वहतीति वहः ॥ पचाद्यच् ॥ गन्धस्य वहं गन्धवहम् अनिलं व्यलीकेन दुःखेन निश्वासस्तं व्यलीकनिश्वासमिव ॥ "दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्य-वस्तुनोः" इति वैजयन्ती ॥ उत्ससर्ज प्रवर्तयामास । स्वभर्तरि समयोल्लङ्घनेन पराङ्गनासङ्गतिं प्रवृत्ते सति स्त्रियो दाक्षिण्या-दाकस्मिकदुःखान्निश्वसन्तीति भावः । उत्तरायणे सति मल-यानिलाः प्रवृत्ता इति वाक्यार्थः ॥ अत्रोत्प्रेक्षालङ्कारः । न च समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यं केवलविशेषण-सामर्थ्यादेवाप्रस्तुतप्रतीतौ सोक्तिष्ठते । अत्र तु दक्षिणेति विशे-ष्यसामर्थ्यादपि नायिका प्रतीयते । नच श्लेष एव प्रकृताप्रकृत-विषय उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात् । तस्माच्छब्दश-क्तिमूलोऽयं ध्वनिः । स च व्यलीकनिश्वासरूपचेतनधर्मसम्भा-वनार्थं दक्षिणस्या दिशो नायिकया सहाभेदमासादयन्नभेद-लक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति वाच्यसिद्ध्यङ्गभूत इत्युत्पश्यामः ॥ २५ ॥

---

(२) कुबेरजुष्टाम् ।

पादेन नापैक्षत सुन्दरीणां
सम्पर्कमासिञ्जितनूपुरेण ॥ २६ ॥
सद्यः प्रवालोद्गमचारुपत्रे
नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥ २७ ॥

असूतेति ॥ अशोको वृक्षविशेषः सद्यः स्कन्धात् प्रकाण्डात् प्रभृत्येव । स्कन्धादारभ्येत्यर्थः ॥ भाष्यकारवचनात् प्रभृतियोगे पञ्चमीति कैयटः । भाष्यं च "मूलात् प्रभृत्यग्रात् पर्णांस्तक्ष्णुवन्ति" इति "कार्त्तिक्याः प्रभृत्याग्रहायणी मासः" इत्यादि ॥ सपल्लवानि कुसुमान्यसूत । उभयमप्यजीजनदित्यर्थः । आसिञ्जितो नूपुरो यस्य तेन ॥ सिञ्जधातोरकर्मकात् 'गत्यर्थाकर्मक—" इत्यादिना कर्तरि क्तः ॥ सुन्दरीणां पादेन सम्पर्कं ताडनं नापैक्षत । "सनूपुररवेण स्त्रीचरणेनाभिताडनम् । दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत्" इति । तथाहि—"पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलोकितः कुरवकः कुरुते विकाशमालोडितस्तिलक उत्कलिको विभाति" ॥ २६ ॥

सद्य इति ॥ मधुर्वसन्त एवेषुकारः प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि पत्राणि पक्षा यस्य तस्मिन् ॥ "पत्रं वाहनपक्षयोः" इत्यमरः ॥ नवं चूतं चूतकुसुमं तदेव बाणस्तस्मिन्नवचूतबाणे समाप्तिं नीते सति सद्यो मनोभवस्य धन्विनो नामाक्षराणीव द्विरेफान् भ्रमरान्निवेशयामास निदधौ ॥ अत्र प्रवालपत्र इत्याद्येकदेशविवर्त्तिरूपकं मधोरिषुकारत्वं रूपं नामाक्षराणीवेत्युत्प्रेक्षायां निमित्तमित्येकदेशविवर्त्तिरूपकोत्थापितेयमुत्प्रेक्षा ॥ २७ ॥

वर्णप्रकर्षे सति कर्णिकारं
दुनोति (१)निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २८ ॥

बालेन्दुवक्राण्यविकाशभावा-
द्बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥ २९ ॥

वर्णेति ॥ कर्णिकारं कर्णिकारकुसुमम् ॥ "अवयवे च प्राण्योषधिवृक्षेभ्यः" इत्युत्पन्नस्य तद्धितस्य "पुष्पफलमूलेषु बहुलम्" इति लुक् । एवमन्यत्रापि द्रष्टव्यम् ॥ वर्णप्रकर्षे वर्णोत्कर्षे सत्यपि निर्गन्धतया हेतुना चेतो दुनोति स्म पर्यतापयत् ॥ "लट् स्मे" इति भूतार्थे लट् ॥ तथाहि । प्रायेण विश्वसृजो विधातुः प्रवृत्तिर्गुणानां सामग्र्यविधौ साकल्यसम्पादनविषये पराङ्मुखी । सर्वत्रापि वस्तुनि किञ्चिद्वैकल्यं सम्पादयति । यथा चन्द्रे कलङ्कः । अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यत इति भावः ॥ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ २८ ॥

बालेन्द्विति ॥ अविकाशभावाद्विकाशत्वात् मुकुलभावाद्धेतोर्बालेन्दुरिव वक्राण्यतिलोहितान्यतिरक्तानि पलाशानि किंशुकपुष्पाणि ॥ "पलाशे किंशुकः पर्णः" इत्यमरः ॥ वसन्तेन पुंसा समागतानां सङ्गतानां वनस्थलीनां स्त्रीणां सद्यः सद्योदत्तानि । पुराणेष्वतिलौहित्याभावादिति भावः । नखक्षतानीव बभुः ॥ अत्र वसन्तस्य वनस्थलीनाञ्च विशेषणसाधा-

(१) निर्गन्धमिति ।

लग्नद्विरेफाञ्जनभक्तिचित्रं
मुखे मधुश्रीस्तिलकं (४)प्रकाश्य।
रागेण बालारुणकोमलेन
चूतप्रवालोष्ठमलञ्चकार ॥ ३० ॥

मृगाः (५)पियालद्रुममञ्जरीणां
रजःकणैर्विघ्नितदृष्टिपाताः।
मदोद्धताः प्रत्यनिलं विचेरु-
र्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ ३१ ॥

रण्याश्रायकव्यवहारप्रतीतेः समासोक्तिस्तावदस्ति। "नखक्षतानीव" इति जातिस्वरूपोत्प्रेक्षा वक्रत्वलौहित्यगुणनिमित्ता जागर्ति। सा च नायकव्यवहाराश्रितसमासोक्तिगर्भिण्यवतिष्ठत इत्युभयतोरेककालतैव। विशेषणसामर्थ्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिष्यत इति हि लक्षणम् ॥ २९ ॥

लग्नेति॥ मधुश्रीर्वसन्तलक्ष्मीर्लग्नाद्विरेफा एवाञ्जनभक्तयः कज्जलरचनास्ताभिश्चित्रं चित्रवर्णं तिलकं पुष्पविशेषमिव तिलकं विशेषकम्। मुखं प्रारम्भस्तस्मिन्नेव मुखे वक्त्रे प्रकाश्य प्रकटय्य बालारुणकोमलेन बालार्कसुन्दरेण रागेणारुणिम्ना तेनैव लाक्षारागेण चूतप्रवाल एवौष्ठस्तं चूतप्रवालोष्ठमलञ्चकार प्रसाधयामास॥ अत्र रूपकालङ्कारः ॥ ३० ॥

मृगा इति॥ पियालद्रुमा राजादनवृक्षाः॥ "राजादनं पियालश्च" इत्यमरः॥ तेषां मञ्जर्यस्तासां रजःकणैर्विघ्निताः सञ्जातविघ्ना दृष्टीनां पाताः प्रसादा येषां ते तथोक्ता मदोद्धता मृगाः प्रत्यनिलमनिलाभिमुखं मर्मरा मर्मरशब्दवन्तः पत्रमोक्षा जीर्णपर्णपाता यासु ता वनस्थलीः विचेरुर्वनप्रदेशेषु

(४) निवेश्य। (५) प्रियालु।

चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन्मधुरं चुकूज ।
मनस्विनीमानविघातदक्षं
तदेव जातं वचनं स्मरस्य ॥ ३२ ॥

हिमव्यपायाद्विशदाधराणाम्
(६)आपाण्डरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किंपुरुषाङ्गनानां
चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥

चरन्ति स्म ॥ "देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्" इति चरतेः सकर्मकत्वम् ॥ ३१ ॥

चूताङ्कुरेति ॥ चूताङ्कुराणामास्वादेन कषायकण्ठो रक्तकण्ठः ॥ "सुरभावपथे रक्ते कषायः" इति केशवः ॥ पुमान् कोकिलः पुंस्कोकिलः ॥ पुंग्रहणं प्रागल्भ्यद्योतनार्थम् ॥ मधुरं चुकूजेति यत्तत् कूजनमेव मनस्विनीनां मानविघाते रोषनिरासे दक्षं स्मरस्य वचनं मानं त्यजतेत्याज्ञावचनं जातम् । कोकिलकूजितश्रवणानन्तरं स्मराज्ञया इव मानं जहुरित्यर्थः ॥ ३२ ॥

हिमेति ॥ हिमस्य व्यपायादपगमाद्विशदा नीरुजा अधरा ओष्ठा यासां तासामापाण्डरीभूतमुखच्छवीनाम् । कुङ्कुमपरिहारादिति भावः । किंपुरुषाङ्गनानां पत्रविशेषकेषु पत्ररचनासु स्वेदोद्गमः पदं चक्रे । घर्मोदयात् स्वेदोदयोऽभूदित्यर्थः । विशदाधरत्वं मधूच्छिष्टराहित्यादिति भावः । हेमन्ते तु नार्यो विम्बोष्ठेषु मधूच्छिष्टं शीतभयाद्दधतीति प्रसिद्धम् ॥ ३३ ॥

---

(६) आपाण्डुरीभूत ।

तपस्विनः स्थाणुवनौकसस्ता-
माकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।
प्रयत्नसंस्तम्भितविक्रियाणां
कथञ्चिदीशा मनसां बभूवुः ॥ ३४ ॥

तं देशमारोपितपुष्पचापे
रतिद्वितीये मदने प्रपन्ने ।
काष्ठागतस्नेहरसानुविद्धं
द्वन्द्वानि भावं क्रियया विवव्रुः ॥ ३५ ॥

तपस्विन इति ॥ स्थाणोर्वनमोको येषां ते तपस्विनस्त-
त्या मुनयः । समानकाल आद्यन्तौ यस्या आकालिकीम्
कालभवत्वादुत्पत्त्यनन्तरविनाशिनीमित्यर्थः ॥ "आकालिक-
ाद्यन्तवचने" इति समानकालादिकट्प्रत्ययः प्रकृतेराकाल
ादेशश्च निपातितः । "टिड्ढाणञ्—" इत्यादिना ङीप् ।
ाचिदकालाद्द्दाध्यात्मादित्वाट्ठञर्थे ठगित्याहुः ॥ तामाका-
लकीं मधुप्रवृत्तिं वीक्ष्य प्रयत्नेन संस्तम्भितविक्रियाणां निरुद्ध-
वकाराणां मनसां कथञ्चिदीशा नियन्तारो बभूवुः ॥ ३४ ॥

तमिति ॥ आरोपितमधिज्यं कृतं पुष्पचापं येन तस्मिन्
तिर्द्वितीया यस्य तस्मिन् रतिसहाये मदने तं देशं स्थाण्वाश्रमं
पन्ने प्राप्ते सति द्वन्द्वानि स्थावराणि जङ्गमानि च मिथुनानि
ाष्ठोत्कर्षः ॥ "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः । तां गतो
ः स्नेह इष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः ॥
प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः ॥ स एव रस-
तेनानुविद्धं संपृक्तं भावं रत्याख्यं शृङ्गारभावं क्रियया कार्य-
ूतया चेष्टया विवव्रुः प्रकटीचक्रुः । शृङ्गारचेष्टाः प्रावर्तन्ते-
यर्थः ॥ ३५ ॥

ताश्चेष्टा आह 'मधु' इत्यादिभिश्चतुर्भिः—

मधु द्विरेफः कुसुमैकपात्रे
पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण (७)च स्पर्शनिमीलिताक्षीं
मृगीमकण्डूयत कृष्णसारः ॥ ३६ ॥

ददौ (८)रसात्पङ्कजरेणुगन्धि
गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां
सम्भावयामास रथाङ्गनामा ॥ ३७ ॥

मध्विति ॥ द्वौ रेफौ वर्णविशेषौ यस्य स द्विरेफो भ्रमरः ॥ उपचारात्तदर्थोऽपि द्विरेफ उच्यते। यथाह कैयटः—"शब्द-धर्मेणाप्यर्थस्य व्यपदेशो दृश्यते। यथा भ्रमरशब्दस्य द्विरेफत्वात् द्विरेफो भ्रमरः ॥ कुसुममेवैकं साधारणं पात्रं तस्मिन् मधु मकरन्दम् ॥ "मधु मद्ये पुष्परसे" इति विश्वः ॥ स्वां प्रियां भृङ्गीमनुवर्तमानोऽनुसरन् पपौ। तत्पीतशेषं पपावित्यर्थः। कृष्णश्चासौ सारः शबलश्च कृष्णसारः कृष्णमृगः ॥ "वर्णो वर्णेन" इति समासः ॥ स्पर्शेन स्पर्शसुखेन निमीलिताक्षीं मृगीं शृङ्गेणाकण्डूयत कषितवान् ॥ "कण्ड्वादिभ्यो यक्" इति यक्। ततः कर्तरि लङ् ॥ ३६ ॥

ददाविति ॥ रसादतिरागात्करेणुः करिणी ॥ "करेणु-रिभ्यां स्त्री नेभे" इत्यमरः ॥ पङ्काज्जायत इति पङ्कजं तस्य रेणुः पङ्कजरेणुस्तस्य गन्धोऽस्यास्तीति पङ्कजरेणुगन्धि गण्डूष-जलं मुखान्तःस्थं तज्जलं गजाय ददौ। रथाङ्गनामा चक्रवाको-ऽर्धं यथा तथोपभुक्तेनार्धजग्धेन बिसेन जायां सम्भावयामास। स्वजग्धशेषं ददावित्यर्थः ॥ ३७ ॥

---

(७) संस्पर्श। (८) सरःपङ्कज।

गीतान्तरेषु श्रमवारिलेशैः
किञ्चित्समुच्छ्वासितपत्रलेखम्।
पुष्पासवाघूर्णितनेत्रशोभि
प्रियामुखं किंपुरुष(८)श्चुचुम्बे॥ ३८॥

पर्याप्तपुष्पस्तवकस्तनाभ्यः
स्फुरत्प्रवालोष्ठमनोहराभ्यः।
लतावधूभ्यस्तरवोऽप्यवापु-
र्विनम्रशाखाभुजबन्धनानि॥ ३९॥

गीतान्तरेष्विति॥ किंपुरुषः किन्नरः श्रमवारिलेशैः स्वेदोदबिन्दुभिः किञ्चिदीषत् समुच्छ्वासिता विश्लेषिताः पत्नलेखा यस्य तत्। पुष्पाणाम् आसवो मद्यं पुष्पासवः। पुष्पोद्भवमद्यमित्यर्थः। वसन्ते मधूकस्य सम्भवात्। पुष्पवासितमिति केचित्। तेनाघूर्णिताभ्यामुद्भ्रान्ताभ्यां नेत्राभ्यां शोभत इति तथोक्तं प्रियामुखं गीतान्तरेषु गीतमध्येषु चुचुम्बे चुचुम्ब॥ ३८॥

पर्याप्तेति॥ पर्याप्ताः समग्राः पुष्पस्तवका एव स्तना यासां ताभ्यः॥ "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति विकल्पान्न ङीप्॥ स्फुरन्तः प्रवालाः पल्लवा एवौष्ठाः तैर्मनोहराभ्यो लता एव वध्वस्ताभ्यः सकाशात्तरवोऽपि॥ लिङ्गादेव पुंस्त्वं गम्यते॥ विनम्राः शाखा एव भुजास्तैर्बन्धनान्यवापुः। ताभिरालिङ्गिता इत्यर्थः। स्थावराणामपि मदनविकारोऽभूत् किमुतान्येषामिति भावः। एतच्च तरुलतानामपि चेतनत्वादुक्तम्। यथाह मनुः—"अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति॥ अत्र रूपकालङ्कारः॥ ३९॥

---

(८) चुचुम्ब।

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥ ४० ॥

लतागृहद्वारगतोऽथ नन्दी
वामप्रकोष्ठार्पितहेमवेत्रः ।
मुखार्पितैकाङ्गुलिसंज्ञयैव
मा चापलायेति गणान् व्यनैषीत् ॥ ४१ ॥

श्रुतेति ॥ अस्मिन् क्षणे वसन्ताविर्भावकाले भगवान् हरः श्रुताप्सरोगीतिरपि । दिव्याङ्गनागानमाकर्णयन् अपीत्यर्थः । प्रसंख्यानपर आत्मानुसन्धानपरो बभूव । तथाहि । आत्मनश्चित्तस्येश्वराणां नियन्तॄणाम् । वशिनामित्यर्थः । विघ्नन्त्यन्त एभिरिति विघ्नाः प्रत्यूहाः ॥ घञर्थे कप्रत्ययः ॥ जातु कदाचिदपि समाधिभेदे समाधिभञ्जने प्रभवः समर्था न भवन्ति ॥ ४० ॥

लतेति ॥ अथ लतागृहद्वारं गतो वामे प्रकोष्ठेऽर्पितहेमवेत्रो धारितहेमदण्डो नन्दी नन्दिकेश्वरः ॥ "नन्दी भृङ्गिरिटस्तण्डुनन्दिनो नन्दिकेश्वरे" इति कोशः । मुखे अर्पितायाः सरोषविस्मयस्तिमितावलोकं निहितायाः एकस्या अङ्गुलेस्तर्जन्याः संज्ञया सूचनयैव । "संज्ञा स्याच्चेतना नाम हस्ताद्यैरर्थसूचना" इत्यमरः । गणान् प्रमथान् चापलाय चापलं कर्तुं मा भवतेति ॥ "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी ॥ व्यनैषीच्छिक्षितवान् ॥ ४१ ॥

न केवलं गणा एव विनीताः किन्तु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह—

निष्कम्पवृक्षं निभृतद्विरेफं
मूकाण्डजं शान्तमृगप्रचारम्।
तच्छासनात्काननमेव सर्वं
चित्रार्पितारम्भमिवावतस्थे ॥ ४२ ॥
दृष्टिप्रपातं परिहृत्य तस्य
कामः पुरःशुक्रमिव प्रयाणे।
प्रान्तेषु संसक्तनमेरुशाखं
ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥

निष्कम्पेति ॥ निष्कम्पवृक्षम्। इदमुद्भिज्जोपलक्षणम्। निभृतद्विरेफं निश्चलभृङ्गम्। स्वेदजोपलक्षणमेतत्। मूकाण्डजं निःशब्दपक्षिसरीसृपादिकम्। एतेनाण्डजजातिरुक्ता। शान्तमृगप्रचारम्। जरायुजोपलक्षणमेतत्। सर्वमेव काननं तच्छासनान्नन्दीश्वराज्ञया चित्रार्पितारम्भं चित्रलिखितारम्भमिवावतस्थे ॥ "नृगवाद्या जरायुजाः। स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः। उद्भिदस्तरुगुल्माद्याः" इत्यमरः ॥ ४२ ॥

दृष्टिप्रपातमिति ॥ कामः प्रयाणे यात्रायां पुरोगतः शुक्रो यस्मिन् देशे तं पुरःशुक्रं देशमिव ॥ "प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च। अपि शक्रसमो राजा हतसैन्यो निवर्तते" इति प्रतिषेधात् ॥ तस्य दृष्टिप्रपातं दृग्विषयं परिहृत्य प्रान्तेषु पार्श्वदेशेषु संसक्ता अन्योन्यसंसृष्टा नमेरूणां सुरपुंनागानां शाखा यस्य तत्। तिरोधानयोग्यमिति भावः। भूतपतेः शिवस्य ध्यानास्पदं समाधिस्थानम् ॥ "आस्पदं प्रतिष्ठायाम्" इति निपातः ॥ विवेश ॥ ४३ ॥

स देवदारुद्रुमवेदिकायां
शार्दूलचर्मव्यवधानवत्याम् ।
आसीनमासन्नशरीरपातः
(१)त्रियम्बकं संयमिनं ददर्श ॥ ४४ ॥

पर्यङ्कबन्धस्थिरपूर्वकाय-
मृज्वायतं संनमितोभयांसम् ।
उत्तानपाणिद्वयसन्निवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥

स इति ॥ आसन्नशरीरपात आसन्नमृत्युः स कामः शार्दूलचर्मणा व्यवधानवत्याम् । व्याघ्रचर्मास्तृतायाम् इत्यर्थः "मोचश्रीर्व्याघ्रचर्मणि" इति प्रायस्यादिति भावः । देवदारुद्रुमवेदिकायामासीनमुपविष्टं संयमिनं समाधिनिष्ठं त्रियम्बकं त्रिनेत्रं ददर्श ॥ केचित् साहसिकाः 'त्रिलोचनम्' इति पेठुः ॥ त्र्यम्बकमित्युक्ते पादपूरणव्यत्यासात्त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छान्दसो महाकविप्रयोगादभियुक्तैरङ्गीकृतः ॥ ४४ ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति—

पर्यङ्केति ॥ पर्यङ्कबन्धेन वीरासनेन स्थिरपूर्वकायं निश्चलोत्तरार्धमृजुरायतश्चर्ज्वायतस्तं संनमितावुभावंसौ यस्य तं तथोक्तम् ॥ वृत्तिविषये उभशब्दस्थान उभयशब्दप्रयोग इत्युक्तं कैयटेन ॥ उत्तान ऊर्ध्वतलो यः पाणिद्वयस्य सन्निवेशः संस्थानं तस्मात् अङ्कमध्ये प्रफुल्लं राजीवं पङ्कजं यस्य तमिव स्थितम् ॥ वीरासने वशिष्ठः—"एकं पादमथैकस्मिन्विन्यस्योरौ तु संस्थितम् । इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम्" इति । तथा

(१) त्रिलोचनम् ।

भुजङ्गमो(२)न्नद्धजटाकलापं
(३)कर्णावसक्तद्विगुणाक्षसूत्रम्।
कण्ठप्रभासङ्गविशेषनीलां
(४)कृष्णत्वचं ग्रन्थिमतीं दधानम्॥ ४६॥
किञ्चित्प्रकाशस्तिमितोग्रतारै-
र्भ्रूविक्रियायां (५)विरतप्रसङ्गैः।
नेत्रैरविस्पन्दितपक्ष्ममालै-
(६)र्लक्ष्यीकृतघ्राणमधोमयूखैः॥ ४७॥

योगसारे—"उत्तानिते करतले करमुत्तानितं परम्। आदाय्याङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम्" इति॥ ४५॥

भुजङ्गमेति॥ भुजङ्गमेनोन्नद्ध उन्नमय्य बद्धो जटाकलापो येन तं तथोक्तम्। कर्णावसक्तम्। कर्णावलम्बीत्यर्थः। अतएव द्विगुणं द्विरावृत्तमक्षसूत्रमक्षमाला यस्य तं कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलामतिनीलां ग्रन्थिमतीं बन्धनयुक्तां कृष्णत्वचं कृष्णमृगाजिनं दधानम्॥ ४६॥

किञ्चिदिति॥ किञ्चित्प्रकाशा ईषत्प्रकाशाः स्तिमिता निश्चला उग्राश्च ताराः कनीनिका येषां तैः॥ "तारकाक्ष्णः कनीनिका" इत्यमरः॥ भ्रूविक्रियायां भ्रूविक्षेपे विरतप्रसङ्गैः प्रसक्तिरहितैरविस्पन्दितपक्ष्ममालैरचलितपक्ष्मपङ्क्तिभिरधः प्रसृता मयूखा येषां तैरधोमयूखैर्नेत्रैः॥ त्रिनेत्रत्वाद् बहुवचनम्॥ लक्ष्यीकृतघ्राणं नासाग्रनिविष्टदृष्टिमित्यर्थः॥ 'करणान्यवहिष्कृत्य स्थाणुर्निश्चलात्मकः। आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः" इति योगसारे॥ ४७॥

---

(२) उद्बद्ध, आबद्ध। (३) कर्णावतंस। (४) मृगत्वचम्। (५) विगत। (६) लक्ष्यीकृत।

अवृष्टिसंरम्भमिवाम्बुवाह-
मपामिवाधारमनुत्तरङ्गम् ।
अन्तश्चराणां मरुतां निरोधा-
(७)न्निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥
कपालनेत्रान्तरलब्धमार्गै-
र्ज्योतिःप्ररोहैरुदितैः शिरस्तः ।
मृणालसूत्राधिकसौकुमार्यां
बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥ ४९ ॥
मनो नवद्वारनिषिद्धवृत्ति
हृदि व्यवस्थाप्य समाधिवश्यम् ।

अवृष्टीति ॥ अन्तश्चरन्तीत्यन्तश्चरास्तेषां मरुतां प्राणादीनां निरोधाद्धेतोरवृष्टिसंरम्भमविद्यमानवर्षसंभ्रममम्बुवाहमिव स्थितम् । एतेन प्राणनिरोधः सूचितः । अनुत्तरङ्गमनुद्भूततरङ्गमपामाधारं हृदमिव स्थितम् । एतेनापाननिरोधः सूचितः । तथा निवाते निर्वातदेशे निष्कम्पं निश्चलं प्रदीपमिव स्थितम् । एतेन शेषवायुनिरोधः सूचितः ॥ "निवातावाश्रयावातौ" इत्यमरः ॥ ४८ ॥

कपालेति ॥ कपालनेत्रान्तरेण ब्रह्मकरोटिनेत्रविवरेण लब्धमार्गैः शिरस्तो ब्रह्मरन्ध्रात् ॥ पञ्चम्यास्तसिल् ॥ उदितैरुद्भूतैः ज्योतिःप्ररोहैस्तेजोऽङ्कुरैर्मृणालसूत्राधिकं सौकुमार्यं मार्दवं यस्याः तां बालस्य इन्दोः शिरश्चन्द्रस्य लक्ष्मीं ग्लपयन्तम् ॥ ४९ ॥

मन इति ॥ नवभ्यो द्वारेभ्यो निषिद्धा निवर्तिता वृत्तिः सञ्चारो यस्य तत्तथोक्तम् । समाधिना प्रणिधानेन वश्यं वश-

---

(७) निर्वात ।

यमक्षरं (८)क्षेत्रविदो विदुस्त-
मात्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥

स्मरस्तथाभूतमयुग्मनेत्रं
पश्यन्नदूरान्मनसाप्यधृष्यम्।
नालक्षयत्साध्वससन्नहस्तः
स्रस्तं शरं चापमपि स्वहस्तात् ॥ ५१ ॥

निर्वाणभूयिष्ठमथास्य वीर्यं
संधुक्षयन्तीव वपुर्गुणेन।
अनुप्रयाता वनदेवताभ्या-
मदृश्यत स्थावरराजकन्या ॥ ५२ ॥

क्तम् ॥ यत्प्रत्ययः ॥ "प्रणिधानं समाधानं समाधिश्च समाश्रयः" इति हलायुधः ॥ मनो हृदि हृदयाख्येऽधिष्ठाने व्यवस्थाप्य ॥ तथा च वशिष्ठः—"यतो निर्याति विषयान्यस्मिंश्चैव प्रलीयते। हृदयं तद्विजानीयान्मनसः स्थितिकारणम्" इति ॥ क्षेत्रविदः क्षेत्रज्ञाः पुरुषाः। यं न क्षरतीत्यक्षरमविनाशिनं विदुः विदन्ति ॥ "विदो लटो वा" इति झेर्जुस् ॥ तमात्मानमात्मनि स्वस्मिन्नवलोकयन्तं साक्षात्कुर्वन्तम्। स्वातिरेकेण परमात्मनोऽभावादिति भावः ॥ ५० ॥

स्मर इति ॥ स्मरः कामस्तथाभूतं पूर्वोक्तरूपं मनसाप्यधृष्यमयुग्मनेत्रं विषमाक्षमदूरात्पश्यन्। साध्वसेन सन्नहस्तो विश्लथपाणिः सन्। स्वहस्तात् स्रस्तं शरं चापमपि चापं च नालक्षयन्न विवेद। भीतो मुह्यतीति भावः ॥ ५१ ॥

निर्वाणेति ॥ अथ निर्वाणेन नाशेन भूयिष्ठं निर्वाणभूयिष्ठम्। नष्टप्रायमित्यर्थः। अस्य स्मरस्य वीर्यं बलं वपुर्गुणेन

---

(८) वेदविदः।

अशोकनिर्भर्त्सितपद्मराग-
माकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृत(८)सिन्धुवारं
वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥

आवर्जिता किञ्चिदिव स्तनाभ्यां
वासो वसाना तरुणार्करागम् ।
(१)पर्याप्तपुष्पस्तवकावनम्रा
सञ्चारिणी पल्लविनी लतेव ॥ ५४ ॥

सौन्दर्येण संधुक्षयन्तीव पुनरुज्जीवयन्तीव स्थिता वनदेवताभ्यां सखीभूताभ्याम् अनुप्रयाता अनुगता स्थावरराजकन्या पार्वत्यदृश्यत दृष्टा ॥ ५२ ॥

तामेवाह चतुर्भिः—

अशोकेति ॥ अशोकपुष्पेण निर्भर्त्सितास्तिरस्कृताः पद्मरागा येन तत् तथोक्तम् । आकृष्टहेमद्युतीन्याहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिंस्तत्तथोक्तम् । मुक्ताकलापीकृतानि सिन्धुवाराणि निर्गुण्डीकुसुमानि यस्मिंस्तत् ॥ "सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः ॥ वसन्तपुष्पाण्येवाभरणं वहन्ती ॥ ५३ ॥

आवर्जितेति ॥ स्तनाभ्यां किञ्चिदावर्जितेषदानमितेव । तरुणार्कस्य राग इव रागो यस्य तत् ॥ बालार्कवर्णमित्यर्थः ॥ उपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च ॥ वासो वसाना आच्छादयन्ती । अतएव पर्याप्तपुष्पस्तवकावनम्रा पल्लविनी किसलयवती सञ्चारिणी लतेव । स्थितेति शेषः ॥ ५४ ॥

---

(८) -सिन्दुवारम् । (१) सुजातपुष्प ।

स्रस्तां नितम्बादवलम्बमाना
पुनःपुनः (२)केसरदामकाञ्चीम्।
न्यासीकृतां स्थानविदा स्मरेण
(३)मौर्वीं द्वितीयामिव कार्मुकस्य ॥५५॥

सुगन्धिनिश्वासविवृद्धतृष्णं
बिम्बाधरासन्नचरं द्विरेफम्।
प्रतिक्षणं संभ्रमलोलदृष्टि-
र्लीलारविन्देन निवारयन्ती ॥ ५६ ॥

तां वीक्ष्य सर्वावयवानवद्यां
रतेरपि ह्रीपदमादधानाम्।

स्रस्तामिति॥ स्थानविदा निक्षेपयोग्यस्थानवेदिना स्मरेण न्यासीकृतां निक्षेपीकृताम्। कर्मणि प्रभवतीति कार्मुकं धनुः॥ "कर्मण उकञ्" इत्युकञ्प्रत्ययः॥ तस्य द्वितीयां मौर्वीमिव स्थिताम्॥ अत्र हि न्यस्ता मौर्व्युत्तरत्र हरवैरनिर्यातनायोपयुज्यत इति भावः॥ नितम्बात् स्रस्तां चलितां केसरदाम बकुलमाला सैव काञ्ची तां पुनःपुनरवलम्बमाना हस्तेन धारयन्ती॥ ५५॥

सुगन्धीति॥ सुगन्धिभिर्निश्वासैः विवृद्धतृष्णाम्। बिम्बतुल्योऽधरो बिम्बाधरः॥ "वृत्तौ मध्यपदलोपः स्यात्" इति वामनः॥ तस्य आसन्नचरं सविकृष्टचरं द्विरेफं भृङ्गं प्रतिक्षणं संभ्रमेण लोलदृष्टिः चञ्चलाक्षी सती लीलारविन्देन निवारयन्ती॥ ५६॥

तामिति॥ सर्वावयवेष्वनवद्यामगर्ह्याम्॥ "अवद्यपण्य—" इति निपातः॥ रतेः कामकलत्रस्यापि ह्रीपदं लज्जानिमि-

---

(२) केसरपुष्पकाञ्चीम्। (३) द्वितीयमौर्वीमिव।

जितेन्द्रिये शूलिनि (४)पुष्पचापः
(५)स्वकार्यसिद्धिं (६)पुनराशशंसे ॥ ५७ ॥
(७)भविष्यतः पत्युरुमा च शम्भोः
समाससाद प्रतिहारभूमिम् ।
योगात्स (८)चान्तः परमात्मसंज्ञं
दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८ ॥
ततो भुजङ्गाधिपतेः फणाग्रै-
रधः कथञ्चिद्धृतभूमिभागः ।

त्तमादधानाम् । न्यूनताम् आवहन्तीमित्यर्थः । तां पार्वतीं वीक्ष्य पुष्पचापः कामो जितेन्द्रिये । दुर्जयेऽपीत्यर्थः । शूलिनि शिवे विषये स्वकार्यसिद्धिं पुनराशशंसे चकमे ॥ पूर्वं "साध्व-समस्तहस्तः" ( ३ । ५१ ) इत्यादिना कार्यसिद्धेरन्मूलितत्वाभि-धानादिह पुनरित्युक्तम् ॥ ५७ ॥

भविष्यत इति ॥ उमा च भविष्यतः पत्युः शम्भोः प्रति-हारभूमिं द्वारदेशं समाससाद ॥ "स्त्री द्वार्द्वारं प्रतीहारे" इत्यमरः ॥ स शम्भुः अन्तः परमात्मेति संज्ञा यस्य तत्परं मुख्यम् ॥ "परं दूरान्यमुख्येषु" इति यादवः ॥ ज्योतिर्दृष्ट्वा साक्षात्कृत्य योगाद्ध्यानात् ॥ "योगः सन्नहनोपायध्यानसङ्ग-तियुक्तिषु" इत्यमरः ॥ उपारराम उपारतः ॥ "व्याङ्परिभ्यो रमः" इति परस्मैपदम् ॥ ५८ ॥

तत इति ॥ ततो भुजङ्गाधिपतेः शेषस्य फणाग्रैरधो भूमि-रधः कथञ्चिदतियत्नेन धृतो भूमिभागः स्वोपवेशनभूभागो यस्य स यथोक्तः । वायुधारणाहितलाघवनिह्नवस्था भगवतो

(४) पुष्पकेतुः । (५) स्वकर्मसिद्धिम् । (६) पुनराशशंस ।
(७) उपासितुं सा च पिनाकपाणिम् । (८) चान्तर्गतम् ।

शनैःकृतप्राणविमुक्तिरीशः
पर्यङ्कबन्धं निविड़ं बिभेद ॥ ५९ ॥

तस्मै शशंस प्रणिपत्य नन्दी
शुश्रूषया शैलसुतामुपेताम्।
प्रवेशयामास च भर्तुरेनां
(९)भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ६० ॥

तस्याः सखीभ्यां प्रणिपातपूर्वं
स्वहस्तलूनः शिशिरात्ययस्य।
व्यकीर्यत त्र्यम्बकपादमूले
पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ६१ ॥

त्वादिति भावः। शनैः कृता प्राणानां प्राक्कुब्धानां विमुक्तिः पुनः सञ्चारो येन स कृतप्राणविमुक्तिरीशो निविड़ं दृढ़ं पर्यङ्कबन्धं वीरासनं बिभेद शिथिलीचकार ॥ ५९ ॥

तस्मा इति ॥ अथ नन्दी तस्मै भगवते ॥ क्रियाग्रहणात् चतुर्थी ॥ प्रणिपत्य नमस्कृत्य शुश्रूषया सेवया निमित्तेन उपेताम्। सेवार्थमागतामित्यर्थः। शैलसुतां शशंस निवेदयामास। भर्तुः स्वामिनो भ्रूक्षेपमात्रेण भ्रूसंज्ञयैवानुमतप्रवेशामङ्गीकृतप्रवेशामेनां शैलसुतां प्रवेशयामास च ॥ ६० ॥

तस्या इति ॥ तस्याः पार्वत्याः सखीभ्यां पूर्वोक्ताभ्यां स्वहस्तेन लून उपचितः पल्लवभङ्गभिन्नः किसलयशकलमिश्रः शिशिरात्ययस्य वसन्तस्य सम्बन्धी पुष्पोच्चयः पुष्पप्रकरः ॥ "हस्तादाने चेरस्तेये" इति चञ्विषयत्वात् कवीनामयं प्रामादिकः प्रयोग इति वल्लभः ॥ त्र्यम्बकपादमूले प्रणिपातपूर्वं नमस्कारपूर्वकं व्यकीर्यत विक्षिप्तः ॥ ६१ ॥

(९) भ्रूक्षेपमात्रानुमितप्रवेशाम्।

उमापि नीलालकमध्यशोभि
विस्रंसयन्ती नवकर्णिकारम् ।
चकार कर्णच्युतपल्लवेन
मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ६२ ॥

अनन्यभाजं पतिमाप्नुहीति
सा तथ्यमेवाभिहिता भवेन ।
न हीश्वरव्याहृतयः कदाचित्
पुष्णन्ति लोके विपरीतमर्थम् ॥ ६३ ॥

कामस्तु बाणावसरं प्रतीक्ष्य
पतङ्गवद्वह्निमुखं विविक्षुः ।

उमेति ॥ उमापि नीलालकानां मध्ये शोभत इति तथो क्तम् । अलकन्यस्तमित्यर्थः । नवकर्णिकारं विस्रंसयन्ती कर्णा च्युतः पल्लवो यस्य तेन मूर्ध्ना वृषभध्वजाय प्रणामं चकार क्रियाग्रहणात् सम्प्रदानत्वम् ॥ ६२ ॥

अनन्येति ॥ सा कृतप्रणामा देवी भवेन हरेण । अन्य न भजतीति तमनन्यभाजम् ॥ "भजो ण्विः" इति ण्विप्रत्ययः सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः ॥ पतिमाप्नुहीति तथ्यं सत्यमेवाभिहिता उक्ता । उत्तरत्र तथैव सम्भवादिति भावः ॥ अभिदधातेर्ब्रुवर्थस्य दुहादित्वादप्रधाने कर्मणि क्तः । तथाहि । ईश्वरव्याहृतयो महापुरुषोक्तयः कदाचिदपि लोके भुवने ॥ "लोकस्तु भुवने जने" इत्यमरः ॥ विपरीतं विसंवा दिनमर्थमभिधेयं न पुष्णन्ति । न बोधयन्तीत्यर्थः ॥ ६३ ॥

काम इति ॥ कामस्तु बाणावसरं प्रतीक्ष्योमासन्निधाना दयमेव बाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं पतङ्गव च्छलभवत् ॥ "समौ पतङ्गशलभौ" इत्यमरः ॥ "तेन तुल्यं

उमासमक्षं हरबद्धलक्ष्यः
शरासनज्यां मुहुराममर्श ॥ ६४ ॥

अथोपनिन्ये गिरिशाय गौरी
तपस्विने ताम्ररुचा करेण।
विशोषितां भानुमतो मयूखै-
र्मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥

प्रतिग्रहीतुं प्रणयिप्रियत्वात्
त्रिलोचनस्तामुपचक्रमे च।
सम्मोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ॥ ६६ ॥

क्रिया चेद्वतिः" इति वतिप्रत्ययः॥ वह्निमुखं विविक्षुः प्रवेष्टुमिच्छुः॥ विशतेः सनन्तादुप्रत्ययः॥ उमायाः समक्षम् अक्ष्णोः समीपम् उमासमक्षम्॥ "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तोऽच्प्रत्ययः॥ हरे बद्धलक्ष्यः सन्। शरासनस्य ज्यां मौर्वीं मुहुराममर्श परामृष्टवान् ॥ ६४ ॥

अथेति॥ अथ गौरी। तपोऽस्यास्तीति तपस्वी॥ "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः॥ तस्मै तपस्विने गिरिशाय ताम्ररुचा रक्तवर्णेन करेण भानुमतोंऽशुमतो मयूखैर्विशोषितां मन्दाकिन्याः पुष्कराणि पद्मानि तेषां बीजानि तेषां मालां जपमालिकामुपनिन्ये समर्पितवती ॥ ६५ ॥

प्रतिग्रहीतुमिति॥ त्रिलोचनश्च प्रणयिप्रियत्वादर्थिप्रियत्वात्तामक्षमालां प्रतिग्रहीतुं स्वीकर्तुमुपचक्रमे। पुष्पं धनुर्यस्य स पुष्पधन्वा कामश्च॥ "वा संज्ञायाम्" इत्यनङादेशः॥ सम्मोह्यतेऽनेनेति सम्मोहनं नाम। नामेति प्रसिद्धौ। अमोघं बाणं सायकं धनुषि समधत्त, संहितवान्॥ ६६ ॥

हरस्तु किञ्चित् (१)परिलुप्तधैर्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे विम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥ ६७ ॥

विवृण्वती शैलसुतापि भाव-
मङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ
मुखेन पर्यस्तविलोचनेन ॥ ६८ ॥

अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्वशित्वाद्बलवन्निगृह्य ।

हर इति ॥ हरस्तु हरोऽपि चन्द्रोदयारम्भे अम्बुराशिरि किञ्चिदीषत् परिलुप्तधैर्यः । न तु प्राकृतजनवदत्यन्तलुप्तधै इति भावः । विम्बफलतुल्योऽधरोष्ठो यस्य तस्मिन् उमामुखे विलोचनानि व्यापारयामास । त्रिभिरपि लोचनैः साभि लाषमद्राक्षीदित्यर्थः । एतेन भगवतो रतिभावोदय उक्तः ॥ ६७

विवृण्वतीति ॥ शैलसुतापि स्फुरद्बालकदम्बकल्पैर्विकसत् कोमलनीपसदृशैः । पुलकितैरित्यर्थः ॥ "ईषदसमाप्तौ—" इत्यादिना कल्पप्प्रत्ययः ॥ अङ्गैर्भावं रत्याख्यं विवृण्वती प्रक शयन्ती चारुतरेण पर्यस्तविलोचनेन व्रीडाविभ्रान्तनेत्र मुखेन असाचि साचि सम्पद्यमाना साचीकृता तिर्यक्कृता "तिर्यगर्थे साचि तिरः" इत्यमरः ॥ तस्थौ । क्रियया मुख साचीकृत्य स्थितेत्यर्थः । न केवलं हरस्यैव देव्या अप्युदितं रतिभाव इति भावः ॥ ६८ ॥

अथेति ॥ अथ अयुग्मानि नेत्राणि यस्य सोऽयुग्मनेत्रस्त्रि

(१) परिवृत्तधैर्यः ।

हेतुं स्वचेतोविकृतेर्दिदृक्षु-
र्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९ ॥

स दक्षिणापाङ्गनिविष्टमुष्टिं
नतांसमाकुञ्चितसव्यपादम्।
ददर्श चक्रीकृतचारुचापं
प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ ७० ॥

तपःपरामर्शविवृद्धमन्यो-
र्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य।
स्फुरन्नुदर्चिः सहसा तृतीया-
दक्ष्णः कृशानुः किल निष्पपात ॥ ७१ ॥

…शी वशित्वाज्जितेन्द्रियत्वादिन्द्रियक्षोभं पूर्वोक्तमिन्द्रियविकारं …नवलवद् दृढं निगृह्य निवार्य स्वचेतोविकृतेः स्वचित्तविका-…स्य हेतुं कारणं दिदृक्षुर्द्रष्टुमिच्छुर्दिशामुपान्तेषु दृष्टिं ससर्ज …सारयामास ॥ ६९ ॥

स इति ॥ स भगवान् दक्षिणापाङ्गे निविष्टा स्थिता …ुष्टिर्यस्य तं नतांसमाकुञ्चितः सव्यपादो यस्य तम्। आली-…ाख्यस्थानके स्थितमित्यर्थः। चक्रीकृतचारुचापं मण्डली-…तसौम्यकोदण्डं प्रहर्तुमभ्युद्यतमात्मयोनिं मनोभवं ददर्श ॥ …ालीढलक्षणमाह यादवः—"स्थानानि धन्विनां पञ्च तत्र …शाखमस्त्रियाम्। वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृती। …मानौ स्यात्समपदमालीढं पदमग्रतः। दक्षिणं वाममाकुञ्च्य …त्यालीढं विपर्ययः" इति ॥ ७० ॥

तप इति ॥ तपःपरामर्शेन तपस आस्कन्देन विवृद्ध-…न्योः प्रवृद्धकोपस्य भ्रूभङ्गेण दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य …रस्य तृतीयादक्ष्णः स्फुरन् उद्दीप्यमान उदर्चिः उद्गतज्वालः

क्रोधं प्रभो संहर संहरेति
यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥ ७२ ॥

तीव्राभिषङ्गप्रभवेण वृत्तिं
मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं
कृतोपकारेव रतिर्बभूव ॥ ७३ ॥

कृशानुरग्निः सहसातर्कितमेव ॥ "अतर्किते तु सहसा" इत्यमरः ॥ निष्पपात किल निश्चक्राम खलु ॥ ७१ ॥

क्रोधमिति ॥ हे प्रभो स्वामिन् । क्रोधं संहर संहर निवर्तय निवर्तय ॥ "चापले द्वे भवत इति वक्तव्यम्" इति वार्तिकेन द्वित्वम् । "संभ्रमेण वृत्तिश्चापलम्" इति काशिका ॥ इत्येवं मरुतां देवानां गिरो वाचः खे व्योम्नि यावच्चरन्ति प्रवर्तन्ते तावत्तत्कालमेव भवस्य नेत्राज्जन्म यस्य स भवनेत्रजन्मा ॥ "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे" इति वामनः । स वह्निः मदनं भस्मैव अवशेषो यस्य तं भस्मावशेषं चकार । ददाहेत्यर्थः ॥ ७२ ॥

तीव्रेति ॥ तीव्राभिषङ्गप्रभवेणातिदुःसहपराभवसम्भवेन ॥ "अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च" इति वैजयन्ती ॥ इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्च्छया ॥ कर्त्रा ॥ रतिः मदनभार्या मुहूर्तमज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती कृतोपकारेव बभूव । सहसा दुःखोपनिपातात् सुमूर्च्छेत्यर्थः । मोहेन दुःखसंवेदनाभावात्तस्योपकारकत्वोक्तिः ॥ ७३ ॥

तमाशु विघ्नं तपसस्तपस्वी
वनस्पतिं वज्र इवावभज्य।
स्त्रीसन्निकर्षं (२)परिहर्तुमिच्छ-
न्नन्तर्दधे भूतपतिः सभूतः॥ ७४॥

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित्॥७५॥

(३)सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम्।

तमिति॥ तपस्वी तपोनिष्ठो भूतपतिः शिवः तपसो विघ्नमन्तरायभूतं तं काममाशु वज्रोऽशनिर्वनस्पतिं वृक्षमिवावभज्य भङ्क्त्वा स्त्रीसन्निकर्षं स्त्रीसन्निधानं परिहर्तुमिच्छन्। तस्यानर्थहेतुत्वादिति भावः। सभूतः सगणः सन्नन्तर्दधे॥७४॥

शैलात्मजेति॥ शैलात्मजा पार्वत्यप्युच्छिरस उन्नतशिरसो महतः पितुरभिलाषं हरो वरोऽस्त्विति मनोरथं ललितं सुन्दरमात्मनो वपुश्च व्यर्थं निष्फलं समर्थ्य विचार्य सख्योः समक्षं पुर इति च हेतुनाधिकं जातलज्जा। समानजनसमक्षमवमानस्यातिदुःसहत्वादिति भावः। शून्या निरुत्साहा सती कथञ्चित् कृच्छ्रेण भवनस्याभिमुखी जगाम॥ ७५॥

सपदीति॥ सपद्यद्रिर्हिमवान् रुद्रस्य संरम्भात्कोपाद्भीत्या। "संरम्भः सम्भ्रमे कोपे" इति विश्वः॥ मुकुलिताक्षीं निमीलितनेत्राम्॥ "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति षच्प्रत्ययः। "षिद्गौरादिभ्यश्च" इति ङीष्॥ अनुकम्पितुमर्हामनु-

(२) परिहर्तुकामः सोऽन्तर्दधे। (३) अथ सः।

सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद्वेग(४)दीर्घीकृताङ्गः ॥७६॥

---

## चतुर्थः सर्गः ।

अथ मोहपरायणा सती
विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता
नववैधव्यमसह्यवेदनम् ॥ १ ॥

कन्यकाम् ॥ "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः ॥ दुहितरं दोर्भ्यामादाय दन्तयोः लग्नां पद्मिनीं नलिनीं बिभ्रत् सुरगज इव वेगेन रयेण दीर्घीकृताङ्ग आयतीकृतशरीरः सन् । पन्थानं प्रतिगता प्रतिपथा मार्गानुसारिणी गतिर्यस्य स प्रतिपथगतिरासीत् । पन्थानमनुसृत्य जगामेत्यर्थः ॥ ७६ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये मदनदहनो नाम तृतीयः सर्गः ।

---

मूर्च्छिता रतिरित्युक्तम् । सम्प्रति तद्वृत्तान्तमेवाह—

अथेति ॥ अथ अनन्तरं मोहो मूर्च्छा परमयनमाश्रयो यस्याः सा मोहपरायणा मोहैकशरणा सती ॥ "परायणमभिप्रेते तत्परे परमाश्रये" इति यादवः ॥ विवशा मूढत्वाद्विचेष्टा कामवधू रतिः । असह्या दुःसहा वेदना यस्मिंस्तत्

---

(४) -दीर्घीकृतात्मा ।

अवधानपरे चकार सा
प्रलयान्तोन्मिषिते विलोचने।
न विवेद तयोरतृप्तयोः
प्रियमत्यन्त(१)विलुप्तदर्शनम्॥ २॥

अयि जीवितनाथ जीवसी-
त्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ
हरकोपानलभस्म केवलम्॥ ३॥

तथोक्तम्। विधवाया गतभर्तृकाया भावो वैधव्यम्। नवं च तद्वैधव्यं चेति नववैधव्यम्। नवग्रहणं दुःसहत्वद्योतनार्थम्। प्रतिपादयिष्यता अनुभावयिष्यता॥ क्रियार्थक्रियायां लृट्॥ विधिना दैवेन॥ "विधिर्विधाने दैवे च" इत्यमरः॥ विबोधिता। वैधव्यानुभवफलोऽयं विधिरिति भावः॥ अस्मिन् सर्गे वियोगिनीवृत्तानि—"विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी" इति लक्षणात्॥ १॥

अवधानेति॥ सा रतिः प्रलयान्ते मूर्च्छावसाने॥ "प्रलयो नष्टचेष्टता" इत्यमरः॥ उन्मिषिते उन्मीलिते विलोचने। अवधानं परं प्रधानं ययोस्ते अवधानपरे दिदृक्षयावहिते चकार॥ द्रष्टव्याभावात्तु न विवेदेत्याह—नेति। प्रियं काममतृप्तयोस्तृप्तिं न गतयोः। नित्यदिदृक्षमाणयोरित्यर्थः। तयोर्लोचनयोः दर्शनक्रियापेक्षया॥ सम्बन्धे षष्ठी॥ अत्यन्तविलुप्तं दर्शनं यस्य लोचनयोः करणयोर्यस्य कर्मभूतस्य तमत्यन्तविलुप्तदर्शनं सन्तं न विवेद न ज्ञातवती। प्रियनाशापरिज्ञानाद्धि-दृक्षाबद्ध इति तात्पर्यार्थः॥ २॥

अयीति॥ अयीति प्रश्ने। "अयि प्रश्नानुनययोः" इति

---

(१) -निमग्न।

अथ सा पुनरेव विह्वला
वसुधालिङ्गन(२)धूसरस्तनी ।
विललाप विकीर्णमूर्धजा
समदुःखामिव कुर्वती स्थलीम् ॥ ४ ॥

उपमानमभूद्विलासिनां
करणं यत्तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां
न विदीर्ये कठिनाः खलु स्त्रियः ॥ ५ ॥

विस्मः ॥ अयि जीवितनाथ जीवसि प्राणिषि कच्चिदित्यभिधायोत्थितया तया रत्या पुरोऽग्रे क्षितौ पुरुषस्याकृतिरिवाकृतिर्यस्य तत् पुरुषाकृति केवलमेकं हरकोपानलभस्म दृष्टमे दृष्टम् । न तु पुरुष इति भावः ॥ ३ ॥

अथेति ॥ अथ भस्मदर्शनानन्तरं पुनरेव विह्वला विक्लवा वसुधालिङ्गनधूसरस्तनी वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ यस्याः सा तथोक्ता ॥ "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीप् ॥ विकीर्णमूर्धजा विकीर्णा विक्षिप्ता मूर्धजाः केशा यस्याः सा तथोक्ता सा रतिः स्थलीं वनभूमिम् । तत्रत्यान् प्राणिन इत्यर्थः ॥ "जानपदकुण्डगोणस्थल—" इत्यादिना ङीष् ॥ समदुःखां स्वतुल्यशोकां कुर्वतीव विललाप परिदेवितवती ॥ "विलापः परिदेवनम्" इत्यमरः ॥ ४ ॥

उपमानेति ॥ तव यत् करणं गात्रम् ॥ "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः ॥ कान्तिमत्तया सौन्दर्येण हेतुना विलासिनां विलसनशीलानाम् ॥ "वौ कषलस—" इत्यादिना घिनुण्प्रत्ययः ॥ उपमीयते येन तदुपमानमभूत् । तत्करण-

(२) धूसराकृतिः ।

क्व नु मां त्वदधीनजीवितां
विनिकीर्य क्षणभिन्नसौहृदः।
नलिनीं क्षतसेतुबन्धनो
जलसङ्घात इवासि विद्रुतः॥ ६॥

कृतवानसि विप्रियं न मे
प्रतिकूलं न च ते मया कृतम्।
किमकारणमेव दर्शनं
विलपन्त्यै रतये न दीयते॥ ७॥

मिदमीदृशीं दशामवस्थां गतम्। भस्मीभूतमित्यर्थः। तथापि न विदीर्ये न विदीर्णा भवामि॥ कर्तरि लट्॥ तथाहि। स्त्रियः कठिनाः खलु। कठिनत्वादविदीर्यमाणत्वमित्यर्थः॥ कारणात्कार्यसमर्थनरूपोऽर्थान्तरन्यासः—"धीरसञ्चारिणी दृष्टिर्गतिर्गौरवभाषिता। स्मितपूर्वं तथालापो विलास इति कीर्तितः"॥ ५॥

क्वेति॥ हे प्रिय क्षतसेतुबन्धनो भग्नसेतुबन्धो जलसङ्घातो जलौघो नलिनीमिव। जलैकायत्तजीवितामिति शेषः। त्वदधीनजीवितां त्वदायत्तप्राणां मां क्व नु विनिकीर्य कुत्र वा निक्षिप्य क्षणभिन्नसौहृदः क्षणात्यक्तसौहार्दः सन्। विद्रुतः पलायितोऽसि॥ सेतुसौहृदयोः स्थितिहेतुत्वेन साम्यम्। सुहृदो भावः सौहृदम्॥ युवादित्वादण्प्रत्ययः। "हृदयस्य हृल्लेखयदण्लासेषु" इति हृदादेशः। अपि हृद्भावात "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः। हृद्भूतस्याभिधाने तूभयपदवृद्धिः स्यात्। यथा सुहृदो भावः सौहार्दमिति। तदेवाह वामनः—"सौहृददौर्हृदशब्दावनणि हृद्भावात्" इति॥६॥

कृतेति॥ हे प्रिय त्वं मे मम विप्रियमप्रियं कृतवानासि। मया च ते तव प्रतिकूलम् अप्रियं न कृतम्। अकारणं निष्का-

स्मरसि स्मर मेखलागुणै-
रुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेशरदूषितेक्षणा-
न्यवतंसोत्पलताड़नानि (३)वा ॥ ८ ॥

हृदये वससीति मत्प्रियं
यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं
त्वमनङ्गः कथमक्षता रतिः ॥ ९ ॥

रणमेव । परस्परापकाररूपकारणाभावेऽपीत्यर्थः ॥ क्रियाविशेषणमेतत् ॥ विलपन्त्यै । त्वद्दर्शनार्थिन्या अपीति भावः रतये किं कथं दर्शनं न दीयते ॥ क्रियाग्रहणाच्चतुर्थी ॥ ७ ॥

विप्रियमाशङ्कते—

स्मरसीति ॥ हे स्मर । गोत्रस्खलितेषु नामव्यत्यासेषु "गोत्रं नाम्नाऽचले कुले" इति विश्वः ॥ मेखलागुणैर्बन्धनं स्मरसि उत स्मरसि वा ॥ "विकल्पे किं किमुत च" इत्यमरः ॥ च्युतकेशरैर्भ्रष्टकिञ्जल्कैर्दूषिते ईक्षणे येषु तानि अवतंसोत्पलताड़नानि । सधूलिक्षेपताड़नानीत्यर्थः । स्मरसि वा । अपकारस्मरणादिदमदर्शनमिति भावः ॥ ८ ॥

हृदय इति ॥ हृदये वससीति स्मरवाक्यानुवादः । इत्येवंरूपं मत्प्रियं यदवोच उक्तवानसि ॥ ब्रूञो लुङि "वच उम्" इत्युमागमः ॥ तत् कैतवमवैमि मिथ्येति मन्ये । इदं वचनमुपचारपदं परस्य रञ्जनार्थं यदसत्यभाषणं स उपचारस्तस्य पदं स्थानम् । कैतवस्थानमिति यावत् । न चेत्त्वमनङ्गोऽशरीरः । कथं रतिरक्षताविनष्टा । आश्रयनाशेऽप्याश्रितमविनष्टमिति विरोधादिति भावः ॥ ९ ॥

---

(३) च ।

परलोकनवप्रवासिनः
प्रतिपत्स्ये पदवीमहं तव।
विधिना जन एष वञ्चित-
स्त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥

रजनीतिमिरावगुण्ठिते
पुरमार्गे घनशब्दविक्लवाः।
वसतिं प्रिय कामिनां प्रिया-
स्त्वदृते प्रापयितुं क ईश्वरः ॥ ११ ॥

नयनान्यरुणानि घूर्णयन्
वचनानि स्खलयन् पदे पदे।

न च मे कश्चिद्विचारः किन्तु लोकः शोच्यत इत्याह—

परलोकेति ॥ परलोकं प्रति नवप्रवासिनोऽचिरप्रोषितस्य। अनेनानुगमनकालानतिपातः सूच्यते। तव पदवीं मार्गं प्रतिपत्स्ये। त्वामनुगमिष्यामीत्यर्थः। अतो मे नास्ति विचार इति भावः। किन्तु विधिना दैवेन एष जनो लोको वञ्चितः प्रतारितः। देहिनां सुखं त्वदधीनं त्वय्यधीनं खलु। अधिशब्दस्य शौण्डादिकत्वात् "सप्तमी शौण्डैः" इति समासः॥ "अध्युत्तरपदात्" इति खप्रत्ययः। एवमन्यत्रापि॥ सुखप्रदाभावे कुतः सुखमिति भावः ॥ १० ॥

तदेवाह—

रजनीति ॥ हे प्रिय। रजनीतिमिरेण अवगुण्ठित आवृते पुरमार्गे घनशब्दविक्लवा गर्जितभीताः प्रियाः कामिनां वसतिं प्रापयितुं त्वदृते त्वां विना॥ "अन्यारादितरर्ते—" इत्यादिना पञ्चमी॥ क ईश्वरः शक्तः। न कश्चिदित्यर्थः। न हि कामान्धानां भीतिरस्तीति भावः ॥ ११ ॥

असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना ॥ १२ ॥

अवगम्य कथीकृतं वपुः
प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकर-
स्तनुतां दुःखमनङ्ग मोक्ष्यति ॥ १३ ॥

हरितारुणचारुबन्धनः
कलपुंस्कोकिलशब्दसूचितः ।
वद संप्रति कस्य बाणतां
नवचूतप्रसवो गमिष्यति ॥ १४ ॥

नयनानीति ॥ अरुणानि नयनानि घूर्णयन् भ्रमयन् तथा पदे पदे प्रतिपदम् ॥ वीप्सायां द्विरुक्तिः ॥ वचनानि स्खलयन् विपर्यासयन् प्रमदानां वारुणीमदो मद्यमदोऽधुना त्वय्यसति विडम्बना अनुकृतिमात्रम् । मदनाभावे मदस्य निष्फलत्वादिति भावः । तथा च शिशुपालवधे—"तां मदो दयितसङ्गमभूषः" ( १० । ३३ ) इति ॥ १२ ॥

अवगम्येति ॥ हे अनङ्ग अशरीर । प्रियबन्धोः प्रियसखस्य तव वपुः शरीरं कथीकृतमकथा कथा सम्पद्यमानं कृतं शब्दमात्रावशिष्टम् अवगम्य ज्ञात्वा निष्फलोदयः । उद्दीप्याभावादुद्दीपनवैफल्यमिति भावः । निशाकरश्चन्द्रो बहुले कृष्णपक्षे गतेऽपि तनुतां कार्श्यं दुःखं यथा तथा कृच्छ्रात् मोक्ष्यति । वृथा वृद्धिरिति दुःखायिष्यत इत्यर्थः ॥ १३ ॥

हरितेति । हरितं चारुणं च ॥ "वर्णो वर्णेन" इति तत्पुरुषः ॥ हरितारुणं चारु बन्धनं वृन्तं पुष्पस्य यस्य स तथोक्तः । कलेन मधुरेण पुंस्कोकिलशब्देन पुरुषकोकिलनादेन सूचि-

अलिपङ्क्तिरनेकशस्त्वया
गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुण(४)स्वनैरियं
गुरुशोकामनुरोदितीव माम् ॥ १५ ॥

प्रतिपद्य मनोहरं वपुः
पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां
मधुरालापनिसर्गपण्डिताम् ॥ १६ ॥

तोऽनुमापितस्य। चूतचर्वणकार्यत्वात् कलशब्दस्येति भावः। नवचूतप्रसवो नवचूतकुसुमं संप्रति कस्य बाणतां शरत्वं गमिष्यति वद। अन्यस्य पुष्पबाणस्याभावादिति भावः ॥ १४ ॥

अलीति ॥ त्वया अनेकशो बहुशो धनुषः कार्मुकस्य गुणकृत्ये मौर्वीकार्ये गुणवत्कर्मणि च नियोजिताधिकृतेयमलिपङ्क्तिः करुणस्वनैर्दीनस्वनैर्विरुतैः कूजितैर्गुरुशोकां दुर्भरदुःखाम् ॥ "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति शब्दार्णवः ॥ मामनुरोदितीव ॥ उपसर्गात्सकर्मकत्वम् ॥ "रुदादिभ्यः सार्वधातुके" इतीडागमः ॥ १५ ॥

प्रतिपद्येति ॥ तावत् पुनरपि मनोहरं वपुः शरीरं प्रतिपद्य प्राप्योत्थितः सन्। मधुरालापेषु प्रियोक्तिषु निसर्गपण्डितां स्वभावप्रगल्भां कोकिलां रतिदूतिपदेषु सुरतदूतीस्थानेष्वादिदिश आज्ञापय। प्रगल्भानामिव दौत्याधिकार इति भावः ॥ ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयाद् ह्रस्वः। "अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिरम्" इति केचित्। "उणादयो बहुलम्" इति बहुलग्रहणाद् ह्रस्व इति वल्लभः ॥ १६ ॥

---

(४) -स्वरैः ।

शिरसा प्रणिपत्य याचिता-
न्युपगूढ़ानि सवेपथूनि च।
सुरतानि च तानि ते रहः
स्मर संस्मृत्य न शान्तिरस्ति मे ॥ १७ ॥

रचितं रतिपण्डित त्वया
स्वयमङ्गेषु ममेदमार्तवम्।
ध्रियते कुसुमप्रसाधनं
तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥

(६)विबुधैरसि यस्य दारुणै-
रसमाप्ते (७)परिकर्मणि स्मृतः।

शिरसेति ॥ हे स्मर। शिरसा प्रणिपत्य याचितानि सवेपथूनि सकम्पानि ॥ "ट्वितोऽथुच्" इत्यथुच्प्रत्ययः ॥ सात्विकान्तरोपलक्षणमेतत् ॥ "स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू। अश्रुवैस्वर्यमित्यष्टौ सात्विकाः परिकीर्तिताः" इति। उपगूढ़ान्यालिङ्गनानि च। नपुंसके भावे क्तः ॥ तान्यनुभूतप्रकाराणि रह एकान्ते सुरतानि च संस्मृत्य मे शान्तिर्नास्ति। अत्र समानकर्तृकत्वं दुर्घटं समानक्रियापेक्षास्तीति केचित् ॥ १७ ॥

रचितमिति ॥ हे रतिपण्डित रतिकुशल। त्वया ममाङ्गेषु अवयवेषु स्वयं रचितम्। ऋतुरस्य प्राप्त आर्तवं वासन्तम्। "ऋतोरण्" इत्यण्प्रत्ययः ॥ कुसुमप्रसाधनं पुष्पाभरणमिदं ध्रियतेऽवतिष्ठते ॥ "धृङ् अवस्थाने" इति धातोस्तौदादिकात् कर्तरि लट् ॥ तव तत् प्रसाधकं चारु सुन्दरं वपुस्तु न दृश्यते ॥ १८ ॥

---

(६) विबुधैस्त्वमनङ्ग। (७) प्रतिकर्मणि।

तमिमं कुरु दक्षिणेतरं
चरणं निर्मितरागमेहि मे ॥ १९ ॥

अहमेत्य पतङ्गवर्त्मना
पुनरङ्काश्रयणी भवामि ते ।
चतुरैः सुरकामिनीजनैः
प्रिय यावन्न विलोभ्यसे दिवि ॥ २० ॥

मदनेन विनाकृता रतिः
क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं
रमण त्वामनुयामि यद्यपि ॥ २१ ॥

विबुधैरिति ॥ दारुणैः क्रूरैः । प्राणान्तिके कर्मणि नियोगादिति भावः । विबुधैर्देवैः । अनभिज्ञत्वं च ध्वन्यते । यस्य मञ्चरणस्य परिकर्मणि प्रसाधने ॥ "परिकर्म प्रसाधनम्" इत्यमरः ॥ असमाप्ते सति स्मृतोऽसि तम् इमं दक्षिणेतरं वामं मे चरणं निर्मितरागं कुर्वन्नागच्छ ॥ १९ ॥

अहमिति ॥ अहं पतङ्गवर्त्मना शलभमार्गेण । अग्निप्रवेशेनेत्यर्थः ॥ "पतङ्गः शलभे चाग्नौ मार्जारेऽर्के शरे खगे" इति वैजयन्ती ॥ एत्यागत्य पुनस्तेऽङ्काश्रयणी उत्सङ्गवर्तिनी भवामि संप्रत्येव भविष्यामि ॥ "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट् ॥ हे प्रिय । दिवि स्वर्गे चतुरैः सुरकामिनीजनैः अप्सरोगणैर्यावन्न विलोभ्यसे विलोभयिष्यसे ॥ "यावत् पुरानिपातयोर्लट्" इति लट् ॥ २० ॥

मदनेनेति ॥ हे रमण । त्वामनुयामि यद्यप्यनुगमिष्याम्येव ॥ "वर्तमानसामीप्ये वर्तमानवद्वा" इति लट् ॥ "यद्यपीत्यवधारणे" इति केशवः ॥ किन्तु रतिर्मदनेन विनाकृता ।

क्रियतां कथमन्त्यमण्डनं
परलोकान्तरितस्य ते मया ।
सममेव गतोऽस्यतर्किता
गतिमङ्गेन च जीवितेन च ॥ २२ ॥

ऋजुतां नयतः स्मरामि ते
शरमुत्सङ्ग(८)निषण्णधन्वनः ।
मधुना सह सस्मितां कथां
नयनोपान्त(९)विलोकितं च यत् ॥ २३ ॥

वियोजिता सति इत्यर्थः ॥ सुप्सुपेति समासः ॥ क्षणमात्रं जीविता किल इतीदं वचनीयं निन्दा मे मम व्यवस्थितं स्थिरमभूत् ॥ २१ ॥

क्रियतामिति ॥ परलोकेऽन्तरितस्य व्यवहितस्य । मृतस्येत्यर्थः । ते तव मया अन्त्यमण्डनं कथं केन प्रकारेण क्रियताम् ॥ क्रियतामित्यत्र कामचारे लोट् बोध्यः ॥ द्रुतदग्धस्य ते यथेच्छमण्डनमपि न सम्भवतीत्यर्थः । कुतः । अङ्गेन च जीवितेन च समं सहैव अतर्किताम् अविचारितां गतिं गतोऽसि । इह मृतशरीरमपि नास्ति कस्य मण्डनमिति भावः ॥ २२ ॥

ऋजुतामिति ॥ शरमृजुतामार्जवं नयत उत्सङ्गे निषण्णमङ्कगतं धनुर्यस्य तस्य ॥ "धनुषश्च" इत्यनङादेशः ॥ ते तव मधुना वसन्तेन सह ॥ "मधुर्दैत्ये वसन्ते च चैत्रे च" इति विश्वः ॥ सस्मितां कथामालापं तथा यन्नयनोपान्तविलोकितमपाङ्गवीक्षणम् । त इत्यनुषङ्गः । तच्च स्मरामि ॥ २३ ॥

---

(८) -निषङ्ग, निषक्त । (९) -विलोकितानि च ।

क्व नु ते हृदयङ्गमः सखा
कुसुमायोजितकार्मुको मधुः।
न खलूग्ररुषा पिनाकिना
गमितः सोऽपि सुहृद्गतां गतिम्॥ २४॥

अथ तैः परिदेविताक्षरैः
हृदये (१)दिग्धशरै(२)रिवाहतः।
रतिमभ्युपपत्तुमातुरां
मधुरात्मानमदर्शयत् पुरः॥ २५॥

तमवेक्ष्य रुरोद सा भृशं
(३)स्तनसंबाधमुरो जघान च।

क्वेति॥ हृदयं गच्छतीति हृदयङ्गमो हृद्यः॥ खच्प्रकरणे "गमेः सुप्युपसंख्यानम्" इति खच्प्रत्ययः। "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः॥ ते तव सखा कुसुमैरायोजितमारचितं कार्मुकं येन कार्मुकनिर्माता मधुर्वसन्तः क्व नु क्व गतः। गत इति शेषः। अथवा सोऽप्युग्ररुषा तीव्रकोपेण पिनाकिनेश्वरेण सुहृदा मदनेन गतां प्राप्तां गतिम्। भस्मतामित्यर्थः। न गमितः खलु न प्रापितः किम्॥ "जिज्ञासानुनये खलु" इत्यमरः॥ २४॥

अथेति॥ अथ तैः परिदेविताक्षरैर्विलापवचनैर्हृदये दिग्धशरैर्विषलिप्तमुखैः शरैरिवाहतः सन्॥ "विषाक्ते दिग्धलिप्तकौ" इत्यमरः॥ मधुर्वसन्त आतुरामापन्नां रतिमभ्युपपत्तुमनुग्रहीतुम्। आश्वासयितुमित्यर्थः॥ "अभ्युपपत्तिरनुग्रहः" इत्यमरः॥ आत्मानं पुरोऽदर्शयत्। आविरभूदित्यर्थः॥२५॥

तमिति॥ सा रतिस्तं मधुमवेक्ष्य दृष्ट्वा भृशं रुरोद। स्तनौ

---

(१) दिग्धफलैः। (२) इवार्दितः। (३) गुरु।

स्वजनस्य हि दुःखमग्रतो
विवृतद्वारमिवोपजायते ॥ २६ ॥

इति चैनमुवाच दुःखिता
सुहृदः पश्य वसन्त किं स्थितम् ।
(३)तदिदं कणशो (४)विकीर्यते
पवनैर्भस्म (५)कपोतकर्बुरम् ॥ २७ ॥

अयि सम्प्रति देहि दर्शनं
स्मर पर्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥

संबाध्य स्तनसंबाधम् ॥ "परिक्लिश्यमाने च" इति णमुल् ॥ उरो जघान ताडितवती च । तथाहि । स्वजनस्याग्रतो दुःखं विवृतमपसारितं द्वारं कपाटं यस्य तदिवोपजायत आविर्भवति । उच्छृङ्खलं प्रवर्तत इत्युत्प्रेक्षाभिप्रायः ॥ २६ ॥

इतीति ॥ दुःखम् अस्याः सञ्जातं दुःखिता । सञ्जातदुःखेत्यर्थः ॥ तारकादित्वादितच् ॥ सा रतिः एनं वसन्तमित्युवाच च ॥ चकारः पूर्वोक्तसमुच्चयार्थः ॥ हे वसन्त पश्य सुहृदस्तवात्सखस्य किं स्थितं किमुपस्थितं तदिदं कपोतकर्बुरं पारावतशबलं कणशस्सूर्णीभूतम् ॥ अल्पार्थाच्छस्प्रत्ययः ॥ भस्म पवनैर्विकीर्यते विक्षिप्यते । पश्य भस्मीभूतस्ते सुहृदित्यर्थः ॥२७॥

अयीति ॥ अयि स्मर । सम्प्रति दर्शनं देहि । एष माधवो वसन्तः पर्युत्सुकस्त्वद्दर्शनोत्कण्ठितः । त्वामप्यनाहूतवतोऽस्य को माधव इत्याशङ्क्याह—नृणां पुरुषाणां दयितासु

(३) यदिदम् । (४) प्रकीर्यते । (५) कपोतपाण्डुरम् ।

अमुना ननु पार्श्ववर्तिना
जगदाज्ञां ससुरासुरं तव ।
विसतन्तुगुणस्य कारितं
धनुषः (६)पेलवपुष्पपत्रिणः ॥ २९ ॥

गत एव न ते निवर्तते
स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मा-
मविषह्य(७)व्यसनेन धूमिताम् ॥ ३० ॥

विधिना कृतमर्धवैशसं
ननु मां कामवधे विमुञ्चता ।

प्रेम अनवस्थितमस्थिरम् । चलमित्यर्थः । सुष्ठुजने प्रेम तु न चलं खलु ॥ २८ ॥

ईदृशाः सुहृदः कति न सन्तीत्याशङ्क्य न कोऽपीत्याह—

अमुनेति ॥ ननु मदन । पार्श्ववर्तिना सहचरेणामुना वसन्तेन ससुरासुरं सुरासुरसहितं जगद्विसतन्तुगुणस्य मृणालसूत्रमौर्वीकस्य पेलवानि पुष्पाण्येव पत्रिणो बाणा यस्य तस्य तव धनुष आज्ञां कारितम् । जगदाज्ञा कारितेत्यर्थः ॥ "हृक्रोरन्यतरस्याम्" इति जगतः कर्मत्वम् ॥ २९ ॥

गत इति ॥ स ते सखानिलाहतो वायुताडितो दीप इव गत एव न निवर्तते । अहमस्य दीपायमानस्य दशा वर्तिरिव । तिष्ठामीति शेषः ॥ "दशा वर्ताववस्थायां वस्त्रान्ते स्युर्दशा अपि" इति विश्वः ॥ कुतः । अविषह्यव्यसनेन सोढुमशक्यदुःखप्रकर्षेण धूमितां सञ्जातधूमां मां पश्य । धूमवत्त्वाद्नष्टदीपदशासाम्यं धूमश्च व्यसनमेवेत्यर्थः ॥ ३० ॥

---

(६) कोमल, पेशल । (७) व्यसनप्रधूमिताम् ।

(८)अनपायिनि (९)संश्रयद्रुमे
गजभग्ने पतनाय वल्लरी ॥ ३१ ॥

तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जना-
न्ननु मां प्रापय (१)पत्युरन्तिकम् ॥ ३२ ॥

विधिनेति ॥ ननु वसन्त कामबधे मदनवधे मां विमुञ्चत वर्जयता । अमारयतेत्यर्थः । विधिना दैवेन । विशसति हिन स्तीति विशसो घातुकः ॥ पचाद्यच् ॥ विशसस्य कर्म वैशसम् युवादित्वादण्प्रत्ययः ॥ अर्धवैशसमर्धवधः कृतम् ॥ "अर्धो व एष आत्मनो यत्पत्नी" इति श्रुतेः ॥ पत्युः स्वस्य चाश्रयाश्रयि भूतयोरेकपदार्थत्वाभिप्रायेणार्धोक्तिः । तथा चैकदेशवधे देशा न्तरस्यापि वधनियमनात्मामपि विधिरघ्नन्नेव हतवानिति तात्पर्यम् । एतदेवोपपादयति—अनपायिनी अनपायित्वे विश्वस्ते संश्रयद्रुम आश्रयवृक्षे गजभग्ने सति वल्लरी लता पतनाय । भवति इति शेषः । पतितुमेव सालमित्यर्थः । "तुम र्थाच्च भाववचनात्" इति चतुर्थी ॥ ३१ ॥

सम्प्रत्यनन्तरकर्तव्यं प्रार्थयते—

तदिति ॥ तत्तस्मात्कारणादुक्तप्रकारेण । अन्यथापि मर णस्यावश्यम्भावादित्यर्थः । अनन्तरं भवतेदं वक्ष्यमाणं बन्धुजन प्रयोजनं बन्धुकृत्यं क्रियताम् ॥ प्रार्थनायां लोट् ॥ तदेवोप दिशति—ननु वसन्त । विधुरां विवशां मां ज्वलनातिसर्ज नादग्निदानात् पत्युः अन्तिकं प्रापय । अग्निप्रवेशनं कार येत्यर्थः ॥ ३२ ॥

---

(८) अनपायि हि । (९) संश्रिता द्रुमे । (१) भर्तुः ।

शशिना सह याति कौमुदी
सह मेघेन तडित् (२)प्रलीयते ।
प्रमदाः पतिवर्त्मगा इति
प्रतिपन्नं हि विचेतनैरपि ॥ ३३ ॥

अमुनैव कषायितस्तनी
सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा
रचयिष्यामि तनुं विभावसौ ॥ ३४ ॥

कर्तव्यन्यायमर्थः स्त्रीणामित्याह—

शशिनेति ॥ कौमुदी चन्द्रिका शशिना सह याति । शशिन्यस्तमिते स्वयं नश्यतीत्यर्थः ॥ तडित्सौदामिनी मेघेन सह प्रलीयते प्रणश्यति ॥ कर्तरि लट् ॥ प्रमदाः स्त्रियः पतिवर्त्म गच्छन्तीति पतिवर्त्मगाः पतिमार्गानुगामिन्य इत्येतद्विचेतनैरल्पचेतनैः । अविवेकिभिरपीत्यर्थः ॥ नाथस्तु "पृथग्जनैः" इति पपाठ ॥ प्रतिपन्नं ज्ञातम् ॥ "अलवणा यवागूः" "अनुदरा कन्या" इतिवदल्पत्वाभिप्रायेण विचेतनैरपीति निर्देशः ॥ पतिवर्त्मगा इत्यत्र स्मृतिः—"आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता" इति ॥ ३३ ॥

अमुनैवेति ॥ अमुना पुरोवर्तिना सुभगेन शोभनेन प्रियगात्रभस्मनैव । एवकारो मण्डनान्तरनिवृत्त्यर्थः । कषायितस्तनी रञ्जितस्तनी ॥ "रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे" इति वैजयन्ती ॥ नवपल्लवसंस्तरे यथा नवपल्लवतल्प इव

---

(२) विलीयते ।

कुसुमास्तरणे सहायतां
बहुशः सौम्य गतस्त्वमावयोः ।
कुरु सम्प्रति तावदाशु मे
प्रणिपाताञ्जलियाचितश्चिताम् ॥ ३५ ॥

तदनु ज्वलनं मदर्पितं
त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः
क्षणमप्युत्सहते न मां विना ॥ ३६ ॥

इति चापि विधाय दीयतां
सलिलस्याञ्जलिरेक एव नौ ।

विभावसौ वह्नौ तनुं शरीरं रचयिष्यामि। निधास्यामीत्यर्थः ॥ ३४ ॥

कुसुमेति ॥ हे सौम्य साधो त्वमावयो रतिपञ्चबाणयोर्बहुशो बहुवारं कुसुमास्तरणे पुष्पशयने सहायतां गतः। सम्प्रति प्रणिपाताञ्जलिना याचितः। अञ्जलिपूर्वकं प्रार्थितः सन्नित्यर्थः। आशु मे चितां काष्ठचयं कुरु केरुष्व। यथेह तथामुत्रोपकर्तव्यं मित्रेणेत्यर्थः ॥ ३५ ॥

तदन्विति ॥ तच्चिताकरणमनु अनन्तरं मय्यर्पितं मदर्पितं ज्वलनमग्निं दक्षिणवातवीजनैर्मलयमारुतसञ्चारणैस्त्वरयेः। त्वरितं ज्वलयेत्यर्थः ॥ त्वराहेतुमाह—ते तव विदितं खलु॥ "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः। तद्योगात्कर्तरि षष्ठी ॥ यथा येन प्रकारेण स्मरो मां विना क्षणमपि नोत्सहते न हृष्यति। तथा त्वया ज्ञातमेवेत्यर्थः ॥ ३६ ॥

इतीति ॥ अपि च इत्येवं विधाय कृत्वा नौ आवाभ्याम् एक एव सलिलस्य अञ्जलिः दीयताम्। तम् अञ्जलिं स ते

अविभज्य परत्र (४)तं मया
सहितः पास्यति ते स बान्धवः ॥ ३७ ॥
परलोकविधौ च माधव
स्मरमुद्दिश्य विलोलपल्लवाः ।
निवपेः सहकारमञ्जरीः
प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥
इति देहविमुक्तये स्थितां
रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोष(५)विक्लवां
प्रथमा दृष्टिरि(६)वान्वकम्पयत् ॥ ३९ ॥
कुसुमायुधपत्नि दुर्लभ-
स्तव भर्ता न चिराद्भविष्यति ।

बान्धवः सखा स्मरः परत्र परलोके मया सहितः अविभज्य पास्यति ॥३७॥

परलोकेति ॥ किञ्च । हे माधव वसन्त । परलोकविधौ पिण्डोदकादिकर्मणि स्मरमुद्दिश्य विलोलाः पल्लवा यासु ताः सहकारमञ्जरीश्चूतवल्लरीर्निवपेर्देहि । हि यस्मात् कारणात्ते सखा स्मरः प्रियाश्चूतप्रसवा यस्य स तथोक्तः ॥ ३८ ॥

इतीति ॥ इति देहस्य विमुक्तये शरीरस्य विसर्गाय स्थिताम् । कृतनिश्चयामिति यावत् । रतिमाकाशभवा सरस्वत्यशरीरा वाग्ह्रदशोषविक्लवां ह्रदस्य जलाधारस्य शोषेण विक्लवां शफरीं प्रोष्ठीम् ॥ "प्रोष्ठी तु शफरी द्वयोः" इत्यमरः ॥ प्रथमा वृष्टिर्वर्षमिव अन्वकम्पयदनुकम्पितवती । सदयमुवाचेत्यर्थः ॥ "कृपा दयानुकम्पा स्यात्" इत्यमरः ॥ ३९ ॥

---

(४) यत् । (५) -विह्वलाम् । (६) अन्वकम्पत ।

शृणु येन स कर्मणा गतः
शलभत्वं (७) हरलोचनार्चिषि ॥ ४० ॥

अभिलाषमुदीरितेन्द्रियः
स्वसुतायामकरोत्प्रजापतिः ।
अथ तेन निगृह्य विक्रिया-
मभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥

परिणेष्यति पार्वतीं यदा
तपसा तत्प्रवणीकृतो हरः ।
उपलब्धसुखस्तदा स्मरं
वपुषा स्वेन (८) नियोजयिष्यति ॥ ४२ ॥

कुसुमेति ॥ हे कुसुमायुधपत्नि रते । तव भर्ता चिराच्चिरं दुर्लभो न भविष्यति । किंत्वचिरमेव सुलभो भविष्यतीत्यर्थः । किन्तु शृणु । तत्कर्मेति शेषः । येन कर्मणा स ते भर्ता हरलोचनस्यार्चिर्ज्वाला ॥ "ज्वाला भासो न पुंस्यर्चिः" इत्यमरः ॥ तस्मिन् शलभत्वं पतङ्गत्वं गतः ॥ "समौ पतङ्गशलभौ" इत्यमरः ॥ ४० ॥

तदेव कर्मोपाचष्टे—

अभिलाषमिति ॥ उदीरितेन्द्रियः प्रेरितेन्द्रियः । स्मरेणेति शेषः । प्रजापतिर्ब्रह्मा स्वसुतायां सरस्वत्यामभिलाषमनुरागमकरोत् । अथ तेन प्रजापतिना विक्रियाम् इन्द्रियविकारं निगृह्य निरुध्याभिशप्तः सन् । एतत् फलं दाहात्मकं स्वकर्मफलमन्वभूत् ॥ ४१ ॥

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन—

परिणेष्यतीति । इतीति च ॥ क्रमेण धर्माख्यप्रजापतिना

(७) हरलोचनार्चिषाम् । (८) स योजयिष्यति ।

इति चाह स धर्मयाचितः
(१)स्मरशापावधिदां सरस्वतीम् ।
अशनेरमृतस्य चोभयो-
र्वशिनश्चाम्बुधराश्च योनयः ॥ ४३ ॥
तदिदं परिरक्ष शोभने
भवितव्यप्रियसङ्गमं वपुः ।
रविपीतजला तपात्यये
पुनरोघेन हि (२)युज्यते नदी ॥ ४४ ॥

याचितः प्रार्थितः स भगवान् ब्रह्मा। तपसा कारणेन तस्यां पार्वत्यां प्रवणीकृतः अभिमुखीकृतो हरः शिवो यदा पार्वतीं परिणेष्यत्युद्वक्ष्यति तदोपलब्धसुखः प्राप्तानन्दः सन्। स्मरं कामं स्वेन वपुषा नियोजयिष्यति सङ्गमयिष्यति। इत्येवं स्मरशापस्यावधिदाम् अवसानदायिनीं सरस्वतीं वाचं चाह। एवं शापावधिमप्युक्तवानित्यर्थः। ननु तथा क्रुद्धस्य कथमीदृशी शान्तिरत आह—वशिनो जितेन्द्रियास्ताम्बुधराश्चाशनेरमृतस्य चेत्युभयोर्योनयः प्रभवाः। वशिपक्षेऽशन्यमृतशब्दौ कोपप्रसादपरौ। अन्यत्र वैद्युताम्बुदकपरौ॥ युग्मकम्॥ ४२॥ ४३॥

तदिति॥ हे शोभने तत्तस्मात् कारणाद्भवितव्यो भविष्यन् प्रियसङ्गमो यस्य तत्तथोक्तम् इदं वपुः परिरक्ष। तथाहि। रविपीतजला नदी तपात्यये प्रावृषि॥ "प्रावृट् तपात्यये" इति हलायुधः॥ पुनरोघेन प्रवाहेण युज्यते सङ्गच्छते हि॥ ४४॥

---

(१) स्मरशापान्तभवाम्। (२) पूर्यते।

इत्थं रतेः किमपि भूतमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धु(३)रेना-
माश्वासयत् सुचरितार्थपदैर्वचोभिः ॥४५॥

अथ मदनवधूरुपप्लवान्तं
व्यसनकृशा (४)परिपालयाम्बभूव ।
शशिन इव दिवातनस्य लेखा
किरणपरिक्षयधूसरा प्रदोषम् ॥ ४६ ॥

इत्थमिति ॥ इत्थमनेन प्रकारेण अदृश्यरूपं किमपि भूतं कश्चित्प्राणी ॥ "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः ॥ रतेर्मदनदारायाः मरणव्यवसायबुद्धिं मरणोद्योगबुद्धिं मन्दीचकार । निवारयामासेत्यर्थः ॥ "मूढाल्पापटुनिर्भाग्या मन्दाः" इत्यमरः ॥ अथ कुसुमायुधबन्धुर्वसन्तश्च तत्प्रत्ययात्तस्मिन् भूते विश्वासात् ॥ "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः ॥ एनां रतिं सुष्ठु चरितार्थानि पदानि येषां तैर्वचोभिर्वाक्यैः आश्वासयत् । सर्वथा ते देवताप्रसादात् प्रियसङ्गमो भविष्यतीत्यादिवचनैरस्या दुःखमपाचकारेत्यर्थः ॥ ४५ ॥

अथेति ॥ अथ अनन्तरं व्यसनेन दुःखेन कृशा मदनवधू रतिरुपप्लवान्तं विपदवधिं किरणपरिक्षयेण धूसरा मलिना दिवातनस्य दिनभवस्य । "सायंचिरम्—" इत्यादिना ट्युप्रत्ययः ॥ शशिनश्चन्द्रस्य लेखा प्रदोषं रात्रिमिव परिपालयाम्बभूव प्रतीक्षाञ्चक्रे ॥ पुष्पिताग्रावृत्तम्—"अयुजि नयुगरे

(३) एताम् (४) प्रतिपालयाम्बभूव ।

## पञ्चमः सर्गः ।

तथा समक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती
(१)प्रियेषु सौभाग्यफला हि चारुता ॥१॥

तो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्ष-
णात् ॥ ४६ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविर-
चितया सञ्जीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
रतिविलापो नाम चतुर्थः सर्गः ।

---

तथेति ॥ पर्वतस्य अपत्यं स्त्री पार्वती तथा तेन प्रकारे-
णाक्ष्णोः समीपे समक्षं पुरतः ॥ "अव्ययं विभक्तिसमीपस-
मृद्धि—" इत्यादिनाव्ययीभावः ॥ मनोभवं मन्मथं दहता
भस्मीकुर्वता पिनाकिना ईश्वरेण भग्नः खण्डितो मनोरथोऽ-
भिलाषो यस्याः सा तथोक्ता सती हृदयेन मनसा रूपं सौन्दर्यं
निनिन्द । धिङ्मे रूपं यत्परमनोहरणाय नालमिति गर्हित-
वतीत्यर्थः ॥ युक्तं चैतदित्याह—तथाहि । चारुता सौन्दर्यं
प्रियेषु पतिषु विषये सौभाग्यं प्रियवाल्लभ्यं फलं यस्याः सा
तथोक्ता । सौन्दर्यस्य तदेव फलं यद्भर्तृसौभाग्यं लभ्यते । नो
चेद्विफलं तदिति भावः ॥ अस्मिन् सर्गे वंशस्थं वृत्तम्—"जतौ
तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १ ॥

---

(१) प्रिये हि ।

इयेष सा कर्तुमवन्ध्यरूपतां
समाधिमास्थाय तपोभिरात्मनः।
अवाप्यते वा कथमन्यथा द्वयं
तथाविधं प्रेम पतिश्च तादृशः ॥ २ ॥
निशम्य चैनां तपसे कृतोद्यमां
सुतां (२)गिरीशप्रतिसक्तमानसाम्।
उवाच मेना परिरभ्य वक्षसा
निवारयन्ती महतो मुनिव्रतात् ॥ ३ ॥

इयेषेति ॥ सा पार्वती समाधिमेकाग्रतामास्थायावलम्ब्य तपोभिर्वक्ष्यमाणनियमैः करणभूतैरात्मनः स्वस्यावन्ध्यरूपतां सफलसौन्दर्यं कर्तुमियेषेच्छति स्म। तपसा शिवं वशीकर्तुमुद्युक्तेत्यर्थः। अन्यथा ततोऽन्यप्रकारेण कथं वा तद्द्वयमवाप्यते। किं तद्द्वयम्। तथाभूता विधा प्रकारो यस्य तत्तथाविधं प्रेम स्नेहः। येनार्धाङ्गहरा हरस्य भवेदिति भावः। तादृशः पतिश्च। यो मृत्युञ्जय इति भावः। इयमेव खलु स्त्रीणामपेक्षितं यदङ्गैकवाल्लभ्यं जीवद्भर्तृकत्वं चेति। तच्च तपश्चर्यैकसाध्यमिति निश्चिकायेत्यर्थः। अत्र मनुः—"यद् दुष्करं यद् दुरापं यद् दुर्गं यच्च दुस्तरम्। तत्सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम्" इति ॥ २ ॥

निशम्येति ॥ मेना मेनका च गिरीशप्रतिसक्तमानसां हरासक्तचित्तां तपसे तपश्चरणाय कृतोद्यमां कृतोद्योगां सुतां निशम्य श्रुत्वैनां पार्वतीं वक्षसा परिरभ्यालिङ्ग्य महतो मुनिव्रतात्तपसो निवारयन्ती उवाच॥ मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् "वारणार्थानामीप्सितः" इति नापादानत्वं तथापि कृतोद्यमामिति मानसप्रवेशोक्त्या-

(२) गिरीशं प्रति सक्त, त्रिनेत्रं प्रति सक्त।

मनीषिताः सन्ति (३)गृहेषु देवता-
स्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्त्रिणः ॥ ४ ॥

इति (४)ध्रुवेच्छामनुशासती सुतां
शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५ ॥

त्वात् "ध्रुवमपायेऽपादानम्" इत्यपादानत्वमेव स्यात् । यथाह भाष्यकारः—"यच्च मिथ्या सम्प्राप्य निवर्तते तच्च "ध्रुवमपायेऽपादानम्" इति प्रसिद्धम्" ॥ ३ ॥

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह—

मनीषिता इति ॥ हे वत्से । मनस ईषिता इष्टा मनीषिताः ॥ शकन्ध्वादित्वात् साधुः ॥ देवताः शच्यादयो गृहेषु सन्ति । त्वं ता आराधयेति शेषः । तपः क्व । तवेदं तावकम् ॥ "युष्मदस्मदोरन्यतरस्यां खञ्च" इत्यण्प्रत्ययः । "तवकममकावेकवचने" इति तवकादेशः ॥ वपुश्च क्व । तथाहि । पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत । पतत्त्रिणः पुनः पक्षिणस्तु पदं न सहेत । अतिसौकुमार्याद्दिव्योपभोगयोग्यं ते वपुर्न दारुणतपःक्षममित्यर्थः ॥ अत्र दृष्टान्तालङ्कारः ॥ ४ ॥

इतीति ॥ इति एवमनुशासत्युपदिशन्ती मेना ध्रुवेच्छां स्थिरव्यवसायां सुतां पार्वतीमुद्यमादुद्योगात्तपोलक्षणान्नियन्तुं निवारयितुं न शशाक समर्था नाभूत् । तथाहि । ईप्सितार्थं इष्टार्थे स्थिरनिश्चयं मनो निम्नाभिमुखं पयश्च कः

(३) गृहेऽपि । (४) व्रतेच्छाम् ।

कदाचिदासन्नसखीमुखेन सा
मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः
फलोदयान्ताय तपःसमाधये ॥ ६ ॥

अथानुरूपाभिनिवेशतोषिणा
कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात् प्रथितं तदाख्यया
जगाम गौरी शिखरं शिखण्डिमत् ॥७॥

विमुच्य सा हारमहार्यनिश्चया
विलोलयष्टिप्रविलुप्तचन्दनम् ।

प्रतीपयेत् प्रतिकूलयेत्। प्रतिनिवर्तयेदित्यर्थः। निम्नप्रवणं पय इवेष्टार्थाभिनिविष्टं मनो दुर्वारमिति भावः॥ अत्र दीपकानुप्राणितोऽर्थान्तरन्यासालङ्कारः ॥ ५ ॥

कदाचिदिति ॥ अथ कदाचित् मनस्विनी स्थिरचित्ता सा पार्वती मनोरथज्ञमभिलाषाभिज्ञं पितरं हिमवन्तमासन्नसख्याप्तसखी सैव मुखमुपायः॥ "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि" इति विश्वः॥ तेन। फलोदयः फलोत्पत्तिरन्तोऽवधिर्यस्य तस्मै तपःसमाधये तपोनियमार्थमात्मनः स्वस्यारण्यनिवासं वनवासमयाचत॥ "दुह्याच्—" इत्यादिना द्विकर्मकत्वम् ॥ ६ ॥

अथेति ॥ अथ गौरी अनुरूपेण योग्येनाभिनिवेशेनाग्रहेण तुष्यतीति तथोक्तेन गरीयसा पूज्यतमेन गुरुणा पित्रा कृताभ्यनुज्ञा तपः कुर्विति कृतानुमतिः सती पश्चात्तपःसिद्ध्युत्तरकालं प्रजासु जनेषु तदाख्यया तस्या गौर्याः संज्ञया प्रथितम्। गौरीशिखरमिति प्रसिद्धमित्यर्थः। शिखण्डिमत्। न तु हिंस्रप्राणिप्रचुरमिति भावः। शिखरं शृङ्गं जगाम ययौ ॥ ७ ॥

बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥

यथा प्रसिद्धैर्मधुरं शिरोरुहै-
र्जटाभिरप्येवमभूत्तदाननम् ।
न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥

प्रतिक्षणं सा कृतरोमविक्रियां
व्रताय मौञ्जीं त्रिगुणां बभार याम् ।

विमुच्येति । अहार्यनिश्चयानिवार्यनिश्चया सा गौरी विलोलाभिश्चलाभिर्यष्टिभिः प्रतिसरैः प्रविलुप्तं प्रमृष्टं चन्दनं स्तनान्तरगतं येन तं तथोक्तं हारं मुक्तावलीं विमुच्य विहाय बालारुणबभ्रु बालार्कपिङ्गलं पयोधरयोः स्तनयोरुत्सेधेनोच्छ्रायेण विशीर्णा विघटिता संहतिरवयवसंश्लेषो यस्य तत्तथोक्तं वल्कलं कण्ठलम्बि स्तनोत्तरीयभूतं बबन्ध । धारयामासेत्यर्थः ॥ ८ ॥

यथेति ॥ तस्या देव्या आननं तदाननं प्रसिद्धैः भूषितैः ॥ “प्रसिद्धौ ख्यातभूषितौ” इत्यमरः ॥ रोहन्तीति रुहाः ॥ “इगुपधज्ञाप्रीकिरः कः” इति कप्रत्ययः ॥ शिरसि रुहाः तैः शिरोरुहैः मूर्धजैर्यथा मधुरं प्रियमभूत् ॥ “स्वादुप्रियौ तु मधुरौ” इत्यमरः ॥ जटाभिरप्येवं मधुरमभूत् । तथाहि । पङ्कजं पद्मं षट्पदश्रेणिभिर्भ्रमरपङ्क्तिभिरेव न किन्तु सह शैवलासङ्गेन सशैवलासङ्गमपि ॥ “तेन सहेति तुल्ययोगे” इति बहुव्रीहिः ॥ प्रकाशते । शैवलेनापि शोभत एवेत्यर्थः ॥ ९ ॥

प्रतीति । सा देवी प्रतिक्षणं क्षणे क्षणे कृतरोमविक्रियां पारुष्यात् कृतरोमाञ्चां त्रिगुणां त्रिरावृत्तां यां मौञ्जीं मुञ्जमयीं मेखलां व्रताय तपसे बभार । तदेव पूर्वं प्रथमं यस्य तत्-

अकारि तत्पूर्वनिबद्धया तया
सरागमस्या रसनागुणास्पदम् ॥ १० ॥
विसृष्टरागादधरान्निवर्तित:
स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलि:
कृतोऽक्षसूत्रप्रणयी तया कर: ॥ ११ ॥
महार्हशय्यापरिवर्तनच्युतै:
स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी
निषेदुषी स्थण्डिल एव केवले ॥ १२ ॥

पूर्वं यथा तथा निबद्धया तया मौञ्ज्यास्या देव्या रसनागुणस्या स्पदं स्थानं जघनम्। सह रागेण सरागं सलोहितमकारि कृतम्। सौकुमार्यातिशयादिति भाव: ॥ १० ॥

विसृष्टेति ॥ तया देव्या विसृष्टरागात्त्यक्तलाक्षारसरञ्जना दधरादधरोष्ठान्निवर्तित:। "निसृष्टरागात्" इति पाठे नितर त्यक्तलाक्षारागात् ॥ रागत्यागेन निष्प्रयोजनत्वादिति भाव: तथा स्तनाङ्गरागेणारुणितादरुणीकृतात्। पतनसमये तस स्तनयोरुपरोधादिति भाव:। कन्दुकाच्च निवर्तित:। कुशाङ्कु राणामादानेन लवनेन परिक्षता व्रणिता अङ्गुलयो यस्य स तथोक्त: कर: पाणि: अक्षसूत्रप्रणयी अक्षमालासहचर: कृत: ॥ ११ ॥

महार्हेति ॥ महानर्हो मूल्यं यस्या: सा महार्हा श्रेष्ठा या शय्या तस्यां परिवर्तनेन लुण्ठनेन च्युतै: भ्रष्टै: स्वकेशपुष्पैरपि या देवी दूयते स्म क्लिश्यति स्म। पुष्पाधिकसौकुमार्यादिति भाव:। सा देवी बाहुलतामुपधत्त उपधानीकरोतीति बाहुल-

पुनर्ग्रहीतुं नियमस्थया तया
(५)द्वयेऽपि (६)निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं
(७)विलोलदृष्टं हरिणाङ्गनासु च ॥ १३ ॥

अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां
न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥

सोपधायिनी सती केवले संस्तरणरहिते स्थण्डिले भूमावेवाशेत शयितवती । तथा निषेदुषी उपविष्टा च ॥ "क्वसुश्च" इति क्वसुः । "उगितश्च" इति ङीप् ॥ भूमावेव शयनादिव्यवहारो न जातूपरीत्यर्थः ॥ १२ ॥

पुनरिति ॥ नियमस्थया व्रतस्थया तया देव्या द्वयेऽपि द्वयं पुनर्ग्रहीतुं पुनरानेतुं निक्षेपोऽर्पितमिव निक्षेपत्वेनार्पितं किमु ॥ क्वचित् "द्वयीषु" इति प्रामादिकः पाठः ॥ कुत्र द्वये किं द्वयमर्पितमित्याह—तन्वीषु लतासु विलास एव चेष्टितं विलासचेष्टितं हरिणाङ्गनासु विलोलदृष्टं चञ्चलावलोकितं च । व्रतस्थायां तस्यां तयोरदर्शनाल्लतादिषु दर्शनाच्चार्पितमिवेत्युत्प्रेक्षा न तु वस्तुतोऽर्पणमस्तीति भावः ॥ १३ ॥

अतन्द्रितेति ॥ सा देवी स्वयमेवातन्द्रिता असञ्जाततन्द्रा सती ॥ तारकादित्वादितच्प्रत्ययः ॥ वृक्षकान् स्वल्पवृक्षान् ॥ "अल्पे" इत्यल्पार्थे कप्रत्ययः ॥ घटाविव स्तनौ तयोः प्रस्रवणैः प्रस्रुतपयोभिः व्यवर्धयत् । गुहः कुमारोऽपि प्रथमाप्तजन्मनां प्रथमलब्धजन्मनाम् । अग्रजातानामित्यर्थः । येषां वृक्षकाणां सम्बन्धि पुत्रवात्सल्यं सुतप्रेम नापाकरिष्यति । उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रवात्सल्यं निवर्तिष्यत इत्यर्थः ॥ १४ ॥

---

(५) द्वयीषु । (६) निक्षेपम् । (७) विलोलदृष्टिम् ।

अरण्यबीजाञ्जलिदानलालिता-
स्तथा च तस्यां हरिणा विशश्वसुः ।
यथा तदीयैर्नयनैः कुतूहलात्
पुरः सखीनाममिमीत लोचने ॥ १५ ॥

कृताभिषेकां हुतजातवेदसं
त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन् ·
न धर्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥

अरण्येति ॥ अरण्यबीजानां नीवारादीनामञ्जलयस्तेषां दानेन लालिता हरिणाश्च तस्यां देव्यां तथा विशश्वसुर्विस्रम्भं जग्मुः ॥ "समौ विस्रम्भविश्वासौ" इत्यमरः ॥ यथा कुतूहलादौत्सुक्यात् तदीयैर्हरिणसम्बन्धिभिर्नयनैः नेत्रैः ॥ करणैः ॥ स्वकीये लोचने सखीनां पुरः पुरतः । अनेन तेषां सम्बन्धसहत्वमुक्तम् । अमिमीत । अक्षिपरिमाणतारतम्यज्ञानाय मानं चकारेत्यर्थः । केचित्तु सा पार्वती तदीयैर्नेत्रैः कुतूहलात् पुरोऽग्रे वर्तमानानां सखीनां लोचने अमिमीत व्रतस्थत्वादात्मन इत्याहुः ॥ "माङ् माने" इत्यस्मात् धातोर्लङ् ॥ इयमेव खलु विश्वासस्य परा काष्ठा यदक्षिपीडनेऽपि न क्षुभ्यन्तीति भावः ॥ १५ ॥

तपःप्रभावमाह—

कृतेति ॥ कृताभिषेकां कृतस्नानां हुतजातवेदसं हुताग्निकाम् । कृतहोमामित्यर्थः । त्वचा वल्कलेनोत्तरासङ्गवतीमुत्तरीयवतीं त्वगुत्तरासङ्गवतीम् । अधीतमस्या अस्तीत्यधीतिनीं स्तुतिपाठादि कुर्वतीम् ॥ "इष्टादिभ्यश्च" इतीनिप्रत्ययः ॥ तां देवीं दिदृक्षवो द्रष्टुमिच्छवोऽर्षयो मुनयोऽभ्युपागमन् समुपागताः ॥ न चात्र कनिष्ठसेवादोष इत्याह—धर्मवृद्धेषु वयो न

विरोधिसत्त्वोज्झितपूर्वमत्सरं
द्रुमैरभीष्टप्रसवार्चितातिथि ।
नवोटजाभ्यन्तरसंभृतानलं
तपोवनं तच्च बभूव पावनम् ॥ १७ ॥

यदा फलं (८)पूर्वतपःसमाधिना
न तावता लभ्यममंस्त काङ्क्षितम् ।
तदानपेक्ष्य स्वशरीरमार्दवं
तपो महत्सा चरितुं प्रचक्रमे ॥ १८ ॥

समीक्ष्यते न प्रमाणीक्रियते। सति धर्मज्येष्ठे वयोज्येष्ठं न प्रयोजकमित्यर्थः। तथा च मनुः—"न तेन वृद्धो भवति येनास्य पलितं शिरः। यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः" इति ॥ १६ ॥

विरोधीति ॥ विरोधिभिः सत्त्वैर्गोव्याघ्रादिभिरुज्झित-पूर्वमत्सरं त्यक्तपूर्ववैरम्। हिंसारहितमित्यर्थः। द्रुमैरभीष्टप्रसवेनेष्टफलेनार्चिताः पूजिता अतिथयो यस्मिंस्तत्तथोक्तम्। नवानामुटजानां पर्णशालानामभ्यन्तरेषु संभृताः सञ्चिता अनला अग्नयो यस्मिंस्तत्तथोक्तं तच्च तपोवनम्। पावयतीति पावनं बभूव। अहिंसातिथिसत्काराग्निपरिचर्याभिर्जगत्पावनं बभूवेत्यर्थः॥ १७ ॥

यदेति ॥ सा देवी यदा यस्मिन् काले तावता तावत्प्रमाणेन पूर्वतपःसमाधिना पूर्वेणानुष्ठीयमानप्रकारेण तपोनियमेन काङ्क्षितं फलं लभ्यं लब्धुं शक्यं नामंस्त। अशक्यममंस्तेत्यर्थः। तदा तत्काले। अविलम्बेनेत्यर्थः। स्वशरीरस्य मार्दवं मृदुत्वं सौकुमार्यमनपेक्ष्याविगणय्य महत् दुश्चरं तपश्चरितुं प्रचक्राम उपचक्रमे ॥ १८ ॥

---

(८) सर्वसमाधिसाधनम्।

क्लमं ययौ कन्दुकलीलयापि या
तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं
मृदु प्रकृत्या (९)च ससारमेव च ॥ १९ ॥

शुचौ चतुर्णां ज्वलतां हविर्भुजां
शुचिस्मिता मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभा-
मनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥

क्लममिति ॥ या देवी कन्दुकलीलया कन्दुकक्रीडयापि क्लमं ययौ ग्लानिं प्राप तया देव्या मुनीनां चरितं तीव्रं तपो व्यगाह्यत प्रविष्टम् । अत्रोत्प्रेक्ष्यते—ध्रुवमस्या वपुः काञ्चनपद्मेन सुवर्णकमलेन निर्मितं घटितम् । अतएव प्रकृत्या पद्मस्वभावेन मृदु च सुकुमारमपि काञ्चनस्वभावेन ससारं च कठिनमेव । तथा च तदुपादानकत्वाद्देव्या वपुषः सुकुमारस्यापि तीव्रतपःक्षमत्वमित्युत्प्रेक्षार्थः ॥ १९ ॥

शुचाविति ॥ शुचौ ग्रीष्मे शुचिस्मिता विशदमन्दहासा सुमध्यमा पार्वती ज्वलतां दीप्तिमतां चतुर्णां हविर्भुजामग्नीनां मध्यगता सती । नेत्रे प्रतिहन्तीति तां नेत्रप्रतिघातिनीं प्रभां सावित्रं तेजो विजित्य । न विद्यतेऽन्यत्र दृष्टिर्यस्याः सानन्यदृष्टिः सती सवितारं सूर्यमैक्षत ददर्श । "ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः" इति स्मरणात् ॥ पञ्चाग्निमध्ये तपश्चचारेत्यर्थः । तत्र सवितैव पञ्चमोऽग्निः—"अग्निः सविता सवितैवाग्निः" इति श्रौतलिङ्गात् ॥ २० ॥

(९) हि ।

(१) तथातितप्तं सवितुर्गभस्तिभि-
र्मुखं तदीयं कमलश्रियं दधौ।
अपाङ्गयोः केवलमस्य दीर्घयोः
शनैःशनैः श्यामिकया कृतं पदम् ॥ २१ ॥

अयाचितोपस्थितमम्बु केवलं
रसात्मकस्योडुपतेश्च रश्मयः।
बभूव तस्याः किल पारणाविधि-
र्न (२)वृक्षवृत्तिव्यतिरिक्त(३)साधनः ॥२२॥

तथेति॥ सवितुः सूर्यस्य गभस्तिभिः किरणैस्तथा पूर्वोक्तप्रकारेण अतितप्तं सन्तप्तं तस्या इदं तदीयं मुखं कमलश्रियं कमलस्य शोभां दधौ प्राप। यथा रवितापात्कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमासीदिति भावः। किंत्वस्य मुखस्य दीर्घयोरपाङ्गयोः केवलं नेत्रान्तयोरेव शनैःशनैर्मन्दं मन्दं श्यामिकया कालिम्ना पदं स्थानं कृतम्। तयोः सौकुमार्यादित्यर्थः॥ २१ ॥

अयाचितेति॥ अयाचितोपस्थितमप्रार्थितोपनतं केवलमम्बूदकं रसात्मकस्यामृतमयस्योडूनां नक्षत्राणां पतिश्चन्द्रस्तस्य रश्मयश्च तस्याः पार्वत्याः पारणाविधिरभ्यवहारकर्म बभूव। तावन्मात्रसाधनकोऽभूदित्यर्थः॥ साध्यसाधनयोरभेदेन व्यपदेशः साधनान्तरव्यावृत्त्यर्थः॥ किलेति प्रसिद्धौ। वृक्षाणां या वृत्तिर्जीवनोपायस्तद्व्यतिरिक्तं साधनमुपायो यस्य स तथोक्तः पारणाविधिर्न बभूव। वृक्षोऽप्ययाचितोपस्थितेन मेघोदकेनेन्दुकिरणैश्च जीवतीति प्रसिद्धम्। अम्बिकापि तावन्मात्रमवालम्बतेत्यर्थः॥ २२ ॥

---

(१) तथाभितप्तम्, तथापि तप्तम्।
(२) वृक्षवृत्तिः। (३) -साधनम्।

निकामतप्ता विविधेन वह्निना
नभश्चरेणेन्धनसंभृतेन (४)सा ।
तपात्यये वारिभिरुक्षिता नवै-
र्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥ २३ ॥

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदविन्दवः ॥ २४ ॥

निकामेति ॥ विविधेन । पञ्चविधेन इत्यर्थः । नभश्चरे खेचरेण । आदित्यरूपेणेत्यर्थः । इन्धनसंभृतेन काष्ठसमिद्वह्निना निकाममत्यन्तं तप्ता साम्बिका तपात्यये ग्रीष्मान्ते प्रावृषीत्यर्थः । नवैर्वारिभिः उक्षिता सिक्ता सती भुवा पञ्चाग्नितप्तया सहोर्ध्वगमूर्ध्वप्रसृतमुष्माणं बाष्पममुञ्चत् ॥ "ग्रीष्मबाष्पमुष्माणम्" इति यादवः ॥ २३ ॥

स्थिता इति ॥ उदकस्य विन्दवः उदविन्दवः ॥ "मन्थौदन—" इत्यादिनोदकशब्दस्योदादेशः ॥ प्रथम उदविन्दवः प्रथमविशेषणाद्विन्दूनां विरलत्वं बहुवचनादातिविरलत्वं गम्यते। तथा च चिरत्वनाभ्यन्तरगमनयोर्निर्वाहः ॥ तस्याः पार्वत्याः पक्ष्मसु नेत्रलोमसु क्षणं स्थिताः स्थितिं गताः । स्थिता इत्यनेन पक्ष्मणां सान्द्रत्वं क्षणमिति स्नैग्ध्यं च गम्यते। अनन्तरं ताडितो व्यथितोऽधर ओष्ठो यैस्ते तथोक्ताः। एतेनाधरस्य मार्दवं गम्यते। ततः पयोधरयोः स्तनयोरुत्सेध उपरिभागे निपातेन पतनेन चूर्णिता जर्जरिताः। कुचकाठिन्यादिति भावः। तदनु वलीषूदररेखासु स्खलिताः। निम्नोन्नतत्वादिति भावः॥ इत्थं चिरेण न तु शीघ्रम्। प्रतिबन्

---

(४) च ।

शिलाशयां तामनिकेतवासिनीं
निरन्तरास्वन्तरवातवृष्टिषु ।
व्यलोकयन्नुन्मिषितैस्तडिन्मयै-
र्महातपःसाक्ष्य इव स्थिताः क्षपाः ॥२५॥
निनाय (५)सात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्परा ।

ाद्दृश्यादिति भावः । नाभिं प्रपेदिरे प्रविष्टा न तु निर्जग्मुः । तेन नाभेर्गाम्भीर्यं गम्यते ॥ अत्र प्रतिपदमर्थवत्त्वात्परिकरालङ्कारः ॥ २४ ॥

शिलाशयामिति ॥ निरन्तरासु नीरन्ध्रासु अन्तरे मध्ये वातो यासां तादृश्या या वृष्टयस्तास्वन्तरवातवृष्टिषु । न निकेते गृहे वसतीत्यनिकेतवासिनीम् । अनावृतदेशवासिनीमित्यर्थः । शिलायां शेत इति शिलाशयां शिलातलशायिनीम् ॥ "अधिकरणे शेतेः" इत्यच्प्रत्ययः ॥ तां पार्वतीं साक्षाद्द्रष्टा साक्षी ॥ "साक्षाद्द्रष्टरि संज्ञायाम्" इतीनिप्रत्ययः ॥ तस्य कर्म साक्ष्यं महातपसः साक्ष्ये स्थिताः क्षपास्तडिन्मयैर्विद्युद्रूपैरुन्मिषितैरवलोकनैर्व्यलोकयन्निव । इवेति चक्षुषा विलोकनमेवोत्प्रेक्ष्यते । साक्ष्यं तु "आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्" इति प्रमाणसिद्धत्वान्नोत्प्रेक्ष्यमित्यनुसन्धेयम् ॥ २५ ॥

एवं वर्षासु विहितं तपःप्रकारमुक्त्वा सम्प्रति हेमन्ते तपश्चरणप्रकारमाह—

निनायेति ॥ सा पार्वती । उत्किरन्ति क्षिपन्तीति उत्किराः ॥ "इगुपधज्ञा—" इत्यादिना कः ॥ अत्यन्तं हिमानामुत्किरा अनिला यासु ताः सहस्यरात्रीः पौषरात्रीः ॥ "पौषे

(५) सात्यर्थहिमोत्तरानिलाः ।

परस्पराक्रन्दिनि चक्रवाकयोः
पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥

मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्त्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां
सरोजसन्धानमिवाकरोदपाम् ॥ २७ ॥

स्वयं विशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तया पुनः ।

तैषसहस्यौ द्वौ" इत्यमरः ॥ उदके वास उदवासः ॥ "पेषंवासवाहनधिषु च" इत्युदादेशः ॥ उदवासे तत्परा आसक्ता तथा परस्परमाक्रन्दिनि अन्योन्यमाक्रोशिनि पुरोऽग्रे नियुक्ते विरहिणि। वियोगं प्राप्त इति यावत् । चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोः चक्रवाकयोर्मिथुने द्वन्द्वे कृपावती सती निनाय। दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा न तु कामितयेति वाच्यानवकाशः ॥ "अप्सु वासस्तु हेमन्ते क्रमशो वर्धयेत्तपः" इति मनुः ॥ २६ ॥

मुखेनेति ॥ सा पार्वती निशि रात्रौ पद्मवत् सुगन्धिना सुरभिणा ॥ "गन्धस्येत्—" इत्यादिनेकारः । प्रवेपमानः कम्पमानोऽधर ओष्ठ एव पत्त्रं दलं तेन शोभत इति तथोक्तेन मुखेन तुषारवृष्ट्या तुहिनवर्षेण क्षता नाशिताः पद्मसम्पदो यासां तासामपां सरोजसन्धानं पद्मसङ्घटनमकरोदिव। इत्युत्प्रेक्षालङ्कारः । पद्मान्तरं तुहिनेनोपहन्यते तन्मुखपद्मं तु न तथेति व्यतिरेकालङ्कारो व्यज्यत इत्युभयोः सङ्करः ॥ २७ ॥

स्वयमिति ॥ स्वयं विशीर्णानि स्वतश्च्युतानि द्रुमपर्णान्येव वृत्तिर्जीवनं यस्य तस्य भावस्तत्ता तपसः परा काष्ठा परमुत्कर्षो हि ॥ "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः ॥ तया

तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्य(६)पर्णेति च तां पुराविदः ॥ २८ ॥
मृणालिका(७)पेलवमेवमादिभि-
र्व्रतैः (८)स्वमङ्गं (९)ग्लपयन्त्यहर्निशम्।
तपः शरीरैः कठिनैरुपार्जितं
तपस्विनां दूरमधश्चकार सा ॥ २९ ॥

देव्या पुनः तत्पर्णवर्तनमप्यपाकीर्णमपाकृतम्। अतः पर्णापाकरणाद्धेतोः। प्रियं वदतीति प्रियंवदा॥ "प्रियवशे वदः खच्" इति खच्प्रत्ययः। "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः॥ तां पार्वतीं पुराविदः पुराणज्ञास्तपःकरणसमयेऽविद्यमानं पर्णभक्षणं यस्याः सापर्णेति वदन्ति॥ नामान्तरसमुच्चयार्थश्चकारः॥ अत्र "अपर्णाम्" इत्यपपाठ इतिशब्दाभिहिते द्वितीयानुपपत्तेः। यथाह वामनः—"निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात्" इति॥ स्वयं प्रियंवदाः परेषामपि प्रियवादभाजनानि भवन्तीति भावः॥ २८॥

मृणालिकेति॥ मृणालिकापेलवं पद्मिनीकन्दकोमलं स्वं स्वकीयमङ्गं शरीरमेवमुक्तप्रकारतीयाग्निमध्यवासव्रतमादिर्येषां तैर्व्रतैरहश्च निशा च अहर्निशम्॥ समाहारे द्वन्द्वैकवद्भावः। अत्यन्तसंयोगे द्वितीया॥ ग्लपयन्ती कर्शयन्ती सा पार्वती कठिनैः। क्लेशसहैरित्यर्थः। शरीरैरुपार्जितं सम्पादितं तपस्विनामृषीणां तपो दूरमत्यन्तमधश्चकार तिरश्चकार। अतिशिश्य इत्यर्थः। तपस्विभिरप्येवं तपः कर्तुं न शक्यत इति तात्पर्यार्थः॥ २९॥

---

(६) अपर्णामिति। (७) -कोमलम्।
(८) तदङ्गम्। (९) क्षपयन्ती।

अथाजिनाषाढधरः प्रगल्भवाग्
ज्वलन्निव ब्रह्ममयेन तेजसा।
विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥ ३० ॥

तमातिथेयी बहुमानपूर्वया
सपर्यया प्रत्युदियाय पार्वती।
भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥ ३१ ॥

अथेति ॥ अथानन्तरमजिनं कृष्णमृगत्वक्। आषाढः प्रयोजनमस्येत्याषाढः पालाशदण्डः ॥ "पालाशो दण्ड आषाढः" इत्यमरः ॥ "विशाखाषाढादण्मन्थदण्डयोः" इत्यण्प्रत्ययः ॥ तयोर्धरस्तथोक्तः प्रगल्भवाक् प्रौढवचनो ब्रह्ममयेन वैदिकेन तेजसा। ब्रह्मवर्चसेनेत्यर्थः ॥ ज्वलन्निव स्थितः ॥ इवशब्दो निर्धारणार्थः ॥ कश्चिदनिर्दिष्टो जटिलो जटावान्। ब्रह्मचारीति शेषः ॥ पिच्छादित्वादिलच्प्रत्ययः ॥ शरीरबद्धो बद्धशरीरः। शरीरवानित्यर्थः ॥ "वाहिताग्न्यादिषु" पाठात्साधुः। प्रथमाश्रमो यथा ब्रह्मचर्याश्रम इव ॥ यथाशब्द इवार्थे ॥ तपोवनम्। देव्या इति शेषः। विवेश प्राविष्टवान् ॥ ३० ॥

तमिति ॥ अतिथिषु साध्वी आतिथेयी ॥ "पथ्यतिथि—" इत्यादिना ढञ्प्रत्ययः। "टिड्ढाणञ्—" इत्यादिना ङीप्। पार्वती तं ब्रह्मचारिणं बहुमानपूर्वया बहुमानः पूर्वो यस्यास्तया। गौरवपूर्वयेत्यर्थः। सपर्यया अर्चया ॥ "सपर्यार्चार्हणाः

---

२९—३० श्लोकयोर्मध्ये श्लोकोऽयं दृश्यते—
सुराः (१)समुद्वीक्ष्य नगेन्द्रकन्यया कृतं तपः शम्भुवशक्रियाक्षमम्
ययाचिरे तं प्रणिपत्य दुःखिताः पतिं चमूनां सुतमाजि(२)हेतुम्
(१ तदुद्वीक्ष्य। २ हेतवे)

विधिप्रयुक्तां (१)परिगृह्य सत्क्रियां
परिश्रमं नाम विनीय च क्षणम्।
उमां स पश्यन्नृजुनैव चक्षुषा
प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥

(२)अपि क्रियार्थं सुलभं समित्कुशं
जला(३)न्यपि स्नानविधिक्षमाणि ते।
(४)अपि स्वशक्त्या तपसि प्रवर्तसे
शरीरमाद्यं खलु धर्मसाधनम् ॥ ३३ ॥

समाः" इत्यमरः ॥ प्रत्युदियाय प्रत्युज्जगाम ॥ कथं समानेऽपि तस्यास्तादृशी प्रतिपत्तिरत आह—साम्ये सत्यपि निविष्टचेतसां स्थिरचित्तानां वपुर्विशेषेषु व्यक्तिविशेषेष्वतिशयितं गौरवं यासु ता अतिगौरवा अतिगौरवसहिताः क्रियाश्चेष्टा भवन्ति। प्रवर्तन्त इत्यर्थः। साधवो न साम्याभिनिवेशिन इति भावः ॥ ३१ ॥

विधीति ॥ स ब्रह्मचारी विधिना प्रयुक्ताम् अनुष्ठितां सत्क्रियां पूजां परिगृह्य स्वीकृत्य क्षणं परिश्रमं विश्रामं च विनीय नाम। नामेत्यपरमार्थे। अथोमाम् ऋजुनैव चक्षुषा पश्यन् अनुज्झितक्रमोऽत्यक्तोचितपरिपाटीकः सन्। वक्तुं प्रचक्रमे प्रारेभे ॥ ३२ ॥

अपीति ॥ अत्रापिशब्दः प्रश्ने। क्रियार्थं होमादिकर्मानुष्ठानार्थम्। समिधश्च कुशाश्च समित्कुशम् ॥ "जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः ॥ सुलभमपि सुलभं कच्चित्। जलानि ते तव स्नानविधिक्षमाणि स्नानक्रियायोग्यान्यपि कच्चित्। किञ्च स्वशक्त्या निजसामर्थ्यानुसारेण तपसि प्रवर्तसेऽपि। देहमपीडयित्वा तपश्चरसि कच्चिदित्यर्थः। उक्तं च

(१) प्रतिगृह्य। (२) अयि। (३) अयि। (४) अयि।

(५) अपि त्वदावर्जितवारिसंभृतं
प्रवालमासामनुबध्नि वीरुधाम्।
चिरोज्झितालक्तकपाटलेन ते
तुलां यदारोहति दन्तवाससा ॥ ३४ ॥
(६) अपि प्रसन्नं हरिणेषु ते मनः
करस्थदर्भप्रणयापहारिषु।

नामैतत्। खलु यस्मात् शरीरम् आद्यं धर्मसाधनम्। धर्मस्तु कायेन मनसा वाचा बुद्ध्या धनादिना च बहुभिः साध्यते तेषु च वपुरेव मुख्यं साधनं सति देहे धर्मार्थकाममोक्षलक्षणाश्चतुर्वर्गाः साध्यन्ते। अतएव "सततमात्मानमेव गोपयीत" इति श्रुतिः ॥ ३३ ॥

अपीति ॥ त्वया आवर्जितेन सिक्तेन वारिणा संभृतं जनितमासां वीरुधां लतानां प्रवालं पल्लवमनुबध्न्यप्यनुस्यूतं किम्। यत्प्रवालं चिरोज्झितश्चिरकालत्यक्तो लाक्षारागो येन तत्तथापि पाटलम्। स्वभावरक्तमित्यर्थः। तेन चिरोज्झितालक्तकपाटलेन ते तव दन्तवाससा अधरेण ॥ "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः ॥ तुलां साम्यम् आरोहति। गच्छतीत्यर्थः ॥ अत्र तुलाशब्दस्य सादृश्यवाचित्वात्तद्योगेऽपि "तुल्यार्थैरतुलोपमाभ्याम्—" इति न तृतीयाप्रतिषेधस्तत्र सूत्रे सदृशवाचिन एव ग्रहणादिति ॥ ३४ ॥

अपीति ॥ करस्थान् दर्भान् प्रणयेन स्नेहेनापहरन्तीति ते तथोक्तेषु। सापराधेष्वपीति भावः। "करस्थदर्भप्रणयापराधिषु" इति पाठे दर्भाणां प्रणयेन प्रार्थनयापराधिषु ॥ हरिणेषु विषये ते मनः प्रसन्नमपि न क्षुभितं किम्। सापराधेष्वपि न कोपितव्यं तपस्विभिरिति भावः। हे उत्पलाक्षि ये हरिणाः प्रचलैश्चञ्चलैर्विलोचनैर्नेत्रैस्तवाक्षिसादृश्यं प्रयुञ्जते

(५) अयि। (६) अयि।

य उत्पलाक्षि प्रचलैर्विलोचनै-
स्तवाक्षि(७)सादृश्यमिव प्रयुञ्जते ॥ ३५ ॥

यदुच्यते पार्वति पापवृत्तये
न रूपमित्यव्यभिचारि तद्वचः।
तथाहि ते शीलमुदारदर्शने
तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥

विकीर्णसप्तर्षिबलि(८)प्रहासिभि-
स्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः।

इवाभिनयन्तीव। प्रसन्नत्वान्मृगनेत्राणि त्वन्नयनैः साम्यमुपयान्तीति भावः॥ "उत्पलचेपचलैः" इति पाठान्तरे उत्पलकम्पचलैः। भावानयने द्रव्यानयनमिति न्यायेन क्षिप्यमाणोत्पलचलैरित्यर्थः॥ ३५॥

यदिति॥ हे पार्वति। रूपं सौम्याकृतिः पापवृत्तये पापाचरणाय न भवतीति यदुच्यते। लोकैरिति शेषः। तद्वचो न व्यभिचरति न स्खलतीत्यव्यभिचारि सत्यम्। "यत्राकृतिस्तत्र गुणाः" "न सुरूपाः पापसमाचारा भवन्ति" इत्यादयो लोकवादा न विसंवादमासादयन्तीत्यर्थः। किमिति ज्ञायते— तथाहि। हे उदारदर्शने आयताक्षि। सुरूपे इत्यर्थः। अथवोन्नतज्ञाने। विवेकवतीत्यर्थः। ते तव शीलं सद्वृत्तम्॥ "शीलं स्वभावे सद्वृत्ते" इत्यमरः॥ तपस्विनामप्युपदिश्यतेऽनेनेत्युपदेशः प्रवर्तकं प्रमाणं तत्तामुपदेशतां गतं प्राप्तम्। मुनयोऽपि त्वां वीक्ष्य स्ववृत्ते प्रवर्तन्त इति भावः॥ ३६॥

विकीर्णेति॥ एष महीधरो हिमवान्। सप्त च त ऋषयश्च सप्तर्षयः॥ "दिक्संख्ये संज्ञायाम्" इति समासः॥

---

(७) -सापन्नम्। (८) -प्रवाहिभिः।

यथा त्वदीयैश्चरितैरनाविलै-
र्महीधरः पावित एष सान्वयः ॥ ३७ ॥

अनेन धर्मः सविशेषमद्य मे
त्रिवर्गसारः प्रतिभाति (९)भाविनि ।
त्वया मनोर्निर्विषयार्थकामया
यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥

प्रयुक्तसत्कारविशेषमात्मना
न मां परं सम्प्रतिपत्तुमर्हसि ।

विकीर्णैः पर्यस्तैः सप्तर्षीणां सम्बन्धिभिः बलिभिः पुष्पोपहारैः प्रहसन्ति ये तथोक्तैर्दिवोऽन्तरिक्षाच्च्युतैर्गाङ्गैः सलिलैस्तथा न पावितः । अनाविलैरकलुषैस्त्वदीयैश्चरितैर्यथा सान्वयः सपुत्रपौत्रः पावितः पवित्रीकृतः ॥ ३७ ॥

अनेनेति ॥ हे भाविनि प्रशस्ताभिप्राये । अनेन कारणेन धर्मः सविशेषं सातिशयमद्य मे । त्रयाणां धर्मकामार्थानां वर्गस्त्रिवर्गः ॥ "त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः ॥ तत्र सारः श्रेष्ठः प्रतिभाति । यद्यस्मात्कारणान्मनो निर्विषयावर्थकामौ यस्यास्तया त्वयैको धर्म एव प्रतिगृह्य स्वीकृत्य सेव्यते । यत्त्वयार्थकामौ विहाय धर्म एवावलम्बितः । अतः सर्वेषां नः स श्रेयानिति प्रतिपद्यत इत्यर्थः ॥ ३८ ॥

सम्प्रति मनोरथं जिज्ञासुः प्रस्तौति—

प्रयुक्तेति ॥ आत्मना त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य तं मां परमन्यं सम्प्रतिपत्तुमवगन्तुं नार्हसि । हे संनतगात्रि संनताङ्गि ॥ "अङ्गगात्रकण्ठेभ्यः" इति वक्तव्यात् ङीप् ॥ यतः कारणान्मनस ईषिभिर्मनीषिभिर्विद्वद्भिः ॥ शकन्ध्वादित्वात् साधुः ॥ सतां सङ्गतं सख्यं सप्तभिः पदैः आपद्यत

(९) भामिनि ।

(१)यतः सतां संनतगात्रि सङ्गतं
मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥

अतो(२)ऽत्र किञ्चिद्भवतीं बहुक्षमां
द्विजातिभावादुपपन्नचापलः।
अयं जनः प्रष्टुमनास्तपोधने
न चेद्रहस्यं (३)प्रतिवक्तुमर्हसि ॥ ४० ॥

कुले प्रसूतिः प्रथमस्य वेधस-
स्त्रिलोकसौन्दर्यमिवोदितं वपुः।
अमृग्यमैश्वर्यसुखं नवं वय-
स्तपःफलं स्यात्किमतः परं वद ॥ ४१ ॥

इति साप्तपदीनं सप्तपदोच्चारणसाध्यमुच्यते। तच्चावयोस्त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः॥ "साप्तपदीनं सख्यम्" इति निपातनात्साधु॥ ३९॥

अत इति॥ हे तपोधने अतः सख्याद्धेतोरत्र प्रस्तावे बहुक्षमां बहुक्लेशसहाम्। यद्वा क्षमावतीं भवतीं त्वां द्विजातिभावाद् ब्राह्मणत्वादुपपन्नचापलः सुलभधार्ष्ट्योऽयं जनः। स्वयमित्यर्थः। किञ्चित् प्रष्टुं मनो यस्य स किञ्चित्प्रष्टुमनाः प्रष्टुकामः॥ "तुम् काममनसोरपि" इति मकारलोपः। रहसि भवं रहस्यं गोप्यं न चेत्प्रतिवक्तुमर्हसि॥ ४०॥

प्रष्टव्यमाह—

कुल इति॥ प्रथमस्य वेधसो हिरण्यगर्भस्य कुलेऽन्ववाये प्रसूतिरुत्पत्तिः। "यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वरः" इति ब्रह्मपुराणवचनात्। वपुः शरीरं त्रयाणां लोकानां सौन्दर्यमिवोदितमेकत्र समाहृतम्। ऐश्वर्यसुखं सम्पत्सुखमम्य-

(१) यथा। (२) अथ। (३) प्रतिगोप्तुम्।

भवत्यनिष्टादपि नाम दुःसहा-

न्मनस्विनीनां प्रतिपत्तिरीदृशी ।

विचारमार्गप्रहितेन चेतसा

न दृश्यते तच्च (४)कृशोदरि त्वयि ॥ ४२ ॥

अलभ्यशोकाभिभवेयमाकृति-

र्विमानना सुभ्रु कुतः पितुर्गृहे ।

मन्वेषणीयं न भवति । किन्तु सिद्धमेवेत्यर्थः । वयो नवम् यौवनमित्यर्थः । अतः परमतोऽन्यत् किं तपःफलं स्यादद स्ति चेदिति शेषः । न किञ्चिदस्तीत्यर्थः ॥ ४१ ॥

भवतीति ॥ दुःसहात्सोढुमशक्यादनिष्टाद्भर्त्रादिकृताद मनस्विनीनां धीरस्त्रीणाम् ईदृशी तपश्चरणलक्षणा प्रतिपत्ति प्रवृत्तिः ॥ "प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये" इ केशवः ॥ भवति नाम ॥ नामेति सम्भावनायाम् ॥ विचारमा प्रहितेन चेतसा चित्तेन तदनिष्टञ्च । हे कृशोदरि । त्वयि दृश्यते । विचार्यमाणे तदपि नास्त्यसम्भावितत्वादित्यर्थः ॥४२॥

अनिष्टाभावमेव प्रपञ्चयति—

अलभ्येति ॥ हे सुभ्रु । इयं त्वदीयाकृतिः मूर्तिरलभ्यो लब्धुमनर्हः शोकेन भर्त्राद्यवमानजेन दुःखेन अभिभवस्तिर स्कारः यस्याः सा तथोक्ता । दृश्यत इति शेषः । असम्भावितत्वा यमर्थ इत्याह—पितुर्गृहे विमाननावमानः कुतः । न सम्भा व्यत एवेत्यर्थः ॥ "सुभ्रु कुतस्तातगृहेऽवमाननम्" इति पाठा न्तरकरणं तु साध्वसमेवोक्तोपपत्तिसम्भवात् । अन्यत्रापि "सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषिताम्" इत्या दिप्रयोगदर्शनाद् वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्च त्यक गोष्ठीभिः ॥ न चाप्यन्यस्माद्भावीत्याह—पराभिमर्शः परधर्ष तु तव नास्ति । पन्नगरत्नसूचये फणिशिरोमणिशलाकाम्

(४) तनूदरि ।

(५)पराभिमर्शो न तवास्ति कः करं
प्रसारयेत्पन्नगरत्नसूचये ॥ ४३ ॥
किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्धकशोभि वल्कलम्।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥

ग्रहीतुमित्यर्थः। "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी॥ करं हस्तं कः प्रसारयेत्। "सुभ्रु" इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् "नेयङुवङ्स्थानावस्त्री" इति नदीसंज्ञाप्रतिषेधात् "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वत्वं नास्ति। तेन ह्रस्वः प्रामादिक इति केचित्। अन्ये तु "अप्राणिजातेश्चारज्ज्वादीनाम्" इत्यत्र "अलाबूः" "कर्कन्धूः" इत्युकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकार एतस्मादेव ज्ञापकात् क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वत्वमित्याहुः। अतएवाह वामनः—"ऊकारादप्यूङ्प्रकृतेः" इति ॥ ४३ ॥

किमिति॥ हे गौरि। किमिति केन हेतुना यौवने त्वयाभरणान्यपास्य विहाय। वृद्धस्य भावो वार्धकम्॥ मनोज्ञादित्वाद् वुञ्प्रत्ययः॥ "वार्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणि" इति विश्वः॥ तत्र शोभत इति वार्धकशोभि वल्कलं धृतम्। प्रदोषे रजनीमुखे स्फुटाः प्रकटाश्चन्द्रस्तारकाश्च यस्याः सा स्फुटचन्द्रतारका विभावरी रात्रिः अरुणाय सूर्यसूताय कल्पते यद्यरुणं गन्तुं कल्पते किम्। वद ब्रूहि॥ "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी॥ दीप्यमानशशाङ्कतारके प्रदोषे यद्यरुण उदेति ततो विभूषणापहारेण तव वल्कलधारणं सङ्घटत इति भावः॥ ४४ ॥

---

(५) परावमर्शः।

दिवं यदि प्रार्थयसे वृथा श्रमः
पितुः प्रदेशास्तव देवभूमयः।
अथोपयन्तारमलं समाधिना
न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४५ ॥

निवेदितं निश्वसितेन सोष्मणा
मनस्तु मे संशयमेव गाहते।
न दृश्यते प्रार्थयितव्य एव ते
भविष्यति प्रार्थितदुर्लभः कथम् ॥ ४६ ॥

तपःप्रयोजनं निराकर्तुमाह—

दिवमिति ॥ दिवं स्वर्गं प्रार्थयसे कामयसे यदि तर्हि श्रमस्तपश्चरणप्रयासो वृथा निष्फलः। यदि स्वर्गार्थं तप्यसे ततः श्रमं मा कार्षीः। कुतः। तव पितुः हिमवतः प्रदेशा देवभूमयः स्वर्गपदार्थाः। तत्रत्या इत्यर्थः। अथोपयन्तारं वरं प्रार्थयसे तर्हि समाधिना तपसा अलम्। न कर्तव्यमित्यर्थः॥ निषेध्यस्य निषेधं प्रति करणत्वात् तृतीया ॥ तथाहि। रत्नम् ॥ कर्तृ ॥ नान्विष्यति न मृगयते। ग्रहीतारमिति शेषः। किन्तु तद्रत्नं मृग्यते। ग्रहीतृभिरिति शेषः। न हि वरार्थं त्वया तपसि वर्तितव्यं किन्तु तेनैव त्वदर्थमिति भावः ॥ ४५॥

वरवाचकाक्षरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासमालक्ष्य प्रश्नेषु च प्रत्युत्तरमनुलभ्य स्वयमेवाशङ्क्याह—

निवेदितमिति ॥ सोष्मणा निश्वसितेन निश्वासवायुना निवेदितम्। चिन्तानुभाविनोष्णोच्छ्वासेन ते वरार्थित्वं सूचितमित्यर्थः। तर्हि किं प्रश्नव्यसनेनेत्याह—मनस्तु तथापि मे संशयमेव गाहते प्राप्नोति। कुतः। ते तव ॥ "कृत्यानां कर्तरि वा" इति षष्ठी ॥ प्रार्थयितव्यः प्रार्थयितुमर्हः एव न दृश्यते।

अहो स्थिरः कोऽपि तवेप्सितो युवा
चिराय कर्णोत्पलशून्यतां गते।
उपेक्षते यः श्लथ(१)लम्बिनीर्जटाः
कपोलदेशे कलमाग्रपिङ्गलाः॥ ४७॥

मुनिव्रतैस्त्वामतिमात्रकर्शितां
दिवाकराप्लुष्टविभूषणास्पदाम्।
शशाङ्कलेखामिव पश्यतो दिवा
सचेतसः कस्य मनो न दूयते॥ ४८॥

र्थितदुर्लभः प्रार्थितो यो दुर्लभः स कथं भविष्यति। नास्त्ये-
त्यर्थः॥ ४६॥

अथ पतिप्रार्थनामेव सिद्धवत् कृत्वाह—

अहो इति॥ अहो चित्रम्। तव ईप्सितः प्राप्तुमिष्टो युवा
ोऽपि स्थिरः कठिनः। वर्तत इति शेषः। कुतः। यो युवा
चराय चिरात्प्रभृति कर्णोत्पलशून्यतां गते प्राप्ते कपोलदेशे
ण्डस्थले श्लथाः शिथिलबन्धना अतएव लम्बिन्यस्ताः श्लथल-
म्बनीः कलमाः शालिविशेषास्तेषामग्राणि तद्वत्पिङ्गला जटा
पेक्षते। यस्त्वामीदृशीं दृष्ट्वा न व्यथते स नूनं वज्रहृदय
त्यर्थः॥ ४७॥

मुनिव्रतैरिति॥ मुनिव्रतैश्चान्द्रायणादिभिरतिमात्रमत्यन्तं
र्शितां कृशीकृतां दिवाकरेण सूर्येणाप्लुष्टानि दग्धानि वाता-
पसंसर्गात् मृदुत्वाच्च श्यामीकृतानि विभूषणास्पदानि भूष-
स्थानानि यस्यास्तां तथोक्ताम्। अतएव दिवादृष्टां शशाङ्क-
खामिव स्थितां त्वां पश्यतः सचेतसो जीवतः कस्य पुंसो
नो न दूयते न परितप्यते। अपि तु सर्वस्यैवेत्यर्थः॥ ४८॥

---

(१) बन्धनीर्जटाः कपोलदेशे, बन्धलम्बिनीर्जटाः कपोले

अवैमि सौभाग्यमदेन वञ्चितं
तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं चिरमस्य चक्षुषो
न वक्त्रमात्मीयमरालपक्ष्मणः ॥ ४९ ॥

कियच्चिरं श्राम्यसि गौरि विद्यते
ममापि पूर्वाश्रमसञ्चितं तपः ।
तदर्धभागेन लभस्व काङ्क्षितं
वरं तमिच्छामि च साधु वेदितुम् ॥५०॥

इति प्रविश्याभिहिता द्विजन्मना
मनोगतं सा न शशाक शंसितुम् ।

अवैमीति ॥ तव प्रियं वल्लभं सौभाग्यमदेन सौन्दर्यगर्वेण ।
कर्त्रा ॥ वञ्चितं विप्रलब्धमवैमि वेद्मि । यः प्रियश्चतुरं मधुरम
वलोकत इति चतुरावलोकिनोऽरालपक्ष्मणः कुटिलरोम्णः
"अरालं वृजिनं जिह्मम्" इत्यमरः ॥ अस्य त्वदीयस्य चक्षु
आत्मीयं वक्त्रं मुखं चिरं लक्ष्यं विषयं न करोति । दृष्टिपथं
न गच्छतीत्यर्थः । तदयं गर्वेण हतो निष्फलात्मलाभो जात
इति भावः ॥ ४९ ॥

कियदिति ॥ हे गौरि । कियत् किंप्रमाणकम् । किमवधि
मित्यर्थः । चिरं श्राम्यसि तपस्यसि ॥ अत्यन्तसंयोगे द्वितीया
ममापि पूर्वाश्रमः प्रथमाश्रमो ब्रह्मचर्याश्रमस्तत्र सञ्चितं सम्प
दितं तपो विद्यते । अर्धश्चासौ भागश्च तेन तस्य तपसोऽर्धभ
गेनैकदेशेन काङ्क्षितमिष्टं वरमुपयन्तारं लभस्व । तं वरं सा
सम्यग्वेदितुं ज्ञातुमिच्छामि । यद्यसौ योग्यो भवति त
ममापि सम्मतिरिति भावः ॥ ५० ॥

इतीति ॥ इतीत्थं द्विजन्मना द्विजेन प्रविश्यान्तर्गत्वा

अथो वयस्यां परिपार्श्ववर्तिनीं
विवर्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥
सखी तदीया तमुवाच वर्णिनं
निबोध साधो तव चेत् कुतूहलम्।
यदर्थमम्भोजमिवोष्णवारणं
कृतं तपःसाधनमेतया वपुः ॥ ५२ ॥

ग्रामवद्दरिद्रमुद्राव्येत्यर्थः। अभिहितोक्ता सा पार्वती मनोगतं हृदिस्थं वरं शंसितुं वक्तुं न शशाक समर्था न अभूत्। लज्जयेति शेषः। अथो अनन्तरं परिपार्श्ववर्तिनीं वयस्यां सखीं विवर्तितं विचालितम् अनञ्जनं व्रतवशादर्जितकज्जलं नेत्रं यस्मिन् कर्मणि तत्तथैक्षत। नेत्रसंज्ञयैव प्रत्युत्तरं वाचयाञ्चकारेत्यर्थः ॥ ५१ ॥

सखीति ॥ तस्याः पार्वत्या इयं तदीया सखी वयस्या तम्। "वर्णः प्रशस्तिः" इति क्षीरस्वामी। सोऽस्यास्तीति वर्णिनं ब्रह्मचारिणम् ॥ "वर्णाद्ब्रह्मचारिणि" इतीनिप्रत्ययः ॥ उवाच ब्रूते स्म। किमिति। हे साधो विद्वन्। तव कुतूहलं चेत्। श्रोतुमस्तीति शेषः। तर्हि निबोधावगच्छ। आकर्णयेत्यर्थः ॥ "बुध अवगमने" इति धातोर्भौवादिकाल्लोट् ॥ श्रोतव्यं किं तदाह—यस्मै लाभायेदं यदर्थम् ॥ अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति वक्तव्यम्" इति वार्तिकनियमात् क्रियाविशेषणम् ॥ एतया पार्वत्याम्भोजं पद्ममुष्णवारणमातपत्रमिव वपुः शरीरं तपःसाधनं कृतम्। तपःप्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः ॥ ५२ ॥

"दृङ्मनःसङ्गसङ्कल्पो जागरः कृशतारतिः। ह्रीत्यागोन्माद-मूर्च्छान्ता इत्यनङ्गदशा दश" इति। तत्र अस्याः काश्चिद्दशाः कममनादृत्यैव योजयति "इयम्" इत्यादिभिः षड्भिः श्लोकैः—

इयं महेन्द्रप्रभृतीनधिश्रिय-
श्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्
पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ५३ ॥
असह्यहुङ्कारनिवर्तितः पुरा
पुरारिमप्राप्तमुखः शिलीमुखः ।
इमां हृदि व्यायतपात(७)मक्षिणो-
द्विशीर्णमूर्तेरपि (८)पुष्पधन्वनः ॥ ५४ ॥

इयमिति ॥ मानिनीन्द्राणीप्रभृतीरतिशय्य वर्तितव्यमित्यभिमानवतीयं पार्वत्यधिश्रियोऽधिकैश्वर्यान्महेन्द्रप्रभृतीनिन्द्रादींश्चतसृणां दिशामीशानिन्द्रवरुणयमकुवेरान् ॥ "तद्धितार्थ—" इत्यादिनोत्तरपदसमासः ॥ अवमत्यावधूय मदनस्य निग्रहान्निबर्हणाद्धेतोः । अकामुकत्वादित्यर्थः । रूपेण सौन्दर्येण हार्यो वशीकरणीयो न भवतीत्यरूपहार्यं पिनाकः पाणौ यस्य तं पिनाकपाणिं हरम् ॥ "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः" इति साधु ॥ पतिं भर्तारमाप्तुमिच्छति ॥ एतेन सङ्कल्पावस्था सूचिता ॥ ५३ ॥

असह्येति । पुरा पूर्वम् असह्येन सोढुमशक्येन हुङ्कारेण रौद्रेण निवर्तितः । अतएव पुरारिं हरमप्राप्तमुखोऽप्राप्तफलो विशीर्णमूर्तेर्नष्टशरीरस्यापि पुष्पधन्वनः कामस्य शिलीमुखो बाण इमां पार्वतीं हृदि व्यायतः । सुदूरावगाढ इति यावत् । तादृक्पातः प्रहारो यस्मिन् कर्मणि तत्तथाक्षिणोदकार्षीत् । दग्धदेहस्यापि मार्गणो लग्नः । "मृदुः सर्वत्र बाध्यते" इति भावः ॥

---

(७) मक्षणोत् । (८) स्मरारिम् ।

तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि ॥ ५५ ॥

उपात्तवर्णे चरिते पिनाकिनः
सबाष्पकण्ठस्खलितैः पदैरियम् ।
अनेकशः किन्नरराजकन्यका
वनान्तसङ्गीतसखीररोदयत् ॥ ५६ ॥

अनेन "विवृण्वती शैलसुतापि भावम्" ( ३ । ६८ ) इत्यत्रोक्तं चक्षुःप्रीतिमनःसङ्गाख्यमवस्थाद्वयमनन्तरावस्थोपयोगितयानूद्य कार्श्यावस्था सूचिता ॥ ५४ ॥

तदेति ॥ तदेति छेदः । तदा प्रभृति । तत आरभ्येत्यर्थः ॥ सप्तम्यर्थस्यापि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणा प्रभृतियोगे पञ्चमीनियमात् ॥ पितुर्गृहे उन्मदनोत्कटमन्मथा ललाटस्यालङ्कारो ललाटिका तिलकः ॥ "कर्णललाटात् कनलङ्कारे" इति कन्प्रत्ययः ॥ तस्याश्चन्दनेन धूसरा धूसरवर्णा अलकाश्चूर्णकुन्तला यस्याः सा तथोक्ता बाला पार्वती जातु कदाचिदपि तुषारसङ्घातास्तुषारघनास्त एव शिलास्तासां तलेषूपरिभागेष्वपि निर्वृतिं सुखं न लभते स्म ॥ एतेनारत्यपरसंज्ञा विषयविद्वेषावस्था द्वादशावस्थापक्षे संज्वरश्च व्यज्यते ॥ ५५ ॥

उपात्तेति ॥ पिनाकिनः शम्भोश्चरिते त्रिपुरविजयादिचेष्टित उपात्तवर्णे प्रारब्धगीतक्रमे ॥ "गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यते" इति हलायुधः ॥ सबाष्पे गद्गदे कण्ठे स्खलितैर्विशीर्णैः पदैः सुप्तिङन्तरूपैः ॥ करणैः ॥ वनान्ते सङ्गीतेन निमित्तेन सखीर्वयस्याः किन्नरराजकन्यका अनेकशो बहुशोऽरोदयदश्रुमोचनमकारयत् । हरचरितगानजनितमदनवेदना-

त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा (८)व्यबुध्यत ।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवा-
गसत्यकण्ठार्पितबाहुबन्धना ॥ ५७ ॥
(१)यदा बुधैः सर्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम् ।

मेनां वीक्ष्य किन्नर्योऽपि रुरुदुरिति भावः ॥ अत्र वर्णस्खलनलक्षणकार्योक्त्या पुनःपुनस्तत्कारणीभूतमूर्च्छावस्थाप्रादुर्भावो व्यज्यतेऽन्यथा सखीरोदनानुपपत्तेरिति । द्वादशावस्थापक्षे तु प्रलापावस्था च व्यज्यते । "प्रलापो गुणकीर्तनम्" इत्यालङ्कारिकाः ॥ ५६ ॥

त्रिभागेति ॥ किञ्चेति चार्थः । शिष्यत इति शेषः ॥ कर्मणि घञ् ॥ त्रिभ्यो भागेभ्यः शेषास्तवशिष्टास्तु । यद्वा रात्रेस्त्रियामत्वेन प्रसिद्धत्वात् तृतीयो भागस्त्रिभागः ॥ संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते । यथा "शतांशः" "सहस्रांशः" इति ॥ त्रिभागः शेषो यासां तासु निशासु क्षणं क्षणमात्रं नेत्रे निमील्य मीलयित्वा सहसा सद्यः । हे नीलकण्ठ । क्व व्रजसि कुत्र गच्छसीत्यलक्ष्या निर्विषया वाक् वचनं यस्याः सा तथोक्ता तथासत्ये मिथ्याभूते कण्ठेऽर्पितं बाहुबन्धनं यस्याः सा तथा सती व्यबुध्यत विबुद्धवती ॥ एतेन जागरोन्मादौ सूचितौ ॥ ५७ ॥

स्वप्नसाहचर्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणां विनोदाः । तत्र स्वप्नसन्दर्शनमुक्त्वा प्रतिकृतिदर्शनमाह—

यदेति ॥ यदा । यत इत्यर्थः ॥ यदेति हेतावित्युक्तं गणव्याख्यानेऽस्योदाहृतत्वात् ॥ त्वं बुधैर्मनीषिभिः सर्वगतः सर्वव्यापीत्युच्यसे । तत इत्यध्याहारः । भावे रत्याख्ये तिष्ठतीति

(८) विबुध्यत ।    (१) यतः ।

इति स्वहस्तोल्लिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः ॥ ५८ ॥
यदा च तस्याधिगमे जगत्पते-
रपश्यदन्यं न विधिं (२)विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरो-
रियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥
द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु (३)दृष्टमेष्वपि ।
न च प्ररोहाभिमुखो(४)ऽपि दृश्यते
मनोरथोऽस्याः शशिमौलिसंश्रयः ॥ ६० ॥

भावस्थम्। त्वय्यनुरागिणमित्यर्थः। इमं जनम्। इममित्या-
त्मनिर्देशः। कथं न वेत्सि न जानासीति मुग्धया मूढया।
प्रकिञ्चित्करचित्रगतोपालम्भ इत्यजानानयेत्यर्थः। तया स्वह-
स्तेनोल्लिखितश्चित्रे लिखितश्चन्द्रशेखरो रहस्येकान्ते। सखी-
भावसमक्षमित्यर्थः। उपालभ्यत। साधिक्षेपमुक्तश्च॥ उन्माद-
सूचनार्थश्चकारः॥ यद्यपि रहसीत्युक्तं तथापि सखीसमक्ष-
करणाल्लज्जात्यागो व्यज्यत एव ॥ ५८ ॥

यदेति॥ जगत्पतेः तस्य ईश्वरस्य अधिगमे प्राप्तौ अन्यं
विधिमुपायं विचिन्वती मृगयमाणा यदा नापश्यत्तदेयं पार्वती
गुरोः पितुः अनुज्ञया अस्माभिः सह तपसे तपश्चरितुं तपोवनं
प्रपन्ना प्राप्ता ॥ ५९ ॥

द्रुमेष्विति॥ सख्या पार्वत्या स्वयं कृतं जन्म येषां तेषु।
स्वयं रोपितेष्वित्यर्थः। तपसः साक्षिषु साक्षाद्द्रष्टृषु एषु द्रुमेष्वपि
फलं दृष्टं लब्धम्। जनितमित्यर्थः। अस्याः पार्वत्याः शशि-

(२) वितन्वती। (३) बद्धम्। (४) न।

न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभि(५)रस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं
वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥

अगूढसद्भावमितीङ्गितज्ञया
निवेदितो नैष्ठिकसुन्दरस्तया ।

मौलिसंश्रयश्चन्द्रशेखरविषयो मनोरथस्तु प्ररोहाभिमुखोऽङ्कुराभिमुखोऽपि न दृश्यते ॥ "प्ररोहस्त्वङ्कुरोऽङ्कुरः" इति वैजयन्ती। स्वयं रोपितवृक्षफलकालेऽप्यस्या मनोरथस्य न अङ्कुरोदयोऽप्यस्ति । फलाशा तु दूरापास्तेत्यर्थः ॥ ६० ॥

नेति ॥ प्रार्थितः सन् दुर्लभः प्रार्थितदुर्लभः स देवस्तपःकृशां तपसा कृशां क्षीणाम् अतएव सखीभिरस्रोत्तरमश्रुप्रधानं यथा भवति तथेक्षितामिमां नः सखीं तस्येन्द्रस्यावग्रहेणानावृष्ट्या क्षतां पीड़िताम् ॥ "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः ॥ अवग्रहः । वर्षप्रतिबन्ध इत्यर्थः । सीतां कृष्टभुवम् ॥ "सीता लाङ्गलपद्धतिः" इत्यमरः ॥ वृषा वासव इव। "वासवो वृत्रहा वृषा" इत्यमरः ॥ कदा अभ्युपपत्स्यते कदा अनुग्रहीष्यति न वेद्मि ॥ अत्र वाक्यार्थः कर्म ॥ तदवग्रहक्षतामित्यत्रावग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेस्तदिति भिन्नं पदं वेद्मीत्यस्य कर्मेति युक्तमुत्पश्यामः ॥ ६१ ॥

अगूढेति ॥ इङ्गितज्ञया पार्वतीहृदयाभिज्ञया ॥ "इङ्गितं हृद्गतो भावः" इति सज्जनः ॥ तया गौरीसख्येत्येवमगूढसद्भावं प्रकाशितसदभिप्रायं यथा तथा निवेदितो ज्ञापितः निष्ठा मरणमवधिर्यस्य स नैष्ठिको यावज्जीवब्रह्मचारी । सुन्दरो विलासी । नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः ॥ इयोरन्यतरस्य विशेषणत्वविवक्षायां विशेषणसमासः । किन्तु नैष्ठिकत्ववि-

(५) अस्राकुलम् ।

अथौदमेवं परिहास इत्युमा-
मपृच्छदव्यञ्जितहर्षलक्षणः ॥ ६२ ॥
अथाग्रहस्ते मुकुलीकृताङ्गुलौ
समर्पयन्ती स्फटिकाक्ष(६)मालिकाम् ।
कथञ्चिदद्रेस्तनया मिताक्षरं
चिरव्यवस्थापितवागभाषत ॥ ६३ ॥
यथा श्रुतं वेदविदां वर त्वया
जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।

षणेन कामित्वाविरोधः । अथवा देवस्यालौकिकमहिमत्वादुभयं तात्त्विकमिति न विरोधः ॥ अव्यञ्जितं हर्षलक्षणं मुखरागादि हर्षलिङ्गं यस्य तथाभूतः सन् । अयि गौरि ॥ अयीति कोमलामन्त्रणे ॥ इदं त्वत्सखीभाषितमेवम् । सत्य मिकित्यर्थः । परिहासः केलिर्वा ॥ "द्रवकेलिपरीहासाः" इत्यमरः ॥ इत्येवमुमामपृच्छत् पृष्टवान् ॥ ६२ ॥

अथेति ॥ अथानन्तरमद्रेस्तनया पार्वती मुकुलीकृताङ्गुलौ संपुटीकृताङ्गुलौ । अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः । हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदादिति वामनः ॥ तस्मिन्नग्रहस्ते स्फटिकानामक्षमालिकां जपमालिकामर्पयन्त्यामुञ्चती कथञ्चिन्महता कष्टेन चिरव्यवस्थापितवाक् चिरेण स्थीकृतवाक् । एतेन लज्जोपरोधो व्यज्यते । मिताक्षरं परिमितवर्णं यथा तथाभाषत बभाषे ॥ ६३ ॥

किमुवाचेत्याह—

यथेति ॥ हे वेदविदां वर वैदिकश्रेष्ठ । त्वया यथा श्रुतं सम्यक् श्रुतम् । श्रुतार्थमेवाह—अयं जनः । स्वयमित्यर्थः । उच्चैःपदस्य शिवलाभरूपोन्नतस्थानस्य लङ्घने आक्रमणे उत्सुकः । किम-

(६) -मण्डलम् ।

तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ॥ ६४ ॥

अथाह वर्णी विदितो महेश्वर-
स्तदर्थिनी त्वं पुनरेव वर्तसे ।
अमङ्गलाभ्यास(७)रतिं विचिन्त्य तं
तवानुवृत्तिं न च कर्तुमुत्सहे ॥ ६५ ॥

अवस्तुनिर्बन्धपरे कथं नु ते
करोऽयमामुक्तविवाहकौतुकः ।

व्यायुक्तमित्यत्राह—इदं तपः तदवाप्तेस्तस्योच्चैःपदस्यावाप्तेः प्राप्तेः साधनं किल ॥ किलेत्यलीके ॥ अतितुच्छत्वादसाधकमेवेत्यर्थः । तर्हि त्यज्यतामित्याशङ्क्य दुराशा मां न मुञ्चतीत्याशयेनाह—मनोरथानां कामानामगतिः अविषयो न विद्यते । न हि स्वशक्तिपर्यालोचनया कामाः प्रवर्तन्त इति भावः ॥६४॥

अथेति ॥ अथ वर्णी ब्रह्मचारी ॥ "वर्णिनो ब्रह्मचारिणः" इत्यमरः ॥ आह । उवाचेत्यर्थः । "आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूलः" इत्याह वामनः ॥ किमित्याह—महेश्वरो महादेवो विदितः । मया ज्ञायत इत्यर्थः ॥ बुद्ध्यर्थत्वाद्वर्तमाने क्तप्रत्ययः । तद्योगात् षष्ठी च ॥ येन त्वं प्राग्भग्नमनोरथा जातेति भावः । पुनरेव त्वं तमीश्वरमर्थयसे तदर्थिन्येव तत्कामैव प्रवर्तसे । तत्प्रभावमनुभूयापीति भावः । अनुसरणे को दोषस्तत्राह—अमङ्गलाभ्यासेऽमङ्गलाचारे रतिर्यस्य तं तथोक्तं तमीश्वरं विचिन्त्य विचार्य तव अनुवृत्तिम् अनुसरणं कर्तुं न उत्सहे । नानुमन्तुं शक्नोमीत्यर्थः ॥ ६५ ॥

अवस्त्विति ॥ अवस्तुनि तुच्छवस्तुनि निर्बन्धोऽभिनिवेशः परं प्रधानं यस्याः तस्याः संबुद्धिः अवस्तुनिर्बन्धपरे पार्वति ।

(७) -रतम् ।

(८)करेण शम्भोर्वलयीकृताहिना
सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६ ॥
त्वमेव तावत्परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः।
बधूदुकूलं कलहंसलक्षणं
गजाजिनं शोणितबिन्दुवर्षि च ॥ ६७ ॥

आमुक्तमासञ्जितं विवाहे यत् कौतुकं हस्तसूत्रं तद्यस्य स तथोक्तः। सः ऽयं करः॥ "कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले" इति शाश्वतः॥ वलयीकृताहिना भूषणीकृतसर्पेण शम्भोः महादेवस्य करेण करणभूतेन। तदेव प्रथमं तत्प्रथमम्। अपरिचितत्वादति-भयङ्करमिति भावः। तच्च तत् अवलम्बनं ग्रहणं चेति कथं नु सहिष्यते। न कथञ्चिदपि सहिष्यत इत्यर्थः। अग्रतो यद्भावि तद्दूरेऽवतिष्ठतां प्रथमं करग्रह एव दुःसह इति भावः ॥६६॥

त्वमेवेति॥ हे गौरि। त्वमेव स्वयम् आत्मना। तावदिति मानार्थे। यावन्मात्रं विचारणीयं तावन्मात्रमित्यर्थः॥ इद-मेवोदाहृतं च गणव्याख्याने॥ परिचिन्तय पर्यालोचय। किमिति। कलहंसलक्षणं कलहंसचिह्नम्॥ "चिह्नं लक्ष्म च लक्षणम्" इत्यमरः॥ बध्वा नवोढाया दुकूलं बधूदुकूलम्॥ "बधूः स्नुषा नवोढा स्त्री" इति विश्वः॥ तथा शोणितबिन्दून् वर्षतीति तथोक्तम्। आर्द्रमित्यर्थः। गजाजिनं च कृत्तिवासस्। तत्पिनाकिन इत्याशयः। एते कदाचिज्जात्वपि योगं सङ्गति-महतो यद्यर्हतः किम्। एतत्त्वमेव चिन्तयेति पूर्वेणान्वयः। पाणिग्रहणकाले बधूवरयोर्वस्त्रान्तग्रन्थिः क्रियते। कृत्तिवा-ससा पाणिपीडने तु दुकूलधारिण्यास्तव कथं सङ्घटिष्यत इति भावः॥ ६७॥

---

(८) भुजेन।

चतुष्कपुष्पप्रकरावकीर्णयो:
परोऽपि को नाम (८)तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयो-
र्विकीर्णकेशासु परेतभूमिषु ॥ ६८ ॥

अयुक्तरूपं किमत:परं (१)वद
त्रिनेत्रवक्ष: सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन् (२)हरिचन्दनास्पदे
पदं चिताभस्मरज: करिष्यति ॥ ६९ ॥

चतुष्केति ॥ चतुष्के ॥ गृहविशेषे य: पुष्पप्रकरस्तत्र अवकीर्णयो: न्यस्तयो: । कुसुमास्तृतदिव्यभवनभूसञ्चारोचितयोरित्यर्थ: । तव पादयोरलक्तकाङ्कानि लाक्षारञ्जितानि पदानि पादाकाराणि पादन्यासचिह्नानि ॥ "पदं शब्दे च वाक्ये च व्यवसायापदेशयो: । पादतच्चिह्नयो:" इति विश्व: ॥ विकीर्णा विक्षिप्ता: केशा: शवशिरोरुहा यासु तासु विकीर्णकेशासु ॥ "अतत्स्थं तत्र दृष्टं च" इति वचनात् "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति विकल्पान्न ङीप् ॥ परेतभूमिषु प्रेतभूमिषु । श्मशानेष्वित्यर्थ: । परोऽपि शत्रुरपि को नामानुमन्यते । न कोऽपीत्यर्थ: । नामेति कुत्सायाम् ॥ पिनाकपाणिपाणिग्रहणे तस्य परेतभूसञ्चारित्वेन साहचर्यात्तवापि तत्र सञ्चारोऽवश्यम्भावीति भाव: ॥ ६८ ॥

अयुक्तेति ॥ त्रिनेत्रवक्ष: । त्र्यम्बकालिङ्गनमित्यर्थ: । तव तत्सम्बन्धितया सुलभमपि सुप्रापं च । भवतीति शेष: ॥ तवेति शेषे षष्ठी । "न लोकाव्यय—" इत्यादिना कृद्योगलक्षणषष्ठ्या निषेधात् ॥ अत:परमस्मात्त्रिनेत्रवक्षोलाभादन्यदयुक्तरूपम् अत्यन्तायुक्तं किं वद । न किञ्चिदित्यर्थ: । "प्रशं-

---

(८) तवानुमंस्यते । (१) भवेत् । (२)हरिचन्दनाङ्किते ।

इयं च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्यया।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥ ७० ॥

इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया (१)पिनाकिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ७१ ॥

त्यायां रूपप्" इति रूपप्प्रत्ययः ॥ कुतः। यद्यस्मात् कारणात् हरिचन्दनास्पदे हरिचन्दनस्यास्पदे स्थानभूतेऽस्मिन् स्तनद्वये चिताभस्म श्मशानभस्म तदेव रजश्चूर्णम् ॥ कर्तृ ॥ पदं करिष्यति पदं निधास्यति। भर्तुर्भवस्य भस्माङ्गरागादिति भावः ॥ ६९ ॥

इयमिति ॥ इयं च ते तव पुरत आदावेव अन्या विडम्बना। परिहास इत्यर्थः। का सेत्यत्राह—ऊढया परिणीतया ॥ वहेः कर्मणि क्तः ॥ वारणराजहार्यया त्वया अधिष्ठितम् आरूढं वृद्धम् उक्षाणं वृद्धोक्षम् ॥ "अचतुर—" इत्यादिना निपातः ॥ विलोक्य महाजनः साधुजनः स्मेरमुखः स्मितमुखो भविष्यति उपहसिष्यति यत्। इयमिति पूर्वेण सम्बन्धः ॥ स्मेरेति "नमि-कम्पिस्म्यजस—" इत्यादिना रप्रत्ययः ॥ ७० ॥

इयमिति ॥ पिनाकिन ईश्वरस्य समागमप्रार्थनया प्राप्ति-कामनया। क्रियमाणयेति शेषः। सम्प्रति इयं शोचनीयतां शोच्यत्वं गतम्। किं तदाह—सा प्रागेव हरशिरोगता ॥ अत्र सेति प्रसिद्धार्थत्वान्न यच्छब्दापेक्षा। तदुक्तं काव्यप्रकाशे— "प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते" इति ॥ कान्तिमती ॥ नित्ययोगे मतुप् ॥ कलावतः चन्द्रस्य

---

(१) कपालिनः।

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥ ७२ ॥
निवर्तयास्मादसदीप्सितान्मनः
क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।

कला षोड़शो भागश्च अस्य लोकस्य नेत्रकौमुदी । नेत्रानन्दनीत्यर्थः । त्वं च । कान्तिमतीत्वनेत्रकौमुदीत्वविशेषणयोरुभयत्राप्यन्वयः । प्रागिकैव शोच्या । सम्प्रति तु त्वमप्यपरेति द्वयं शोच्यमिति पिण्डितार्थः । शोच्यत्वं च निकृष्टाश्रयणादिति भावः ॥ ७१ ॥

"कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः" इति लोकानामाभाषणम् । तत्र किञ्चिदपि नास्तीत्याह—

वपुरिति ॥ वपुः तावदस्य विरूपाणि अक्षीणि नेत्राणि यस्य तद्विरूपाक्षम् ॥ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति षच्प्रत्ययः ॥ वैरूप्यं च त्रिनेत्रत्वादिति चौरस्वामी ॥ अतो न सौन्दर्यवार्तापीत्यर्थः । अलक्ष्यमज्ञातं जन्म यस्य तस्य भावस्तत्ता । कुलमपि न ज्ञायत इत्यर्थः ॥ "अलक्षिता जनिः" इति पाठे जनिः उत्पत्तिरलक्षिता न ज्ञाता ॥ "जनिरुत्पत्तिरुद्भवः" इत्यमरः ॥ वसु वित्तं दिगम्बरत्वेनैव निवेदितम् । नास्तीति ज्ञापितमित्यर्थः । यदि वित्तं भवति तदा कथं दिगम्बरो भवति । अतो श्रेयं निर्धनोऽयमिति । किंबहुना हे बालमृगाक्षि पार्वति वरेषु वोढृषु ॥ "वरो जामातृवोढारौ" इति विश्वः ॥ यद्रूपवित्तादिकं मृग्यते कन्यातद्बन्धुभिरन्विष्यते तत् त्रिलोचने त्र्यम्बके व्यस्तम् । एकमपि समस्तं मा भूदिति भावः । अस्ति किम् । नास्त्येवेत्यर्थः ॥ ७२ ॥

निवर्तयेति ॥ अस्मादसदीप्सितादनिष्टमनोरथात् मनो

(४)अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य (५)न यूपसत्क्रिया ॥ ७३ ॥

इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधरलक्ष्यकोपया।
विकुञ्चित(६)भ्रूलतमाहिते तया
विलोचने तिर्यगुपान्तलोहिते ॥ ७४ ॥

उवाच चैनं परमार्थतो हरं
न वेत्सि नूनं यत एवमात्थ माम्।

निवर्तय निवारय। सा पूर्वोक्ता विधा प्रकारो यस्य तथोक्तः। ामङ्गलशील इत्यर्थः। क। महदन्तरमित्यर्थः। पुण्यलक्षणा ायस्सभाग्यचिह्ना त्वं च क। अतो न तवायमर्ह इत्यर्थः। ाथाहि। साधुजनेन॥ "साधुर्वार्धुषिके चारौ सज्जने चाभि- ेयवत्" इति विश्वः॥ श्मशानशूलस्य श्मशानभूमिनिखा- ास्य वध्यशङ्कोर्वैदिकी वेदोक्ता यूपो नाम पशुबन्धनसाधनभूतः ंस्कृतदारुविशेषस्तस्य सत्क्रिया प्रोक्षणाभ्युक्षणादिसंस्कारो ूपसत्क्रिया नापेक्ष्यते नेष्यते। यथा श्मशानशूले यूपसत्- ्रिया न क्रियते तथा त्वमपि तस्मै न घटस इति तात्प- ार्थः॥ ७३ ॥

इतीति॥ इत्येवंप्रकारेण द्विजातौ द्विजे प्रतिकूलवादिनि ति प्रवेपमानेन चञ्चलेनाधरेणाधरोष्ठेन लक्ष्योऽनुमेयः कोपः क्रोधो यस्यास्तथोक्तया तया पार्वत्या उपान्तलोहिते प्रान्तरक्ते विलोचने विकुञ्चिते कुटिलिते भ्रूलते यस्मिंस्तत्तथा। सभ्रू- भङ्गमित्यर्थः। तिर्यक् साचि आहिते निहिते। अनादरात्तिर्य- गेक्षतेत्यर्थः॥ ७४ ॥

उवाचेति॥ अथैनं ब्रह्मचारिणमुवाच च। किमिति। पर-

(४) अपेक्षते। (५) हि। (६) -भ्रूलतया।

अलोकसामान्यमचिन्त्यहेतुकं
द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥७५॥
विपत्प्रतीकारपरेण मङ्गलं
निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः
किमेभिराशोपहतात्मवृत्तिभिः ॥ ७६ ॥

मार्थतस्तत्त्वतो हरं न वेत्सि न जानासि नूनम् । कुतः । यतो मामेवमुक्तया रीत्यात्थ ब्रवीषि ॥ "ब्रुवः पञ्चानामादितः—" इति रूपसिद्धिः ॥ अज्ञानादेवायं शिवद्वेषस्तवेत्याशयेनाह—मन्दा मूढाः ॥ "मूढाल्पापटुनिर्भाग्या मन्दाः" इत्यमरः ॥ लोकसामान्यमितरजनसाधारणं न भवतीत्यलोकसामान्यमचिन्त्यहेतुकं दुर्बोधकारणकं महात्मनां चरितं द्विषन्ति हेतपरिज्ञानाद्दूषयन्ति । विद्वांसस्तु कोऽप्यत्र हेतुरस्तीति बहु मन्यन्त इत्यर्थः ॥ ७५ ॥

सम्प्रति "अमङ्गलाभ्यासरतिम्" ( ५ । ६५ ) इत्याद्युक्त दूषणजातं 'विपद्' इत्यादिभिः षड्भिः श्लोकैः परिहर्तुमारभते—

विपदिति ॥ विपत्प्रतीकारपरेण । अनर्थपरिहारार्थिनेत्यर्थः ॥ "उपसर्गस्य घञ्यमनुष्ये बहुलम्" इति दीर्घः ॥ भूतिसमुत्सुकेनैश्वर्यकामिन वा मङ्गलं गन्धमाल्यादिकं निषेव्यते शरणे रक्षणे साधुः शरण्यः ॥ "तत्र साधुः" इति यत्प्रत्ययः "शरणं गृहरक्षित्रोः" इत्यमरः ॥ जगतः शरण्यस्तस्य जगच्छरण्यस्य निराशिषो निरभिलाषस्य सतः शिवस्य ॥ "आशीः करणदंष्ट्रायां विप्रवाक्याभिलाषयोः" इति शाश्वतः ॥ आशयतृष्णयोपहता दूषितात्मवृत्तिरन्तःकरणवृत्तिर्येषां तैरेभिर्मङ्गलैः किम् । वृथेत्यर्थः । पूर्वं मङ्गलमित्येकवचनस्य जात्यभिप्रायत्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते । दृष्टावाप्तानिष्टपरिहारार्थिनो हि मङ्गलाचारनिर्बन्धः । तदुभयासंस्पृष्टस्य तु

अकिञ्चनः सन् प्रभवः स सम्पदां
(७)त्रिलोकनाथः पितृसद्मगोचरः।
स भीमरूपः शिव इत्युदीर्यते
न सन्ति याथार्थ्यविदः पिनाकिनः ॥७७॥
विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा।
कपालि वा (८)स्यादथवेन्दुशेखरं
न विश्वमूर्तेरवधार्यते वपुः ॥ ७८ ॥

यथाकथञ्चिदास्ताम्। को दोष इत्यर्थः। एतेन "अमङ्गलाभ्यासरतिम्" (५। ६५) इत्युक्तं प्रत्युक्तम् ॥ ७६ ॥

अकिञ्चन इति ॥ स हरः। न विद्यते किञ्चन द्रव्यं यस्य सोऽकिञ्चनो दरिद्रः सन्। सम्पदां प्रभवति यस्मादिति प्रभवः कारणम्। पितृसद्मगोचरः श्मशानाश्रयः सन्। त्रयाणां लोकानां नाथः॥ "तद्धितार्थ—" इत्यादिनोत्तरपदसमासः॥ स देवो भीमरूपो भयङ्कराकारः सन्। शिवः सौम्यरूप इत्युदीर्यत उच्यते। अतः पिनाकिनो हरस्य यथाभूतोऽर्थो यथार्थस्तस्य भावो याथार्थ्यं तत्त्वं तस्य विदो न सन्ति। लोकोत्तरमहिम्नो निर्लेपस्य यथाकथञ्चिदवस्थानं न दोषायेति भावः। एतेन "अवस्तुनिर्बन्धपरे" (५। ६६) इति श्लोकोक्तं परिहृतं वेदितव्यम् ॥ ७७ ॥

देवस्य लौकिकमलौकिकं च प्रसाधनं नास्तीत्याशयेनाह—

विभूषणेति ॥ विश्वं मूर्तिर्यस्येति विश्वमूर्तेरष्टमूर्तेः शिवस्य वपुः शरीरं भूषणैरुद्भासत इति भूषणोद्भासि स्यात्। पिनद्धभोगि आमुक्तभुजङ्गमं वा स्यात्॥ पिनद्धेति नह्यतेरपिपूर्वात् कर्मणि क्तः। "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यकार-

(७) स लोकनाथः। (८) स्यादथ चन्द्रशेखरम्।

(८)तदङ्गसंसर्गमवाप्य कल्पते
ध्रुवं चिताभस्मरजो विशुद्धये ।
तथाहि नृत्याभिनयक्रियाच्युतं
(१)विलिप्यते मौलिभिरम्बरौकसाम् ॥७९॥

असम्पदस्तस्य वृषेण गच्छतः
प्रभिन्नदिग्वारणवाहनो वृषा ।

लोपः ॥ गजाजिनालम्बि स्यात् । अथवा दुकूलधारि स्यात् । कपालमस्यास्तीति कपालि ब्रह्मशिरःकपालशेखरं वा स्यात् । इन्दुशेखरं वा स्यात् । नावधार्यते न निर्धार्यते । सर्वं सम्भवतीत्यर्थः । एतेन "त्वमेव तावत्" (५ । ६७) इति श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥ ७८ ॥

"अयुक्तरूपं किमतःपरं वद" (५ । ६९) इति श्लोकोक्तं प्रत्याह—

तदिति ॥ तस्य शिवस्याङ्गं तस्य संसर्गमवाप्यासाद्य चिताभस्मैव रजो विशुद्धये कल्पते । अलं पर्याप्नोतीत्यर्थः ॥ अलमर्थयोगात् "नमःस्वस्तिस्वाहा—" इत्यादिना चतुर्थी ॥ ध्रुवं शोधकत्वम् । प्रमाणसिद्धमित्यर्थः । प्रमाणमेवाह—तथाहि । प्रसिद्धमेवेत्यर्थः । नृत्ये ताण्डवे योऽभिनयोऽर्थव्यञ्जकचेष्टाविशेषः स एव क्रिया तया निमित्तेन च्युतं पतितम् । चिताभस्मरज इति शेषः ॥ अम्बरौकसां देवानां मौलिभिर्विलिप्यते ध्रियते । अशुद्धं चेत् कथमिन्द्रादिभिर्ध्रियेतेत्यर्थापत्तिरनुमानं वा प्रमाणमित्यर्थः ॥ ७९ ॥

यदुक्तम् "दिगम्बरत्वेन निवेदितं वसु" (५ । ७२) "इयं च तेऽन्या पुरतो विडम्बना" (५ । ७०) इत्यादि च तत्रोत्तरमाह—

---

(८) तदङ्गसंस्पर्शम् ।　　　　(१) विलुप्यते ।

करोति पादावुपगम्य मौलिना
विनिद्रमन्दाररजोऽरुणाङ्गुली ॥ ८० ॥
विवक्षता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥
अलं विवादेन यथा (२)श्रुतस्त्वया
तथाविधस्तावदशेषमस्तु सः ।

असम्पद इति ॥ प्रभिन्नो मदस्रावी दिग्वारणो दिग्गजो वाहनं यस्य सः। ऐरावतेनोढ इत्यर्थः। वृषा देवेन्द्रोऽसम्पदो दरिद्रस्य वृषेण गच्छतो वृषभारूढस्य तस्येश्वरस्य पादौ मौलिना मुकुटेनोपगम्य। प्रणम्येत्यर्थः। विनिद्राणां विकसितानां मन्दाराणां कल्पतरुकुसुमानां रजोभिः परागैः अरुणा अङ्गुलयो ययोस्तौ तथोक्तौ करोति। दिग्गजारोहिणामिन्द्रादीनामपि वन्द्यस्य इन्दुमौलेः किं सम्पदा वृषारोहणे वा को दोष इत्यर्थः ॥ ८० ॥

यदुक्तम् "अलक्ष्यजन्मता" (५।७२) इति तत्रोत्तरमाह—

विवक्षतेति ॥ च्युतात्मना नष्टस्वभावेन अतएव दोषं दूषणं विवक्षता वक्तुमिच्छतापि त्वया ईशं प्रत्येकम् "अलक्ष्यजन्मता" इत्येतदेकम्। वच इत्यर्थः। साधु भाषितं सम्यगुक्तम्। कुतः। यम् ईश्वरमात्मभुवोऽपि ब्रह्मणोऽपि ॥ "ब्रह्मात्मभूः सुरज्येष्ठः" इत्यमरः ॥ कारणमामनन्ति उदाहरन्ति। विद्वांस इति शेषः ॥ "पाघ्राध्मास्थाम्नादाण्—" इत्यादिना मनादेशः ॥ स ईश्वरः कथं लक्ष्यप्रभवो लक्ष्यजन्मा भविष्यति। अनादिनिधनस्य भगवतः कारणशङ्काकलङ्कोऽपि नास्तीत्यत इत्यर्थः ॥ ८१ ॥

---

(२) श्रुतम्।

ममात्र भावैकरसं मनः स्थितं
न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥
निवार्यतामालि किमप्ययं वटुः
पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो (३)महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक् ॥ ८३ ॥
इतो गमिष्याम्यथवेति वादिनी
चचाल बाला (४)स्तनभिन्नवल्कला ।

अलमिति ॥ अथवा विवादेन कलहेनालम् । त्वया यथ येन प्रकारेण स ईश्वरः श्रुतोऽशेषं कार्त्स्न्येन तथाविधस्ताव त्प्रकार एवास्तु । मम मनस्त्वीश्वरे भावः शृङ्गार एकोऽद्वितीयं रस आस्वाद्यो यस्य तत् तथा स्थितम् । तथाहि । कामवृत्ति स्वेच्छाव्यवहारी वचनीयमस्थानसङ्गापवादं नेक्षते न विचा रयति । न हि स्वेच्छासञ्चारिणो लोकापवादाद्बिभ्यतीति भावः ॥ ८२ ॥

निवार्यतामिति ॥ हे आलि सखि ॥ "आलिः सखी वयस्य च" इत्यमरः ॥ स्फुरितोत्तराधरः स्फुरणभूयिष्ठोऽयं वटुर्माण वकः पुनः किमपि विवक्षुः वक्तुमिच्छुः ॥ ब्रुवः सनन्तादुप्र त्ययः ॥ निवार्यताम् । तर्हि वक्तुमेव कथं न ददासीत्याह- तथाहि । यो महतः पूज्यानपभाषतेऽपवदति न केवलं स पापभाग्भवति । किन्तु तस्मादपभाषमाणात् पुरुषाद्यः शृणोति सोऽपि पापभाक् । भवतीति शेषः ॥ अत्र स्मृतिः—"गुरोः प्राप्तः परीवादो न श्रोतव्यः कथञ्चन । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः" इति ॥ ८३ ॥

सम्प्रति गन्तव्यपक्षमाश्रयते—

---

(३) महतां विभाषते । (४) रयभिन्नवल्कला ।

स्वरूपमास्थाय च तां कृतस्मितः
समाललम्बे वृषराजकेतनः ॥ ८४ ॥

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः
(५)निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ८५ ॥

अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।

इत इति ॥ अथवेतोऽन्यत्र गमिष्यामीति वादिनी वदन्ती स्तनाभ्यां भिन्नवल्कला रयवशात् कुचस्रस्तचीरा बाला पार्वती चचाल । वृषराजकेतनो वृषभध्वजस्य स्वरूपमास्थाय निजरूपमाश्रित्य कृतस्मितः सन् । तां पार्वतीं समाललम्बे जग्राह ॥ ८४ ॥

तमिति ॥ तं देवं वीक्ष्य वेपथुमती कम्पवती सरसाङ्गयष्टिः स्विन्नगात्री । महादेवदर्शनेन देव्याः सात्त्विकभावोदय उक्तः । निक्षेपणायान्यत्र विन्यासायोद्धृतमुत्क्षिप्तं पदमङ्घ्रिमुद्वहन्ती शैलाधिराजतनया पार्वती मार्गेऽचलस्तस्य व्यतिकरेण समाहत्या । अवरोधनेनेति यावत् । आकुलिता संभ्रमिता सिन्धुर्नदीव ॥ "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः ॥ न ययौ न तस्थौ । लज्जयेति भावः ॥ वसन्ततिलकावृत्तमेतत् ॥ ८५ ॥

अद्येति ॥ चन्द्रमौलौ शिवे । हे अवनताङ्गि पार्वति । अद्य प्रभृति । अस्माद्दिनादारभ्येत्यर्थः ॥ प्रभृतियोगादद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते ॥ तव तपोभिः क्रीतः ॥

---

(५) निक्षेप एव ।

अङ्गाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥८६॥

---

## षष्ठः सर्गः ।

अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥१॥

दासृ दाने । दासत आत्मानं ददातीति दासोऽस्मीति वादिनि वदति सति । सा देवी अङ्गाय सपदि ॥ "द्राग् झटित्यञ्जसाऽह्नाय द्राङ्मङ्क्षु सपदि द्रुतम्" इत्यमरः ॥ नियमजं तपोजन्यं क्लमं क्लेशमुत्ससर्ज । फलप्राप्त्या क्लेशं विसस्मारेत्यर्थः । तथाहि क्लेशः फलेन फलसिद्ध्या पुनर्नवतां विधत्ते । पूर्ववदेवाक्लिष्टतामापादयतीत्यर्थः । सफलः क्लेशो न क्लेश इति भावः ॥ ८६ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये तपःफलोदयो नाम पञ्चमः सर्गः ।

---

अथेति ॥ अथ देवदेवानुग्रहानन्तरं गौरी पार्वती विश्वमात्मा स्वरूपं यस्येति । विश्वस्यात्मेति वा । विश्वात्मने शिवाय मिथो रहसि ॥ "मिथोऽन्योन्यं रहस्यपि" इत्यमरः ॥ सखीं सन्दिदेश प्रतिससर्ज ॥ क्रियामात्रप्रयोगेऽपि सम्प्रदानत्वाच्चतुर्थी ॥ किमिति । भूभृतां नाथो हिमवान्मे मम दाता सन् प्रमाणीक्रियतामिति । दातृत्वेन प्रमाणीक्रियतामित्यर्थः ॥ प्रार्थनायां लोट् ॥ पित्रा दीयमानायाः परिग्रहो मम महाननुग्रह इति भावः ॥ १ ॥

तया व्याहृतसन्देशा सा बभौ निभृता प्रिये ।
चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी ॥ २ ॥
स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीं ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥३॥
ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।
सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः ॥४॥

तयेति ॥ तया सख्या । सखीमुखेनेत्यर्थः । व्याहृतसन्देशा उक्तवाचिका प्रिये हरविषये निभृता निश्चला । परमासक्तेत्यर्थः । सा गौरी । मधौ वसन्ते निभृता स्थिरा परभृतया कोकिलया उन्मुखी मुखरा परभृतोन्मुखी । मुखशब्देन अभिभाषणव्यापारो लक्ष्यते । तथा च परभृतामुखेन व्याहरन्तीत्यर्थः ॥ परभृतेति क्रियाशब्दविवक्षायाम् "जातेरस्त्री—" इति ङीप्प्रत्ययो न भवति । तयेत्युपमेयस्य व्यस्तत्वादुपमानवाचिपरभृताशब्दस्य समासः सोढव्यः । अथवा भरणं सम्पदादित्वात् क्विप् । परैः भृत् यस्यास्तया परभृतेति व्यासेन व्याख्येयम् । पदमञ्जरीकारस्तु परैः भ्रियत इति कर्मणि क्विपमाह ॥ चूतयष्टिश्चूतशाखेवाभ्यासेऽन्तिके बभौ ॥ "सदेशाभ्याससविधसमर्यादसवेशवत् । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" इत्यमरः ॥ २ ॥

स इति ॥ स प्रकृतः । शास्तीति शासनः । बहुलग्रहणात् कर्तरि ल्युट् ॥ स्मरस्य शासन ईश्वरस्तथेति प्रतिज्ञाय । तथा करिष्यामीत्युक्त्वा इत्यर्थः । उमां कथमपि कृच्छ्रेण विसृज्य । तत्र गाढानुरागत्वादिति भावः । ज्योतिर्मयान् तेजोरूपान् सप्तर्षीनङ्गिरःप्रभृतीन् सस्मार स्मृतवान् ॥ ३ ॥

त इति ॥ ते तप एव धनं येषां ते तपोधनाः सप्तर्षयः प्रभामण्डलैस्तेजःपुञ्जैः व्योमाकाशं द्योतयन्तः प्रकाशयन्तः । अरुन्धत्या सह वर्तन्त इति सारुन्धतीकाः सन्तः ॥ "नद्यृतश्च"

आप्लुतास्तीरमन्दार(१)कुसुमोत्किरवीचिषु ।
(२)व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥५॥
मुक्तायज्ञोपवीतानि बिभ्रतो (३)हैमवल्कलाः ।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः ॥६॥
अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।
सहस्ररश्मिना (४)साक्षात्सप्रणाममुदीक्षिताः ॥७॥

इति क्यप् ॥ सपदि प्रभोः ईश्वरस्य पुरः पुरोभागे प्रादुरासन् प्रत्यक्षा बभूवुः ॥ ४ ॥

इतः परं षड्भिः श्लोकैस्तानेव मुनीन् वर्णयति—

आप्लुता इति ॥ उत्किरन्ति विक्षिपन्तीत्युत्किराः ॥ "इगुपध—" इत्यादिना कप्रत्ययः ॥ तीरे ये मन्दाराः कल्पवृक्षास्तेषां कुसुमानामुत्किरा वीचयस्तरङ्गा येषां तेषु दिङ्नागानां दिग्गजानां मदगन्धो येष्विति तथोक्तेषु व्योमगङ्गाप्रवाहेष्वाकाशगङ्गास्रोतःस्वाप्लुताः स्नाताः ॥ ५ ॥

मुक्तेति ॥ मुक्तानां मौक्तिकानां यज्ञोपवीतानि । मुक्तामयानीत्यर्थः । बिभ्रतो दधानाः । हेममयानि वल्कलानि येषां ते हैमवल्कलाः । रत्नमयान्यक्षसूत्राणि येषां ते रत्नाक्षसूत्राः । प्रव्रज्यां प्रव्रजनम् ॥ "व्रजयजोर्भावे क्यप्" इति क्यप् । आश्रिताः कल्पवृक्षा इव स्थिताः ॥ अत्र चतुर्थाश्रमवाचिना प्रव्रज्याशब्देन वानप्रस्थाश्रमो लक्ष्यते "जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः" (६ । ३४) इति सपत्नीकत्वाभिधानात् "सुतविन्यस्तपत्नीकस्तया वानुगतोऽपि सन्" इति वानप्रस्थोभयथा स्मरणात् ॥ ६ ॥

अध इति ॥ अधःप्रस्थापिताश्वेन । सूर्यमण्डलोपरिवर्तित्वात् सप्तर्षिमण्डलस्येति भावः । समावर्जितकेतुना तन्मण्

(१) -कुसुमोत्कर । (२) आकाशगङ्गास्रोतःसु । (३) हेमवल्कलाः । (४) प्रश्नत् ।

प्रासंक्तबाहुलतया (५)सार्धमुद्धृतया भुवा।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ॥ ८ ॥
सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम्।
पुरातनाः पुराविद्भिर्धातार इति कीर्तिताः ॥९॥
प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम्।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः ॥१०॥

त्राघातशङ्कया नामितध्वजेन सहस्ररश्मिना सूर्येण साक्षात् स्वयमेव सप्रणामम् उर्दीक्षताः। गमनाभ्यनुज्ञादानपर्यन्तमित्यर्थः। भगवतः सूर्यस्याप्युपास्या इति भावः ॥ ७ ॥

आसक्तेति ॥ पुनः किंविधाः। प्रलयापदि कल्पान्तसङ्कट आसक्तबाहुलतया। दंष्ट्रायामिति शेषः। उद्धृतया। दंष्ट्रयेति शेषः। भुवा सार्धं धरण्या सह महावराहदंष्ट्रायां विश्रान्ताः। महाप्रलयेऽप्यविनाशिन इत्यर्थः ॥ ८ ॥

सर्गेति ॥ विश्वयोनेर्ब्रह्मणोऽनन्तरं सर्गशेषस्य प्रणयनात्। ब्रह्मसृष्टावशिष्टसृष्टेः करणाद्धेतोरित्यर्थः। पुराविद्भिः पुराणवेदिभिर्व्यासादिभिः पुरातना धातार इति कीर्तिताः॥ विश्वयोनेरिति सम्बन्धमात्रे षष्ठी तस्यानन्तरमिति भाष्ये दर्शनात्। अपादानत्वविवक्षायां तु पञ्चमी। अयमदःशब्दो यथाशब्दात्तत्तादनन्तरस्येति शाबरभाष्ये दर्शनात्। तथा "अथातो धर्मजिज्ञासा वेदाध्यायादनन्तरम्" इत्याचार्याः। कविश्च "पुराणपत्त्रापगमादनन्तरम्" इति। एवमन्यत्रापि द्रष्टव्यम् ॥ ९ ॥

प्राक्तनानामिति ॥ प्राक्तनानां जन्मान्तरभवानां विशुद्धानां निर्मलानां परिपाकं फलदानोन्मुखत्वमुपेयुषां गतानां तपसां फलान्युपभुञ्जाना अपि तपस्विनस्तपोनिष्ठाः। प्रारब्धभोगिनो निस्पृहाश्चेति भावः॥ कुलकम् ॥ १० ॥

---

(५) सार्धमुद्धृतया।

तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥११॥
तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम्॥१२
तद्दर्शनादभूच्छम्भो(६)र्भूयान्दारार्थमादरः ।
क्रियाणां खलु धर्म्याणां सत्पत्न्यो (७)मूलकारणं१३
धर्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।

तेषामिति ॥ तेषामृषीणां मध्यगता साध्वी पतिव्रता। अतएव पत्युर्वसिष्ठस्य पादयोरर्पितेक्षणा निविष्टदृष्टिररुन्धती साक्षात्प्रत्यक्षा तपःसिद्धिरिव । तेषामेवेति शेषः ॥ तेषां मध्यगतेति लिङ्गवचनादिसाम्यादियमुपमा ॥ बहु भूयिष्ठं बभासे भाति स्म ॥ ११ ॥

तामिति ॥ ईश्वरो भगवांस्तामरुन्धतीं मुनींश्चागौरवभेदेन समानप्रतिपत्त्यापश्यत् दृष्टवान् । न चायमविवेक इत्याह— हि यस्मात् स्त्री पुमांश्चेत्येषा अनास्था स्त्रीपुंसभेदो न विवक्षितः । किन्तु सतां साधूनां वृत्तं चरित्रमेव महितं पूज्यम् ॥ "गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" इति भावः ॥ १२ ॥

तदिति ॥ तद्दर्शनादरुन्धतीदर्शनाच्छम्भोर्दारार्थं दारपरिग्रहार्थमादरो भूयान् बहुतरोऽभूत् । ननु दाराः कुत्रोपयुज्यन्त इत्यत्राह—धर्म्याणां धर्मात् अनपेतानाम् ॥ "धर्मपथ्यर्थन्यायादनपेते" इति यत्प्रत्ययः ॥ क्रियाणामिज्यादीनां सत्यः पतिव्रताः पत्न्यः सत्पत्न्यः ॥ "पत्युर्नो यज्ञसंयोगे" इति ङीप् नकारश्च ॥ मूलकारणं खलु ॥ १३ ॥

धर्मेणेति ॥ धर्मेण दारसम्बिग्रहाभिलक्षणेनापि ॥ कर्त्रा।

(६) भूयः । (७) मूलसाधनम् ।

पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥१४॥
(८)अथ ते मुनयः सर्वे (९)मानयित्वा जगद्गुरुम्।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥ १५ ॥
यद्ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम् ।
यच्च तप्तं तपस्तस्य विपक्वं फलमद्य नः ॥ १६ ॥
यदध्यक्षेण जगतां वयमारोपितास्त्वया ।

एवं ईश्वरे पार्वतीं प्रति पदं कारिते सति ॥ "हृक्रोरन्यतरस्याम्" इति प्रयोजकस्याणिकर्तुः कर्मत्वम् ॥ पूर्वापराधभीतस्य कामस्य मन उच्छ्वसितम्। पुनरुज्जीवनावकाशो भवतीति सप्रत्याशमभूदित्यर्थः ॥ १४ ॥

अथेति ॥ अथानूचानाः साङ्गवेदप्रवक्तारः ॥ "अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः" इत्यमरः ॥ "उपेयिवाननाश्वानननूचानश्च" इति निपातः ॥ प्रीत्या कण्टकिताः पुलकितास्त्वचो येषां ते तथोक्ताः। ते सर्वे मुनयो जगद्गुरुं हरं मानयित्वा पूजयित्वेदं वक्ष्यमाणमूचुः ॥ १५ ॥

यदिति ॥ ब्रह्म वेदः ॥ "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः ॥ सम्यङ्नियमपूर्वकमाम्नातमधीतमिति यत्। अग्नौ विधिना हुतमिति यत्। तपश्चान्द्रायणादिकं तप्तमिति च यत्तस्याध्ययनेज्यातपोरूपस्य आश्रमत्रयसाध्यस्य कृत्स्नस्यापि कर्मण इत्यर्थः ॥ समुदायाभिप्रायकमेकवचनमन्यथा हृत्यान्वयप्रसङ्गात्। न च नपुंसकैकवद्भावोऽनपुंसकेनेति नियमात् ॥ फलं कार्यम् अद्य नोऽस्माकं विपक्वम्। सुनिष्पन्नमित्यर्थः ॥ कर्मणि क्तः ॥ "पचो वः" इति निष्ठातस्य वत्वम् ॥ १६ ॥

तदेव फलमाह—

यदिति ॥ यद्यस्मात्कारणाज्जगतामध्यक्षेणाधिपेन त्वया वयं मनोरथस्याभिलाषस्याविषयमगोचरमात्मनः स्वस्य मनो-

---

(८) प्रथमं। (९) प्रणिपत्य।

(१)मनोरथस्याविषयं मनोविषयमात्मनः ॥१७॥
यस्य चेतसि वर्तेथाः स तावत् कृतिनां वरः ।
किं पुन(२)र्ब्रह्मयोनेर्यस्तव चेतसि वर्तते ॥१८॥
सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तरं (३)ताभ्यां स्मरणानुग्रहात्तव ॥१९॥
त्वत्सम्भावितमात्मानं बहु मन्यामहे वयम् ।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ २० ॥

विषयं मनादेशमारोपिताः प्रापिताः ॥ तस्माद्विपक्कं फलमिति पूर्वेण सम्बन्धः । सकलजगदन्वेष्टव्यस्य भगवतोऽपि वयमन्वेष्या भवाम इति परमोत्कृष्टा वयमिति भावः ॥ १७ ॥

तदेवोपपादयति—

यस्येति ॥ यस्य जनस्य चेतसि वर्तेथाः । येन स्मर्यस इत्यर्थः । स तावत्स एव कृतिनां कृतकृत्यानां वरः श्रेष्ठः । ब्रह्मणो वेदस्य वेधसो वा योनेः कारणस्य । यद्वा वेदप्रमाणकस्य । तव चेतसि यो वर्तते । त्वया स्मर्यत इत्यर्थः । किं पुनः । स कृतिनां वर इति किमु वक्तव्यमित्यर्थः ॥ १८ ॥

सत्यमिति ॥ अर्कात् सूर्याच्च सोमाच्चन्द्राच्च परमुच्चैः पदं स्थानमध्यास्महे तिष्ठामः । वयमिति शेषः । सत्यम् ॥ "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् ॥ अद्य तु तव ॥ कर्तुः ॥ स्मरणमेवानुग्रहः प्रसादस्तस्माद्धेतोः । ताभ्यामर्केन्दुभ्यामुच्चैस्तरमत्युच्चं पदम् । अध्यास्महे इति सम्बन्धः ॥ उच्चैस्तरमिति द्रव्यप्रकर्षत्वाभावात्प्रत्ययः ॥ १९ ॥

त्वदिति ॥ वयं त्वया सम्भावितं सत्कृतं त्वत्सम्भावितमात्मानमात्मस्वरूपं बह्वधिकं यथा तथा मन्यामहे । तथाहि । उत्तमादरः सत्पुरुषकर्तृकः सत्कारः स्वगुणेषु विषये प्रायेण

(१) मनोरथस्याप्यपथम् । (२) विश्वयोनेः । (३) तस्मात् ।

या नः प्रीतिर्विरूपाक्ष त्वदनुध्यानसम्भवा।
सा(४)किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम् २१
साक्षाद्दृष्टोऽसि (५)न पुनर्विद्मस्त्वां वयमञ्जसा।
प्रसीद कथयात्मानं न धियां पथि वर्तसे ॥२२॥
किं येन सृजसि व्यक्तमुत येन बिभर्षि तत्।
अथ (६)विश्वस्य संहर्ता भागः कतम एष ते ॥२३॥

भूम्ना प्रत्ययं विश्वासमाधत्ते जनयति। सर्वस्यापि महाजनपरिग्रह एव पूज्यताहेतुरित्यर्थः ॥ २० ॥

येति ॥ हे विरूपाक्ष। त्वदनुध्यानसम्भवा त्वत्कर्तृकस्मरणजन्या नोऽस्माकं या प्रीतिः सा प्रीतिः तुभ्यं किमावेद्यते किमर्थं निवेद्यते। तथाहि। देहिनां प्राणिनामन्तरात्मान्तर्यामी असि। सर्वसाक्षिणा त्वयास्मत्प्रीतिरनावेदितापि ज्ञायत एव यतस्ततो न बुद्धबोधनं सम्भवतीति भावः ॥ २१ ॥

साक्षादिति। हे देव साक्षात्प्रत्यक्षेण दृष्टोऽसि। अञ्जसा पुनस्तत्त्वतस्तु त्वां वयं न विद्मः। दृश्यमानस्य रूपस्यातात्त्विकत्वादिति भावः। अतः प्रसीदानुगृहाण। आत्मानं निजस्वरूपं कथय। न चाकथितं तत् सुबोधमित्याह—धियां बुद्धीनां पथि न वर्तसे। अतस्त्वयैव त्वद्रूपं कथनीयमित्यर्थः ॥ २२ ॥

तात्त्विकं रूपं तावदास्तां न दृश्यमानमपि रूपं तत्त्वतो रूपयितुं शक्यमित्याह—

किमिति ॥ हे देव। एष दृश्यमानस्ते भागो मूर्तिः किम्। येन भागेन व्यक्तं प्रपञ्चं सृजसि सः। यत्तदोर्नित्यसम्बन्धात्सर्वत्र तच्छब्दोऽध्याहार्यः ॥ उत येन भागेन तद्व्यक्तं बिभर्षि पालयसि स वा। अथ यो भागस्तस्य विश्वस्य संहर्ता स वा ॥

(४) किमाख्यायते। (५) नो विद्मः पुनः। (६) यस्तस्य।

अथवा सुमहत्येषा प्रार्थना देव तिष्ठतु ।
चिन्तितोपस्थितांस्तावच्छाधि नः करवाम किम् ॥२४॥

अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।
उपचिन्वन् प्रभां तन्वीं प्रत्याह परमेश्वरः ॥२५॥

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।
ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ॥२६॥

सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥ २७ ॥

किमादयः सन्देहे ॥ कतमः । ब्रह्मविष्णुमहेश्वरेष्वयं कतमो भागस्तदुच्यतामित्यर्थः ॥ २३ ॥

ननु हर इत्येवं निश्चयात् कथमयं संशयस्तत्राह—

अथवेति ॥ अथवा हे देव सुमहती । गह्नतमत्वादतिदुर्लभेत्यर्थः । एषा प्रार्थना निजरूपनिरूपणप्रार्थना तिष्ठतु । किन्तु चिन्तितेन चिन्तिता वोपस्थितास्तांश्चिन्तितोपस्थितास्तावोऽस्मांस्तावच्छाध्याज्ञापय किं करवाम ॥ प्रार्थनायां लोट् ॥ अलमप्रस्तुतेन प्रस्तुते तावन्नियुङ्क्ष्वेत्यर्थः ॥ २४ ॥

अथेति ॥ अथ परमेश्वरो मौलिगतस्येन्दोस्तन्वीमल्पाम् । कलामात्रत्वादिति भावः । प्रभां कान्तिं विशदैः शुभ्रैर्दशनांशुभिरुपचिन्वन्वर्धयन् प्रत्याह । प्रत्युवाचेत्यर्थः ॥ २५ ॥

विदितमिति ॥ हे मनुयः काश्चिदपि मे प्रवृत्तयो व्यापाराः स्वार्था न भवन्ति यथा तथा वो युष्माकं विदितम् ॥ वाक्यार्थः कर्म बुद्ध्यर्थत्वाद्वर्तमाने क्तः । तद्योगात् षष्ठी ॥ प्रवृत्तिपारार्थ्ये प्रमाणमाह—अष्टाभिर्मूर्तिभिरित्थंभूत इमं प्रकारं परार्थप्रवृत्तिरूपं प्राप्तः ॥ "भू प्राप्तौ" इति धातोः कर्तरि क्तः । सूचितो ज्ञापितोऽस्मि । मत्स्वमूर्तिचेष्टया स्वपारार्थ्यमनुमेयमित्यर्थः ॥ २६ ॥

सोऽहमिति ॥ स परार्थवृत्तिरहं तृष्णातुरैः चातकैः वृष्टिं

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ २८ ॥

तामस्मदर्थे युष्माभिर्याचितव्यो (७)हिमालयः ।
विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः २९

उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।
तेन योजितसम्बन्धं वित्त मामप्यवञ्चितम् ॥३०॥

विद्युत्वान् मेघ इवारिविप्रकृतैः असुरपीडितैर्देवैः प्रसूतिं पुत्रोत्पादनं प्रति याचितः ॥ याचतेर्दुहादित्वादप्रधाने कर्मणि क्तः ॥ २७ ॥

अत इति ॥ अतः सुरप्रार्थितत्वाद्धेतोरात्मजन्मने पुत्राय । पुत्रमुत्पादयितुमित्यर्थः ॥ "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी ॥ पार्वतीं यजमानो यष्टा ॥ "पूङ्यजोः शानन्" इति शानन्प्रत्ययः ॥ हविर्भोक्तुरग्नेरुत्पत्तयेऽरणिमग्निमन्थनदारुविशेषमिव ॥ "निर्मन्थ्यदारुणि त्वरणिर्द्वयोः" इत्यमरः ॥ आहर्तुं संग्रहीतुमिच्छामि ॥ २८ ॥

तामिति ॥ अस्मदर्थेऽस्मत्प्रयोजने निमित्ते सति युष्माभिस्तां पार्वतीं हिमालयो हिमवान्याचितव्यः ॥ याचेर्दुहादित्वादप्रधाने कर्मणि तव्यप्रत्ययः ॥ आवश्यकं चैतदित्याह— सद्भिः सत्पुरुषैरनुष्ठिताः सङ्घटिताः सम्बन्धा यौनादयो विक्रियायै वैकल्योत्पादनाय न कल्पन्ते न पर्याप्नुवन्ति । न समर्था इत्यर्थः ॥ अलमर्थयोगाच्चतुर्थी ॥ २९ ॥

न चाहं लौल्यात् स्त्रियमिच्छामि किन्तु देवोपकाराय । यद्येवं निखिलदेवेषु विद्यमानेषु हिमगिरेः शिलाभूतस्य कन्यापरिणयेच्छा कथमित्युक्ते स एव मे श्लाघ्यसम्बन्धोऽलभ्यान् हिमवानित्याह—

उन्नतेनेति ॥ उन्नतेन प्रांशुना प्रसिद्धेन च स्थितिमता

(७) हिमाचलः ।

एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते ।
भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥३१॥
आर्याप्यरुन्धती तत्र व्यापारं कर्तुमर्हति ।
प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता ॥ ३२ ॥
तत्प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।
महाकोशीप्रपातेऽस्मिन् सङ्गमः पुनरेव नः ॥३३

प्रतिष्ठावता भुवो धुरं भारमुद्वहता । निर्वाहकेणेत्यर्थः । तेन हिमवता योजितः सङ्घटितः सम्बन्धो यौनसम्बन्धो यस्य तं मामप्यवस्थितमव्यामोहितं वित्त जानीत ॥ "विद ज्ञाने" इति धातोर्लोट् ॥ ३० ॥

तर्हि स किं वाच्य इत्याशङ्क्याह—

एवमिति ॥ कन्यार्थं कन्याप्रदानाय स हिमवानेवं वाच्य इति वो युष्मभ्यं न उपदिश्यते । कुतः । हि यस्मात् साधवो विद्वांसो भवद्भिः प्रणीतं स्मृतिरूपेण निबद्धमाचारमामनन्ति उपदिशन्ति । न हि स्वयमुपदेष्टारः परोपदेशमपेक्षन्त इत्यर्थः ॥ ३१ ॥

आर्येति ॥ आर्या पूज्यारुन्धत्यपि तत्र विवाहकृत्ये व्यापारं साहाय्यं कर्तुमर्हति । तथाहि । प्रायेण प्राचुर्येणैवंविधे कार्ये विवाहादिकार्ये । दुर्घट इत्यर्थः । पुरन्ध्रीणां कुटुम्बिनीनाम् ॥ "स्यात्तु कुटुम्बिनी पुरन्ध्रिः" इत्यमरः ॥ प्रगल्भता चातुर्यम् । स्त्रीप्रधानेषु कृत्येषु स्त्रीणामेव घटनापाटवमिति भावः ॥३२॥

तदिति ॥ तत्तस्मात् कारणादोषधिप्रस्थं नाम हिमवत्पुरं हिमवन्नगरं सिद्धये कार्यसिद्ध्यर्थं प्रयात गच्छत । अस्मिन् पुरोवर्तिनि महाकोशी नाम तत्रत्या काचिन्नदी तस्याः प्रपाते भृगावेव । सा नदी यत्र पतति तस्मिन्नित्यर्थः ॥ "प्रपातस्तु तटो भृगुः" इत्यमरः ॥ नोऽस्माकं पुनः सङ्गमः । अस्त्विति शेषः । भवत्समागमं प्रतिपालयन्तोऽहमिहैव निवत्स्यामीत्यर्थः ॥ ३३ ॥

तस्मिन् संयमिनामाद्ये जाते परिणयो(८)न्मुखे।
जहुः परिग्रहव्रीडां प्राजापत्या(९)स्तपस्विनः ॥३४

ततः (१)परममित्युक्त्वा प्रतस्थे मुनिमण्डलम्।
भगवानपि संप्राप्तः प्रथमोद्दिष्ट(२)मास्पदम् ॥३५॥

(३) ते चाकाशमसिश्यामम् उत्पत्य परमर्षयः।
आसेदुरोषधिप्रस्थं मनसा समरंहसः॥ ३६ ॥

अलकामतिवा(४)ह्येव वसतिं वसुसम्पदाम्।

तस्मिन्निति॥ संयमिनां योगिनामाद्ये तस्मिन्नीश्वरे परिणयोन्मुखे विवाहोत्सुके जाते सति प्रजापतेरिमे प्राजापत्याः। ब्रह्मपुत्रा इत्यर्थः। तपस्विनो मुनयः परिग्रहैः पत्नीभिर्व्रीडाम्। गार्हस्थ्यनिमित्तामित्यर्थः॥ "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः॥ जहुस्तत्यजुः॥ जहातेर्लिटि रूपम्॥ न हि समानगुणदोषेषु व्रीडागमोऽस्तीति भावः॥ ३४॥

तत इति॥ ततोऽनन्तरं मुनिमण्डलं मुनिसमूहः परममिति उक्त्वा ओमिति उक्त्वा। अनुमन्येत्यर्थः॥ अव्ययमेतत्॥ "ओमेवं परमं मतम्" इत्यमरः॥ प्रतस्थे। भगवान् ईश्वरोऽपि प्रथमोद्दिष्टं पूर्वसङ्केतितमास्पदं स्थानं महाकोशीप्रपातं संप्राप्तः॥ ३५॥

त इति॥ मनसा समरंहसो मनस्तुल्यवेगास्ते परमर्षयश्च॥ पूर्वश्लोकोक्तेश्वरसमुच्चयार्थश्चकारः॥ असिवत् श्यामं नीलमाकाशं खं प्रति उत्पत्य ओषधिप्रस्थं हिमवत्पुरमासेदुः। सद्यः प्रापुरित्यर्थः॥ ३६॥

इतः परं दशभिः श्लोकैरोषधिप्रस्थमेव वर्णयति—

अलकामिति॥ वसुसम्पदां धनसमृद्धीनां वसतिं स्थान-

---

(८) उत्सुके। (९) तपोधनाः। (१) प्रमाणम्।
(२) आश्रमम्। (३) अथ। (४) इव।

स्वर्गाभिष्यन्दवमनं (५)कृत्वेवोपनिवेशितम् ॥३७
गङ्गास्रोत:परिक्षिप्तं वप्रान्तर्ज्वलितौषधि ।
बृहन्मणिशिलासालं (६)गुप्तावपि मनोहरम् ३८
जितसिंहभया नागा यत्राश्वा बिलयोनय: ।
यक्षा: किंपुरुषा: पौरा योषितो वनदेवता: ॥३९

अलकां कुबेरनगरीमतिवाह्य। परिच्छिद्येति यावत्। उपनिवेशितमिव स्थितम्। तथा स्वर्गस्य अभिष्यन्दोऽतिरेक: अतिरिक्तजन इति यावत्। तस्य वमनं नि:सारणं कृत्वोपनिवेशितमिव स्थितम्। उभयत्रापि कौटिल्य:—"भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्" इति ॥ अलकामरावत्यातिशयितसम्द्धिकमित्यर्थ: ॥ ३७ ॥

गङ्गेति ॥ गङ्गाया: स्रोतोभि: प्रवाहै: परिक्षिप्तं परिवेष्टितम्। तैरेव सपरिखमित्यर्थ:। वप्र: चय:। प्राकारचैत्यमिति यावत् ॥ "स्याच्चयो वप्रमस्त्रियाम्" इत्यमर: ॥ तस्य अन्तर्मध्ये ज्वलिता: प्रकाशमाना ओषधयो यस्य तत्तथोक्तम्। ज्वलितौषधित्वाद्रात्रिषु सञ्चारिणां दीपनिरपेक्षमित्यर्थ:। बृहन् विपुलो मणिशिलानां माणिक्यानां साल: प्राकारो यस्य तत्तथोक्तम्॥ "प्राकारो वरण: साल:" इत्यमर: ॥ अतएव गुप्तावपि संवरणेऽपि मनोहरम्। अकृत्रिमदुर्गसंवरणमिति भाव: ॥ ३८ ॥

जितेति ॥ यत्र पुरे नागा गजा जितं सिंहेभ्यो भयं यैस्ते तथोक्ता:। सिंहाधिबला इत्यर्थ: ॥ नाथस्तु "पदं तुषारस्रुति धौतरक्तम्" ( १ । ६ ) इत्येतद्विरोधभयात् "वीतवीतभया:" इति पपाठ। तथा न भेतव्यं तत्र वनगजानां सिंहहतत्वाभिधानात्। अत्र त्वोषधिप्रस्थगजानां हिमवत्स्थित्सिंहातिरेकसम्भवेनाविरोधादिति। "वीतवीतभया:" इति पाठे वीतं विगतं वीतात्पादाङ्कुशकर्मभ्यो भयं येषां

(५) कृत्वेव विनिवेशितम्। (६) स्वर्गादपि।

शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
(७)अनुगर्जितसन्दिग्धा: करणैर्मुरजस्वना: ॥४०॥

यत्र कल्पद्रुमैरेव विलोलविटपांशुकै: ।
गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥ ४१ ॥

यत्र स्फटिकहर्म्येषु नक्तमापान(८)भूमिषु ।
ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥४२

नम्रोक्ता:। स्वभावविनीता इत्यर्थ: ॥ "पादकर्म युतं प्रोक्तं यात-मङ्कुशवारणम्। उभयं वीतमाख्यातम्" इति यादव:॥ अश्वा विलयोनयो विलसम्भवा:। अन्यत्र तु न तथेति वैचित्र्यम्। उक्तं च—"अमृताद्वाष्पतो वह्नेर्वेदेभ्योऽण्डाच्च गर्भत:। साम्नो ह्यानामुत्पत्ति: सप्तधा परिकीर्तिता" इति॥ यक्षा: प्रसिद्धा: किंपुरुषा: किंनराश्च पौरा: पुरजना:। वनदेवता एव योषित:। नतु मानुष्य इत्यर्थ: ॥ ३९ ॥

शिखरेति॥ यत्र पुरे शिखरेषु आसक्ता मेघा येषां तेषां वेश्मनां सम्बन्धिन:। अनुगर्जितानि प्रतिगर्जितानि तै: सन्दिग्धा मुरजस्वना: करणैस्तालव्यवस्थापकैस्ताडनविशेषै:। तदुक्तं राजकन्दर्पेण— "नृत्यवादित्रगीतानां प्रयोगवशभेदि-नाम्। संस्थानं ताडनं रोध: करणानि प्रचक्षते" इति॥ व्यज्यन्ते स्फुटीक्रियन्ते ॥ ४० ॥

यत्रेति॥ यत्र नगरे विलोलानि चञ्चलानि विटपेषु अंशु-कानि येषां तै: कल्पद्रुमैरेव अपौरादरेण पौरादरं विनैव निर्मिता। अयत्नसिद्धेत्यर्थ:। गृहेषु यानि यन्त्राणि आधार-दारूणि तेषु पताका: तासां श्री: सम्भवतीति शेष:। तत्र लम्बाम्बरा: कल्पतरव एव वैजयन्तीति सम्भाव्यन्त इत्यर्थ: ॥ ४१ ॥

यत्रेति॥ यत्र पुरे नक्तं रात्रौ स्फटिकहर्म्येषु आपानभूमिषु

(७) मन्द्रगर्जितसन्दिग्धा:। (८) -पङ्क्तिषु।

यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।
अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः ॥४३

यौवनान्तं वयो यस्मिन्नान्तकः कुसुमायुधात् ।
(९)रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्ययः ॥४४

भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः ॥

पानगोष्ठीप्रदेशेषु ज्योतिषां नक्षत्राणां प्रतिबिम्बानि उपह
रतां पुष्पोपहारत्वं मौक्तिकोपहारत्वं वा प्राप्नुवन्ति ॥ ४२ ॥

यत्रेति ॥ यत्र पुरे दुर्दिनेषु मेघाच्छन्नदिवसेषु नक्तमो
षधीनां तृणज्योतिषां प्रकाशेन सञ्चरन्त एभिरिति सञ्चरा
पन्थानः । "गोचरसञ्चर—" इत्यादिना घप्रत्ययान्तो निपातः
दर्शितसञ्चराः प्रकाशितमार्गा अभिसारिकाः कान्तार्थिन्यः
"कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" इत्यमरः।
तमिस्राणां तमसाम् ॥ कृद्योगात्कर्मणि षष्ठी ॥ अनभिज्ञाः
तमांसि नाभिजानन्तीत्यर्थः ॥ ४३ ॥

यौवनान्तमिति ॥ यस्मिन् पुरे वयो यौवनान्तं यौवनाव
धिकम् । सर्वेऽपि अजरा इत्यर्थः । तथा कुसुमायुधात्कामात्
अन्य इति शेषः । अन्तको मृत्युर्न । अस्तीति शेषः । विरहिण
तादृग्दुःखोत्पादकत्वादन्तकत्वोपचारः । कामं विना मृत्युर्ना
स्तीत्यर्थः । अतएव तत्कार्यभूतमरणाभाव इत्याशयेनाह—
रतीति ॥ रतिखेदसमुत्पन्ना निद्रा सुप्तिरेव संज्ञाविपर्ययश्चेत
नापगमः । न तु दीर्घनिद्रारूप इत्यर्थः । अत्रत्याः सर्वेऽजरा
मरा इति श्लोकतात्पर्यार्थः । अन्तयति अन्तं करोतीति
अन्तकः ॥ अन्तयतेस्तत्करोतीति ण्यन्तात्ण्वुल्प्रत्ययः ॥ ४४ ॥

भ्रूभेदिभिरिति । यत्र पुरे प्रिया युवानो भ्रूभेदिभिर्भ्रू
भङ्गवद्भिः सकम्पा ओष्ठा येषु तैर्ललितान्यङ्गुलितर्जनानि ये

---

(९) रतिखेदसमुत्थाना।

न्तानकतरुच्छायासुप्तविद्याधराध्वगम्।
द्य चोपवनं बाह्यं(१)गन्धवद्गन्धमादनम्॥४६॥
)अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम्।
र्गाभिसन्धिसुकृतं वञ्चनामिव मेनिरे॥४७॥
सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः।

स्त्रीणां कोपैर्मानाख्यैरप्रसादार्थिन आप्रसादं प्रसादपर्य- मर्थिनो याचकाः कृताः। न तु प्रभुकोपैरिति भावः॥४५॥

सन्तानकेति॥ किञ्चेति चार्थः। सन्तानकतरोश्छायासु ता विद्याधरा देवताविशेषास्त एव अध्वगा यस्मिंस्तत्तथोक्तं भवत् गन्धाढ्यं गन्धमादनं नाम गिरिर्यस्य पुरस्य बहिर्भवं ह्यमुपवनमारामः॥ सन्तानकतरुच्छायेत्यत्र पूर्वपदार्थबाहु- ल्यसम्भवेऽपि "शलभच्छायम्" "इक्षुच्छायम्" इतिवत्समर्थ- छायानिष्पत्तेस्तदपेक्षाभावात् "छाया बाहुल्ये" इति नपुं- कत्वं नास्तीत्यनुसन्धेयम्॥ अत्र "गन्धवद्गन्धमादनम्" इत्या- न्तुकः पाठः। प्राचीनपाठस्तु "सुगन्धिर्गन्धमादनः" इति लिङ्गान्तः। अतएव क्षीरस्वामिना "गन्धमादनमन्ये च" त्यत्र गन्धेन मादयतीति गन्धमादन इति व्याख्याय प्रयोगे पुंलिङ्गता दृश्यत इत्याशयेनोक्तं "सुगन्धिर्गन्धमादनः" इति कालिदास इति॥४६॥

अथेति॥ अथ ते दिवि भवा दिव्या मुनयो हिमवत इदं हैमवतं पुरं प्रेक्ष्य स्वर्गाभिसन्धिना स्वर्गोद्देशेन यत् सुकृतं ज्योतिष्टोमाद्यनुष्ठानं तत् स्वर्गाभिसन्धिसुकृतं वञ्चनां प्रतार- णामिव मेनिरे। हिमवन्नगरमवेक्ष्य स्वर्गस्य पुण्यफलत्वं वदता वेदेन वयं विप्रलब्धा इत्यर्थः। स्वर्गादतिरमणीयमिति भावः॥४७॥

त इति॥ शिखिताननिश्चलैः। चित्रगतज्वलननिष्प- न्दैरिति वेगप्रकर्षोक्तिः। जटाभारैः उपलक्षिताः ते मुनयः।

---

(१) सुगन्धि गन्धमादनम्। (२) ततः।

अवतेरुर्जटाभारैर्लिखितानल(३)निश्चलैः ॥४८॥
गगनादवतीर्णा सा यथावृद्धपुरःसरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥ ४९ ॥
तानर्घ्यानर्घ्यमादाय दूरात्प्रत्युद्ययौ गिरिः ।
नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥५०॥
धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥५१॥

द्वारि तिष्ठन्तीति द्वाःस्था द्वारपालकाः ॥ "प्रतीहारे द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः" इत्यमरः ॥ उन्मुखैरूर्ध्वमुखैर्द्वाःस्थैर्वीक्षिताः सन्तः । न तु विनिवारिता इत्यर्थः । गिरेर्हिमवतः सद्मनि वेगादवतेरुरवतीर्णवन्तः ॥ ४८ ॥

गगनादिति ॥ गगनादवतीर्णावरूढा यथावृद्धं वृद्धानुक्रमेण स्थिताः पुरःसरा अग्रेसरा यस्यां सा तथोक्ता ॥ अनुपसर्जनाधिकाराद्न ङीप् ॥ सा मुनिपरम्परा मुनिपङ्क्तिस्तोयान्तस्तोयाभ्यन्तरे भास्करालो प्रतिबिम्बिताकर्पङ्क्तिरिव रेजे । एतेन मुनीनां तेजस्वित्वेऽपि सुखसम्स्पर्शनं सूचयति । भास्कराणां भूयिष्ठत्वसम्भावनार्थं तोयान्तरित्युक्तम् । अतएव बहुत्वमिविद्ध ॥ ४९ ॥

तानिति ॥ गिरिर्हिमवानर्घ्यमर्घार्थं जलमादाय सारगुरुभिरन्तःसारदुर्भरैः पादन्यासैर्वसुन्धरां नमयन्नधः प्रापयन् । अर्घमर्हन्तीत्यर्घ्यान् पूज्यान् ॥ दण्डादित्वाद्यप्रत्ययः ॥ तान् मुनीन् दूरात्प्रत्युद्ययौ ॥ ५० ॥

सम्प्रति हिमवन्तमेव जङ्गमस्थावररूपद्वयसाधारणैर्विशेषणैर्विशिनष्टि—

धात्विति ॥ धातुवत्ताम्रोऽधरो यस्य स तथोक्तः । अन्यत्र धातुरेव ताम्रोऽधरो यस्य । प्रांशुरुन्नतः । उभयत्रापि समानम् ।

(३) ·निश्चलात् ।

विधिप्रयुक्त(४)सत्कारैः स्वयं मार्गस्य (५)दर्शकः।
स (६)तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः ॥५२॥
तत्र वेत्रासनासीनान् (७)कृतासनपरिग्रहः।
इत्युवाचेश्वरान् वाचं प्राञ्जलि(८)र्भूधरेश्वरः ॥५३
अपमेघोदयं वर्षमदृष्टकुसुमं फलम्।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥ ५४ ॥

देवदारुवद् बृहन्तौ भुजौ यस्य स तथोक्तः। देवदारव एव बृहन्तौ भुजौ यस्य इत्यन्यत्र। प्रकृत्या स्वभावेनैव शिलावदुरो यस्य स शिलोरस्कः। शिलेवेत्यन्यत्र॥ "उरःप्रभृतिभ्यः कप्" इति कप्॥ अतो हिमवानिति सुव्यक्तः॥ वर्तमाने क्तः॥ सत्यं स एवायं हिमवानिति तद्धर्मप्रत्यभिज्ञानादवधारित इत्यर्थः ॥५१॥

विधीति॥ स हिमवान् विधिना शास्त्रेण प्रयुक्तसत्कारैः कृतार्चनैः शुद्धकर्मभिरदुष्टचरितैः। शुद्धान्तप्रवेशार्हैरित्यर्थः। तैर्मुनिभिः स्वयं मार्गस्य दर्शयतीति दर्शको दर्शयिता सन्॥ पश्यतेर्ण्यन्तात्‌ ण्वुल्प्रत्ययः॥ शुद्धान्तमन्तःपुरमाक्रमयामास। प्रवेशयामासेत्यर्थः॥ अत्र क्रमेरगत्यर्थत्वात् "गतिबुद्धि-" इत्यादिना तैरित्यस्य न कर्मत्वम्॥५२॥

तत्रेति॥ वेत्रं लताविशेषः। तत्र शुद्धान्ते वेत्रासनासीनान् वेत्रमयविष्टरोपविष्टानीश्वरान् प्रभून्मुनीन् भूधरेश्वरो हिमवान् कृतासनपरिग्रहः। उपविष्टः सन्नित्यर्थः। प्राञ्जलिः कृताञ्जलिः सन्। इत्येवं वाचमुवाच॥५३॥

अपेति॥ अतर्कितोपपन्नमविचारितमेवोपगतम्। अत्यन्तासम्भावितमित्यर्थः। वो युष्माकं दर्शनमपमेघोदयं वर्षमनभ्रा वृष्टिस्तथादृष्टं कुसुमं यस्य तत्तथोक्तं फलं च तस्मै प्रति-

(४) -सत्कारान्। (५) देशकः। (६) तान्।
(७) नीचासनपरिग्रहः। (८) पृथिवीधरः।

मूढं बुद्धमिवात्मानं हैमीभूतमिवायसम् ।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥ ५५ ॥
अद्यप्रभृति भूतानामधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं (८)प्रचक्षते ॥५६॥
अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥५७॥

भाति । अतिदुर्लभलाभः संवृत्त इत्यर्थः ॥ अत्र मेघोदयकुसुमरूपकारणयोरभावेऽपि वर्षफलरूपकार्ययोरुदयाभिधानाद्विभावना । मुनिदर्शनस्य विशिष्टवृत्तित्वेन च रूपणाद्रूपकालङ्कारश्चेत्युभयोः संसृष्टिः ॥ ५४ ॥

मूढमिति ॥ भवदनुग्रहादात्मानं मां मूढं बुद्धिं विनाकृतं बुद्धमिव मूढो भूत्वा यो बुद्धवांस्तमिव ॥ कर्तरि क्तः ॥ आयसमयोविकारं हैमीभूतम् । आयसत्वं विहाय सौवर्णत्वं प्राप्तमिवेत्यर्थः । भूमेर्भूलोकाद्दिवं स्वर्गमारूढमिव मन्ये । ज्ञानरूपस्थानान्यद्य मे परमुत्कृष्यन्त इति भावः ॥ ५५ ॥

अद्येति ॥ अद्यप्रभृतीत आरभ्य भूतानां प्राणिनां शुद्धयेऽधिगम्योऽस्मि । शुद्ध्यर्थिनां तीर्थभूतोऽस्मीत्यर्थः । भवदागमनादिति शेषः । हि यस्मात् । यदर्हद्भिः सद्भिरध्यासितमधिष्ठितम् । जुष्टमिति यावत् । तत्तीर्थं प्रचक्षते ॥ "निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ" इत्यमरः ॥ ५६ ॥

अवैमीति ॥ हे द्विजोत्तमाः । आत्मानं मां द्वयेनैव पूतं शुद्धमवैम्यवगच्छामि । केन द्वयेन । मूर्ध्नि गङ्गाप्रपातेन मन्दाकिनीपातेन वो युष्माकं धौतयोः क्षालितयोः पादयोरम्भसा च ॥ अत्र गङ्गाजलवत्पादाम्भसः पावनत्वमित्यौपम्यं गम्यते । तच्च "प्रस्तुताप्रस्तुतयोः" इति दीपकालङ्कारः । "प्रियः प्रियतराख्यानम्" इति लक्षणात् प्रियोऽलङ्कार इति केचित् ॥ ५७ ॥

---

(८) प्रचक्ष्यते ।

जङ्गमं (१)प्रैष्यभावे वः स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये (२)द्विरूपमपि मे वपुः ॥५८॥

भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते ।
(३)अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ५९

न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥ ६० ॥

जङ्गममिति ॥ हे मुनयः । द्विरूपं जङ्गमस्थावरात्मकत्वाद् द्विप्रकारकमपि मे वपुर्विभक्तानुग्रहं विभज्य कृतप्रसादं मन्ये । कुतः । जङ्गमं वपुर्वो युष्माकं प्रैष्यभावे कैङ्कर्ये। स्थितमिति शेषः ॥ "प्रादूह्योढोढ्यैषैष्येषु वृद्धिर्वक्तव्या" इति वृद्धिः ॥ "नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः" इत्यमरः ॥ स्थावरं वपुश्चरणाङ्कितम् । अयमेव हि महाननुग्रहो दासजनस्य यत् कर्मसु नियोजनं मूर्धनि पादन्यासश्चेति तात्पर्यार्थः ॥ ५८ ॥

भवदिति ॥ व्याप्ता दिगन्ता यैस्तानि व्याप्तदिगन्तानि । महान्त्यपीत्यर्थः । मे मम अङ्गानि भवत्सम्भावनोत्थाय युष्मदनुग्रहजन्याय मूर्च्छते व्याप्नुवते परितोषाय न प्रभवन्ति न पर्याप्नुवन्ति ॥ अलमर्थयोगाच्चतुर्थी ॥ यथा महत्स्वपि मद्गात्रेषु न माति तथा मे हर्षो वर्धत इत्यर्थः ॥ ५९ ॥

नेति ॥ भास्वतां तेजस्विनां विवस्वतां च वो युष्माकं दर्शनेन केवलं दरीसंस्थं गुहागतं तमो ध्वान्तरूपमेव नापास्तम् । किन्तु मेऽन्तर्गतमन्तरात्मगतं रजसो रजोगुणात् परमनन्तरं तमोऽज्ञानरूपमप्यपास्तम् । रजस्तु पादन्यासैरेवापास्तमिति भावः ॥ प्रसिद्धैर्भास्वद्भिर्बाह्यं तमोऽपास्यत एभिस्त्वान्तरमपीति व्यतिरेको व्यज्यते ॥ ६० ॥

---

(१) प्रैष्यभावेन। (२) विरूपम्, द्वैरूप्यम्। (३)अभिव्याप्त।

कर्तव्यं वो न पश्यामि स्याच्चेत्किं (४)नोपपद्यते।
(५)मन्ये मत्पावनायैव प्रस्थानं भवता(६)मिह ॥६१॥
तथापि तावत्कस्मिंश्चिदाज्ञां मे दातुमर्हथ।
विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु ॥६२॥
एते वयममी दाराः कन्येयं कुलजीवितम्।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥६३॥

कर्तव्यमिति॥ कर्तव्यं कार्यं वो युष्माकं न पश्यामि। निस्पृहत्वादिति भावः। अथ स्याच्चेद्विद्येत यदि किं नोपपद्यते किं नाम न सम्भवति। सर्वं सुलभमेवेत्यर्थः। अथवा किमत्र प्रयोजनचिन्तयेत्याह—मत्पावनाय मच्छोधनायैव भवतामिह विषये प्रस्थानम्। इमं देशमुद्दिश्येदं प्रयाणमित्यर्थः। मन्ये तर्कयामि॥ ६१॥

तथापीति॥ तथापि भवतां निस्पृहत्वेऽपि कस्मिंश्चित् कर्मणीति शेषः। आज्ञामिदं कुर्वित्यादेशं तावदिदानीं मे मह्यं दातुमर्हथ। मदनुग्रहबुद्ध्येति भावः। हि यस्मात् किङ्करा भृत्याः। प्रभवन्तीति प्रभविष्णुषु प्रभुषु विषये॥ "भुवश्च" इतीष्णुच्प्रत्ययः॥ विशेषेण नियोगो विनियोगः प्रेषणमेव प्रसादोऽनुग्रहो येषां ते तथोक्ताः। अन्यथा स्वस्वामिभावो निष्फल इति भावः॥ ६२॥

एत इति॥ किं बहुना। एते वयममी दारा इयं कुलस्य जीवितं प्राणभूता। परमप्रेमास्पदमित्यर्थः। कन्या। अत्रैषां मध्ये येन जनेन वः कार्यं प्रयोजनं ब्रूत। तमिति शेषः। येन सोऽपि दीयत इति भावः॥ रत्नाहिरण्यादिकं तु न मे गण्यमित्याह—बाह्यवस्तुषु कनकरत्नादिष्वनास्थानादरः॥ प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते॥ अदेयं न किञ्चिदस्तीति भावः॥ ६३॥

(४) नोपदिश्यते। (५) शङ्के। (६) इदम्।

(७)इत्यूचिवांस्तमेवार्थं (८)गुहामुखविसर्पिणा।
द्विरिव प्रतिशब्देन व्याजहार (९)हिमालयः॥६४॥
अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु।
ऋषयो (१)नोदयामासुः प्रत्युवाच स भूधरम्॥६५॥
उपपन्नमिदं सर्वमतः परमपि त्वयि।
मनसः शिखराणां च सदृशी ते समुन्नतिः॥६६॥
स्थाने त्वां स्थावरात्मानं विष्णुमाहु(२)स्तथाहि ते

इतीति॥ इत्यूचिवानुक्तवान्॥ वचेः क्वसुप्रत्ययः॥ हिमालयो हिमवान् गुहानां मुखेषु विवरेषु विसर्पतीति तथोक्तेन प्रतिशब्देन तमेव पूर्वोक्तमेवार्थं द्विर्द्विवारम्॥ "द्वित्रिचतुर्भ्यः सुच्" इति सुच्प्रत्ययः॥ व्याजहार बभाषे॥ ६४॥

अथेति॥ अथानन्तरमृषय उदाहरणानि कथाप्रसङ्गास्त एव वस्तून्यर्थास्तेष्वग्रं नयतीत्यग्रणीस्तमग्रण्यं प्रगल्भम्॥ "सत्सूद्विष—" इत्यादिना क्विप्। "अग्रग्रामाभ्यां नयतेरिति वक्तव्यम्" इति णत्वम्॥ आङ्गिरसं नामार्षिं नोदयामासुः प्रतिवक्तुं प्रेरयामासुः। सोऽङ्गिरा भूधरं हिमवन्तं प्रत्युवाच॥६५॥

उपपन्नमिति॥ इदम् "एते वयममी दाराः" (६।६३) इत्याद्युक्तं सर्वम् अतः परमतोऽधिकमपि त्वयि उपपन्नं युज्यते। तथाहि। ते मनसः शिखराणां च समुन्नतिः सदृशी। शिखराणीव मनो महोन्नतमित्यर्थः। किं नाम दुष्करमुन्नतचित्तानामिति भावः। प्रस्तुताप्रस्तुतयोर्मनःशिखरयोरौपम्यस्य गम्यत्वाद्दीपकालङ्कारः॥ ६६॥

स्थान इति॥ त्वां स्थावरात्मानं स्थावररूपिणं विष्णुमाहुः। "स्थावराणां हिमालयः" इति गीतावचनात्। स्थाने युक्तम्॥

---

(७) इत्युक्तवान्। (८) दरी। (९) हिमाचलः।
(१) चोदयामासुः, प्रेरयामासुः। (२) मनीषिणः।

चराचराणां भूतानां कुक्षिराधारतां गतः ॥६७॥
गामधास्यत्कथं नागो मृणाल(३)मृदुभिः फणैः
आ रसातलमूलात्त्वमवालम्बिष्यथा न चेत् ॥६८
अच्छिन्नामलसन्तानाः समुद्रो(४)र्म्यनिवारिताः
पुनन्ति (५)लोकान् पुण्यत्वात्कीर्तयः सरितश्च ते६९
यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः।
(६)प्रभवेण द्वितीयेन तथैवोच्छ्रिरसा त्वया ॥७०

युक्तार्थेऽव्ययमेतत् ॥ "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः॥ तथाहि। ते तव कुक्षिश्चराचराणां जङ्गमस्थावररूपिणां भूतानां पृथिव्यादीनामाधारतां गतः। तवेव विष्णोः कुक्षिरेवंभूत इति भावः॥ ६७॥

गामिति॥ नागः शेषाहिर्मृणालमृदुभिर्विसकोमलैः फणैर्गां भुवं कथमधास्यद्धारयेत्। त्वमा रसातलमूलात्पातालपर्यन्तम्॥ विकल्पादसमासः॥ नावालम्बिष्यथाश्चेत्यादैर्नावलम्बेथा यदि। त्वदवलम्बनादेव भुजगराजोऽपि भुवं बिभर्तीत्यर्थः॥ अत्र क्रियातिपत्त्यभावाल्लृङ्प्रयोगश्चिन्त्यः॥ ६८॥

अच्छिन्नेति॥ अच्छिन्ना अविच्छिन्ना अमलाश्च सन्तानाः प्रबन्धाः प्रवाहाश्च यासां ताः तथोक्ताः समुद्रोर्मिभिः अनिवारिताः। पारगमनान्तःप्रवेशाच्चेति भावः। ते तव कीर्तयः सरितश्च गङ्गादयः पुण्यत्वात् पवित्रत्वाल्लोकान् पुनन्ति पावयन्ति। लोकपावनाः खलु पुण्यश्लोका इति भावः॥ केवलप्रकृतविषयस्तुल्ययोगितालङ्कारः॥ ६९॥

यथेति॥ गङ्गा भागीरथी। प्रभवत्यस्मादिति प्रभवस्तेन कारणेन परमे तिष्ठतीति परमेष्ठिनो विष्णोः॥ परमे कित्प्रत्ययः। "तत्पुरुषे कृति बहुलम्" इत्यलुक्। "—परमेर्बर्हि-

(३) सदृशैः। (४) निवारिताः। (५) लोकम्। (६)प्रभावेन।

तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः।
त्रिविक्रमोद्यतस्यासीत्स (७)तु स्वाभाविकस्तव॥७१॥
यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम्॥७२॥
काठिन्यं स्थावरे काये भवता सर्वमर्पितम्।
इदं तु ते भक्तिनम्रं (८)सतामाराधनं वपुः॥७३॥

दिव्यग्निभ्यः स्थः” इति षत्वम्॥ पादेन चरणेन यथैव श्लाघ्यते प्रशस्यते तथैव द्वितीयेन प्रभवेण उच्छिरसा त्वया श्लाघ्यते। हरिचरणवत्तीर्थस्यापि तीर्थभूतस्त्वमिति भावः॥ ७०॥

तिर्यगिति॥ तिर्यगूर्ध्वमधस्ताच्च व्यापकः। सर्वव्यापीत्यर्थः। महिमा महत्त्वं हरेर्विष्णोस्त्रिषु विक्रमेषूद्यतस्य सत आसीत्। त्रिविक्रमोद्यतस्यापि कदाचिदेव। न तु सर्वदेत्यर्थः। तव तु व्यापको महिमा स्वाभाविकः। नित्यसिद्ध इत्यर्थः॥७१॥

यज्ञेति॥ यज्ञभागभुजामिन्द्रादीनां मध्ये पदमातस्थुषा निहितवता त्वया उच्चैरुन्नतं हिरण्यस्य विकारो हिरण्मयम्॥ “दाण्डिनायनहास्तिनायन—” इत्यादिना निपातनात् साधु॥ सुमेरोः शृङ्गं शिखरम्। प्राधान्यं च ध्वन्यते। “शृङ्गं प्रधान्यसान्वोश्च” इत्यमरः॥ वितथीकृतं व्यर्थीकृतम्। तस्य यज्ञभागाभावादिति भावः। अस्य तु तत्सद्भावे प्रमाणम्—“हिमवतो हस्तौ” इति श्रुतिः॥ ७२॥

काठिन्यमिति॥ भवता सर्वं काठिन्यम्। अनम्रत्वमित्यर्थः। स्थावरे स्थिरे काये। शिलामय इत्यर्थः। अर्पितं न्यस्तम्। सतामर्हतामाराधनं पूजासाधनं त इदं वपुस्तु। जङ्गममित्यर्थः। भक्तिनम्रम्। काठिन्यलेशोऽप्यत्र नास्त्यन्यथा नम्रत्वासम्भवादित्यर्थः। तथा चासाधारण्यं ध्वन्यते॥ ७३॥

---

(७) च स्वाभाविकस्तथा। (८) अर्हदाराधनम्।

(६)तदागमनकार्यं नः शृणु कार्यं (१)तवैव तत्
श्रेयसामुपदेशात् (२)तु वयमत्रांशभागिनः ॥७४
अणिमादि(३)गुणोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्ति यः ॥७५
(४)कल्पितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः
(५)येनेदं ध्रियते विश्वं धुर्यैर्यानमिवाध्वनि ॥७

तदिति ॥ तत्तस्मान्नोऽस्माकमागमनस्य कार्यं प्रयोज शृणु। तत् कार्यं च तवैव। न त्वस्माकमित्यवधारणार्थं एव कारः। वयं तु श्रेयसामुपदेशादत्र कार्येऽशभागिनः। त्वमे वात्र फलभाग्वयमुपदेष्टार इति भावः ॥ ७४ ॥

कार्यमेवाह—

अणिमेति ॥ यः शम्भुरणिमादिगुणोपेतमणिमादिभि ष्टभिर्गुणैर्वाच्यभूतैरुपेतम्। अष्टैश्वर्यवाचकमित्यर्थः। अतएव स्पृष्टं पुरुषान्तरं येन तं तथोक्तं पुरुषान्तरस्यानभिधायकम् तस्यैवैवंगुणत्वादित्यर्थः। उच्चैः परममीश्वर इति शब्दम् निरुपपदेश्वरशब्दमित्यर्थः। सार्धचन्द्रमर्धचन्द्रयुक्तम्। अर्ध चन्द्रं चेत्यर्थः। बिभर्ति ॥ ७५ ॥

कल्पितेति ॥ येन शम्भुना कल्पितं धृतिसंग्रहादिस्वस्वगुण सम्पादितमन्योन्यसामर्थ्यं परस्परसहकारकरूपं यैस्तथोक्तैः स्वस्वरूपसामर्थ्यमन्योन्याधेयमेवेति भावः। पृथिव्यादिभिर त्मभिः। अष्टाभिर्मूर्तिभिरित्यर्थः। इदं व्यक्तं विश्वं धुरं व त्मोति धुर्यैरश्वैः ॥ "धुरो यड्ढकौ" इति यत्प्रत्ययः ॥ अध्वा यानं रथ इव ध्रियते ॥ ७६ ॥

---

(६) यथा, यत्। (१) तथा। (२) च वयमप्यंशभाजिनः
(३) गुणोत्थानम्। (४) कल्पिता। (५) यस्येदं धार्यते।

योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम्।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥७७॥
स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्मणाम्।
वृणुते वरदः शम्भुरस्मत्(६)संक्रामितैः पदैः॥७८
तमर्थमिव भारत्या सुतया योक्तुमर्हसि।
अशोच्या हि पितुः कन्या(७)सद्भर्तृप्रतिपादिता७९
यावन्त्येतानि भूतानि स्थावराणि चराणि च।
मातरं कल्पयन्त्वेनामीशो हि(८)जगतः पिता८०

योगिन इति॥ योगिनः अध्यात्मवेदिनः क्षेत्राभ्यन्तरवर्तिनं शरीरान्तश्चरं सर्वभूतान्तर्यामिनम्। परमात्मस्वरूपिणमित्यर्थः। "क्षेत्रं पत्नीशरीरयोः" इत्यमरः॥ यं शम्भुं विचिन्वन्ति मृगयन्ते। मनीषिणो विद्वांसो यस्य शम्भोः पदं स्थानमविद्यमानमावृत्तेः पुनः संसारापत्तेर्भयं यत्र तत्तथाभूतमाहुः ॥७७॥

स इति॥ विश्वस्य जगतः कर्मणां साक्षी द्रष्टा॥ "साक्षाद्द्रष्टरि संज्ञायाम्" इतीनिप्रत्ययः॥ वरानिष्टान्ददातीति वरदः। "आतोऽनुपसर्गे कः" इति कप्रत्ययः॥ स पूर्वोक्तः शम्भुरस्मत्संक्रामितैः पदैः अस्मासु निवेशितैर्वाक्यैः तं दुहितरं साक्षाद्वृणुते। अस्मन्मुखेन स्वयमेव याचत इत्यर्थः॥ ७८॥

तमिति॥ तं शम्भुं भारत्या वाचार्थमभिधेयमिव सुतया दुहित्रा योक्तुं सङ्घटयितुमर्हसि॥ अत्र वागर्थयोरुपमानत्वसामर्थ्याच्छिवयोर्नित्ययोगो विवक्षित इत्युक्तम् "वागर्थाविव संपृक्तौ" (रघुवंशे १। १) इत्यत्रापि॥ तथाहि। सद्भर्त्रे प्रतिपादिता दत्ता कन्या पितुरशोच्या॥ ७९॥

गुणान्तरमप्याह—

यावन्तीति॥ स्थावराणि चराणि च यावन्ति एतानि

(६) संक्रमितैः। (७) सद्भर्त्रे। (८) जगताम्।

प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥८१॥
उमा वधूर्भवान्दाता याचितार इमे वयम् ।
वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥८२
अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।
सुतासम्बन्धविधिना भव विश्वगुरोर्गुरुः ॥८३॥
एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥८४॥

भूतानि । सन्तीति शेषः । सर्वाणि भूतानीत्यर्थः । एनां ते दुहितरं मातरं कल्पयन्तु । हि यस्मादीशो जगतः पिता । पितृदारेषु मातृभावो न्याय्य इति भावः ॥ ८० ॥

प्रणम्येति ॥ विबुधा देवाः शितिकण्ठाय शिवाय प्रणम्य तदनन्तरं नीलकण्ठप्रणामानन्तरमस्याश्चरणौ चूडामणिमरीचिभी रञ्जयन्तु । ईश्वरपरिग्रहादखिलदेवतावन्द्या भवति त्यर्थः ॥ ८१ ॥

उमेति ॥ उमा वधूः । भवान्दाता । इमे वयं याचितार प्रार्थकाः । शम्भुर्वरो वोढा । एष विधिरेषा सामग्री त्वत्कुलस्योद्भूतय उच्छ्रायायालं पर्याप्तं हि ॥ "नमःस्वस्तिस्वाहा स्वधा—" इत्यादिना चतुर्थी ॥ ८२ ॥

अस्तोतुरिति ॥ स्वयमन्यस्तोता न भवतीत्यस्तोतुः किन्तु स्तूयमानस्य सर्वस्तुत्यस्य वन्द्यस्य जगद्वन्द्यस्य स्वयमन्यं न वन्द इत्यनन्यवन्दिनो विश्वगुरोर्देवस्य सुतासम्बन्धविधिना यौन सम्बन्धाचरणेन गुरुर्भव । यो नान्यं स्तौति न वन्दते तस्यापि त्वं स्तुत्यो वन्द्यश्चेत्यहो तव भाग्यवत्तेत्यर्थः ॥ ८३ ॥

एवमिति ॥ देवर्षावङ्गिरस्येवं वादिनि सति पार्वती पितुः पार्श्वेऽधोमुखी सती । लज्जयेति शेषः । लीलाकमलपत्राणि

शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत।
प्रायेण गृहिणीनेत्राः (६)कन्यार्थेषु कुटुम्बिनः॥८५॥
मेने मेनापि (१)तत्सर्वं पत्युः (२)कार्यमभीप्सितम्
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः॥८६॥
इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः।
आददे वचसामन्ते मङ्गलालङ्कृतां सुताम्॥८७॥
एहि (३)विश्वात्मने वत्से (४)भिक्षासि परिकल्पिता

गणयामास सख्यौ। लज्जावशात्कमलदलगणनाव्याजेन हर्षं जुगोपेत्यर्थः॥ अनेनावहित्थाख्यः सञ्चारी भाव उक्तः। तदुक्तम्—"अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनम्" इति॥८४॥

शैल इति॥ शैलो हिमवान् सम्पूर्णकामोऽपि। दातुं कृतनिश्चयोऽपीत्यर्थः। मेनामुखमुदैक्षत। उचितोत्तरजिज्ञासयेति भावः। तथाहि। प्रायेण कुटुम्बिनो गृहस्थाः कन्यार्थेषु कन्याप्रयोजनेषु गृहिण्येव नेत्रं कार्यज्ञानकारणं येषां ते तथोक्ताः। कलत्रप्रधानवृत्तय इत्यर्थः॥८५॥

मेन इति॥ मेनापि पत्युः हिमालयस्य तत्सर्वमभीप्सितं कार्यं मेनेऽङ्गीचकार। तथाहि। पतिरेव व्रतं यासां ता भर्तुः इष्टेऽभीप्सिते न विद्यते व्यभिचारो यासां ता अव्यभिचारिण्यो भवन्ति। भर्तृचित्ताभिप्रायज्ञा भवन्तीति भावः॥८६॥

इदमिति॥ स हिमवान् वचसामन्ते मुनिवाक्यावसाने। अत्र मुनिवाक्य इदमुत्तरश्लोके वक्ष्यमाणं दानमेव न्याय्यं न्यायादनपेतमुत्तरमिति बुद्ध्या चित्तेन विमृश्य विचिन्त्य मङ्गलं यथा तथालङ्कृतां मङ्गलालङ्कृतां सुतामाददे हस्ताभ्यां जग्राह ॥८७॥

---

(६) कन्यार्थे हि। (१) तत्सर्वः। (२) कार्यसमीहितम्।
(३) सर्वार्पिणे। (४) भिक्षा त्वम्।

अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥८८॥
एतावदुक्त्वा तनयामृषीनाह महीधरः ।
इयं नमति वः सर्वांस्त्रिलोचनवधूरिति ॥८९॥
ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।
आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥९०
तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।
अङ्कमारोपयामास लज्जमानामरुन्धती ॥९१॥

एहीति ॥ हे वत्से पुत्रि । एहि आगच्छ । त्वं विश्वात्मने शिवाय भिक्षा परिकल्पितासि निश्चितासि । "रत्नादिस्तम्बपर्यन्तं सर्वं भिक्षा तपस्विनः" इति वचनादिति भावः । अर्थिनो याचितारो मुनयः । मया गृहमेधिनो गृहस्थस्य फलं प्राप्तम् । इह परत्र च तारकत्वात् पात्रे कन्यादानं गार्हस्थ्यस्य फलमित्यर्थः ॥ ८८ ॥

एतावदिति ॥ महीधरो हिमवांस्तनयामेतावत् पूर्वोक्तमुक्त्वार्षीनाह—किमिति । इयं त्रिलोचनवधूस्त्र्यम्बकपत्नी वः सर्वान्नमतीति । त्रिलोचनवधूरिति सिद्धवदभिधानेनाविप्रतिपन्नं दानमिति सूचयति ॥ ८९ ॥

ईप्सितार्थेति ॥ ते मुनयः । ईप्सितार्थक्रिययेष्टार्थकरणेनोदारं महत् ॥ "उदारो दातृमहतोः" इत्यमरः ॥ गिरेर्हिमवतो वचो वचनमभिनन्द्य साध्विति संस्तुत्याम्बिकामम्बाम् । पच्यत इति पाकः फलम् । पुरःपाकाभिः पुरस्कृतफलाभिराशीर्भिराशीर्वादैरेधयामासुः संवर्धयामासुः ॥ ९० ॥

तामिति ॥ प्रणामादरेण नमस्कारासक्त्या स्रस्ते जाम्बूनदे सुवर्णविकारौ वतंसके कनककुण्डले यस्यास्तां लज्जमानां तामम्बिकामरुन्धत्यङ्कमारोपयामास ॥ "वहः पोऽन्यतरस्याम्" इति पकारः ॥ ९१ ॥

तन्मातरं चाश्रुमुखीं (५)दुहितृस्नेहविक्लवाम्।
वरस्यानन्यपूर्वस्य विशोकामकरोद्गुणैः ॥८२॥
वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना।
ते त्र्यहादूर्ध्वमाख्याय (६)चेरुश्चीरपरिग्रहाः ॥८३॥
ते हिमालयमामन्त्र्य पुनः (७)प्राप्य च शूलिनम्।
सिद्धं (८)चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ८४

तदिति ॥ दुहितृस्नेहेन पुत्रिकाप्रेम्णा विक्लवां वियोक्ष्यत इति भीताम्। अतएव अश्रूणि मुखे यस्यास्तामश्रुमुखीं तस्या अम्बिकाया मातरं तन्मातरं मेनां च। अन्या पूर्वं यस्यास्ति सोऽन्यपूर्वः ॥ "सर्वनाम्नो वृत्तिविषये पुंवद्भावः" इति पूर्वपदस्य पुंवद्भावः ॥ स न भवतीत्यनन्यपूर्वस्तस्यानन्यपूर्वस्य। पापत्वाद्दुःखमकुर्वत इत्यर्थः। वरस्य वोढुः गुणैः मृत्युञ्जयत्वादिभिर्विशोकां निर्दुःखामकरोत् ॥ ८२ ॥

वैवाहिकीमिति ॥ चीरपरिग्रहा वल्कलमात्रवसनास्ते तपस्विनस्तत्क्षणं तस्मिन्नेव क्षणे हरबन्धुना हिमवता वैवाहिकीं विवाहयोग्यां तिथिं पृष्टाः केत्यनुयुक्ताः सन्तः। त्रयाणामह्नां समाहारस्त्र्यहः ॥ "तद्धितार्थोत्तरपदसमाहारे च" इति समासः। "राजाहःसखिभ्यष्टच्" इति टच्प्रत्ययः। द्विगुत्वादेकवचनम्। "रात्राह्नाहाः पुंसि" इति पुंलिङ्गता ॥ तस्मात् त्र्यहादूर्ध्वमुपर्याख्याय चतुर्थेऽहनि विवाह इत्युक्त्वा चेरुश्चलिताः ॥ ८३ ॥

त इति ॥ ते मुनयो हिमालयमामन्त्र्य साधु यामीत्यापृच्छ्य पुनः शूलिनं हरं सङ्केतस्थानस्थं प्राप्य सिद्धं निष्पन्नमर्थं प्रयोजनमस्मै निवेद्य च ज्ञापयित्वा च तद्विसृष्टाः तेन शूलिना विसृष्टाः खमाकाशं प्रत्युद्ययुरुत्पेतुः ॥ अत्र संचिन्ता-

(५) दुहितुः। (६) चेलुः। (७) प्रेक्ष्य। (८) तस्मै।

पशुपतिरपि तान्यहानि कृच्छ्रा-
दगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्यु-
र्विभुमपि तं यदमी स्पृशन्ति भावाः ॥९५॥

र्थाभिधानात् संक्षेपो नाम गुण उक्तः। तदुक्तम्—"संक्षिप्तार्थाभिधानं यत् संक्षेपः परिकीर्तितः" इति ॥ ९४ ॥

भगवान् पशुपतिस्त्र्यहमात्रविलम्बमपि सोढुं न शशाक तदौत्सुक्यादित्याह—

पशुपतिरिति ॥ उत्कं मनो यस्य स उत्कः॥ "उत्क उन्मनाः" इति निपातः॥ अद्रिसुतासमागमोत्कः पार्वतीपरिणयोत्सुकः पशुपतिरपि तानि। त्रीणीति शेषः। अहानि कृच्छ्रादगमयदयापयत्। कविराह—अमी भावा औत्सुक्यादयः सञ्चारिणोऽवशमिन्द्रियपरतन्त्रमपरं पृथग्जनं कं न विप्रकुर्युः न विकारं नयेयुः। यद्यस्माद्विभुं समर्थम्। जितेन्द्रियमिति यावत्। तं स्मरहरमपि स्पृशन्ति। विकुर्वन्तीत्यर्थः॥ अत्र विभुविकारसमर्थनादर्थादितरजनविकारः कैमुतिकन्यायादापततीत्यर्थापत्तिरलङ्कारः। तथा च सूत्रम्—"दण्डापूपिकयार्थान्तरपतनमर्थापत्तिः" इति ॥ अर्थान्तरन्यास इति केचित् तदुपेक्षणीयम्। युक्तिस्तु विस्तरभयान्नोच्यते॥ पुष्पिताग्रावृत्तम्—"अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ ९५ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्य उमाप्रदानो नाम षष्ठः सर्गः।

---

## सप्तमः सर्गः ।

अथौषधीनामधिपस्य वृद्धौ
तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान् सुताया
विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥

वैवाहिकैः कौतुकसंविधानै-
र्गृहे गृहे व्यग्रपुरंध्रिवर्गम् ।
आसीत् पुरं सानुमतोऽनुरागा-
दन्तःपुरं चैककुलोपमेयम् ॥ २ ॥

अथेति ॥ अथ त्र्यहानन्तरं हिमवान् ओषधीनामधिपस्य चन्द्रस्य वृद्धौ। शुक्लपक्ष इत्यर्थः। शुभकर्मस्वापूर्यमाणपक्षस्य प्राशस्त्यात्। तिथौ च जामित्रं लग्नात्सप्तमं स्थानं तस्य गुणः शुद्धिः सा च ग्रहराहित्यं तेनान्वितायां सत्याम्। यद्यपि जामित्रशुद्धिर्लग्नधर्मस्तथापि तद्द्वारा तिथेरपि तथा व्यपदेशे न दोषः। समेतबन्धुर्युक्तबन्धुः सन्। सुताया दुहितुर्विवाहदीक्षा विवाहसंस्कारः सैव विधिः कर्म तमन्वतिष्ठत् कृतवान् ॥ १ ॥

वैवाहिकैरिति ॥ अनुरागात्प्रीतिवशात्। गृहे गृहे प्रतिगृहम् ॥ वीप्सायां द्विर्भावः ॥ विवाहः प्रयोजनमेषामिति वैवाहिकानि तैः ॥ "तदस्य प्रयोजनम्" इति ठक् ॥ कौतुकसंविधानैर्मङ्गलार्थसम्पादनैर्व्यग्रो व्याकुलः पुरंध्रिवर्गः कुटुम्बिनीसङ्घो यस्मिंस्तत्तथोक्तं सानुमतोऽद्रेः पुरं बाह्यमोषधिप्रस्थमन्तःपुरमवरोधनं चैककुलेन एकगृहेण वोपमेयमासीत् ॥ "सजातीयगणे गोत्रे गृहेऽपि कथितं कुलम्" इति विश्वः ॥ सर्वेषामपि स्वगृह एवेदं शोभनं वर्तत इत्यभिमानोऽभूदित्यर्थः। एतेन हिमाद्रेः प्रजाराग उक्तः। अत्र सर्वं सम्पन्नमेवेत्यर्थः ॥ २ ॥

(१)सन्तानकाकीर्णमहापथं त-
च्चीनांशुकैः कल्पितकेतुमालम् ।
(२)भासोज्ज्वलत्काञ्चनतोरणानां
(३)स्थानान्तरं स्वर्ग इवावभासे ॥ ३ ॥
एकैव सत्यामपि पुत्रपङ्क्तौ
(४)चिरस्य दृष्टेव मृतोत्थितेव ।
(५)आसन्नपाणिग्रहणेति पित्रो-
रुमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥
अङ्काद्ययावङ्कमुदीरिताशीः
सा मण्डनान्मण्डनमन्वभुङ्क्त ।

सन्तानकेति॥ सन्तानकैः मन्दारकुसुमैराकीर्णा आस्तृता महापथा राजकीयपथा यस्मिंस्तत्तथोक्तम्। चीनांशुकैः पट्टवस्त्रैः कल्पिता विरचिताः केतुमाला ध्वजपङ्क्तयो यस्य तत्तथोक्तम्। काञ्चनतोरणानां भासा प्रभयोज्ज्वलद्दीप्यमानं तत् पुरं स्थानान्तरं मेरोरन्यत्र स्थितः स्वर्ग इवावभासे॥ उत्प्रेक्षालङ्कारः॥ ३॥

एकैवेति॥ पुत्राश्च दुहितरश्च पुत्राः॥ "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" इत्येकशेषः॥ "पुत्रौ पुत्रश्च दुहिता च" इत्यमरः॥ तेषां पङ्क्तौ सत्यां सत्यामप्युमैकैव चिरस्य दृष्टेव चिरात्प्रलब्धेव मृतोत्थितेव मृत्वा पुनरुत्पन्नेवासन्नपाणिग्रहणासन्नविवाहेति। भर्तृगृहं गमिष्यतीति हेतोरित्यर्थः। पित्रोर्मातापित्रोः॥ "पिता मात्रा" इत्येकशेषः॥ विशेषेणोच्छ्वसितं प्राणभूता बभूव। पुमपत्यादपि अधिकप्रेमास्पदमभूदित्यर्थः॥ ४॥

---

(१) सन्तानकाकीर्णचतुःपथम्। (२) भासा ज्वलत्। (३) स्थानान्तरस्वर्गः। (४) चिरेण। (५) उपोढपाणि।

सम्बन्धिभिन्नोऽपि गिरेः कुलस्य
स्नेहस्तदेकायतनं जगाम ॥ ५ ॥
मैत्रे मुहूर्ते शशलाञ्छनेन
योगं गतासूत्तरफल्गुनीषु ।
तस्याः शरीरे प्रतिकर्म चक्रु-
र्बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥ ६ ॥
सा गौरसिद्धार्थनिवेशवद्भि-
र्दूर्वाप्रवालैः (१)प्रतिभिन्नशोभम् ।

अङ्कादिति ॥ सा पार्वत्युदीरिताशीः प्रयुक्ताशीर्वादा सत्य-ङ्कादङ्कमुत्सङ्गं ययौ । मण्डनान्मण्डनान्तरमन्यन्मण्डनमन्व-भुङ्क्त । तदा सर्वे बन्धवः प्रत्येकमेव तामङ्कमारोप्य मण्डनं प्रायच्छन्नित्यर्थः ॥ तत्र स्नेहानिबन्धनमित्याह—सम्बन्धिभिन्नः स्वपुत्रादिभिर्भिन्नो विभक्तोऽपि गिरेः कुलस्य वंशस्य स्नेहस्तदे-कायतनं सैवैकमायतनं स्थानं तज्जगाम । तदिति छेदेऽप्ययमे-वार्थः ॥ विधेयप्राधान्यान्नपुंसकत्वमिति । सर्वे बन्धवः स्वाप-त्येभ्योऽपि तस्यामधिकं स्निह्यन्तीति तात्पर्यार्थः ॥ ५ ॥

मैत्र इति ॥ अथ मैत्रे मित्रदैवत्ये मुहूर्ते । उदयमुहूर्तात् तृतीयमुहूर्त इत्यर्थः । "आर्द्रः सार्द्रस्तथा मैत्रः शुभो वासव एव च" इति बृहस्पतिस्मरणात् । उत्तरफल्गुनीषु फल्गुनी-नक्षत्रे ॥ "फल्गुनीप्रोष्ठपदानां च नक्षत्रे" इत्येकस्मिन्नपि बहुवचनम् ॥ शशलाञ्छनेन चन्द्रेण योगं गतासु सतीषु तस्याः पार्वत्याः शरीरे बन्धुस्त्रियः प्रतिकर्म प्रसाधनम् ॥ "प्रतिकर्म प्रसाधनम्" इत्यमरः ॥ चक्रुः । कीदृश्यः । याः पतिपुत्रवत्यः । जीवद्भर्तृका जीवदपत्याश्चेत्यर्थः ॥ ६ ॥

प्रतिकर्मप्रकारमेव प्रपञ्चयति—

---

(१) प्रतिभिन्नरागम् ।

निर्नाभि कौशेयमुपात्तबाण-
मभ्यङ्गनेपथ्यमलञ्चकार ॥ ७ ॥
बभौ च सम्पर्कमुपेत्य बाला
नवेन दीक्षाविधिसायकेन ।
करेण भानोर्बहुलावसाने
सन्धुक्ष्यमाणेव (१)शशाङ्करेखा ॥ ८ ॥
तां लोध्रकल्केन हृताङ्गतैला-
माश्यानकालेयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यं
(२)नार्यश्चतुष्काभिमुखं व्यनैषुः ॥ ९ ॥

सेति ॥ सा गौरी गौरसिद्धार्थनिवेशवद्भिः श्वेतसर्षपप्रक्षेपवद्भिर्दूर्वाप्रवालैर्दूर्वाङ्कुरैः प्रतिभिन्नशोभं विशेषितशोभं निर्नाभ्यतिक्रान्तनाभि कौशेयं वस्त्रविशेषो यस्मिन् तत्तथोक्तम् ॥ "कौशेयं कृमिकोशोत्थम्" इत्यमरः ॥ उपात्तबाणं गृहीतशरम् ॥ "शरः क्षत्रियया ग्राह्यः" इति मनुस्मरणात् ॥ अभ्यङ्गनेपथ्यमभ्यङ्गवेशमलञ्चकार । अलङ्कारमप्यलञ्चकारेत्यर्थः ॥७॥

बभाविति ॥ किञ्चेति चार्थः ॥ बाला नवेन दीक्षाविधौ विवाहकृत्ये यः सायकस्तेन सम्पर्कमुपेत्य बहुलावसाने कृष्णपक्षात्यये । शुक्लपक्षादावित्यर्थः । भानोः करेण किरणेन सन्धुक्ष्यमाणोपचीयमाना । "सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति" इत्यादिवचनात् । शशाङ्करेखेव बभौ ॥ ८ ॥

तामिति ॥ लोध्रकल्केन लोध्रचूर्णेन हृतम् अङ्गतैलं यस्यास्ताम् । कृतोद्वर्तनामित्यर्थः । आश्यानमीषच्छुष्कं तेन कालेयेन गन्धद्रव्येण कृताङ्गरागाम् । कृतसौगन्ध्यामित्यर्थः ॥ "अथ

(१) शशाङ्कलेखा । (२) नार्यश्चतुष्काभिमुखीमनैषुः ।

(१)विन्यस्तवैदूर्यशिलातलेऽस्मिन्
(२)आबद्धमुक्ताफलभक्तिचित्रे।
आवर्जिताष्टापदकुम्भतोयैः
सतूर्यमेनां स्नपयाम्बभूवुः॥ १०॥

सा मङ्गलस्नानविशुद्धगात्री
(३)गृहीतपत्युद्गमनीयवस्त्रा।
(४)निर्वृत्तपर्जन्यजलाभिषेका
प्रफुल्लकाशा वसुधेव रेजे॥ ११॥

जायकम्। कालेयकं च कालानुसार्यं च" इत्यमरः॥ अभिषेकयोग्यं वासो वस्त्रं वसानां स्नानशाटीमाच्छादयन्तीं तां पार्वतीं नार्यः चतुष्कं चतुःस्तम्भगृहं तदभिमुखं व्यनैषुः। स्नानगृहं निन्युरित्यर्थः॥ ८॥

विन्यस्तेति॥ विन्यस्तं वैदूर्यशिलातलं मरकतशिलाप्रदेशो यस्मिंस्तस्मिन्नाबद्धानां मुक्ताफलानां भक्तिभी रचनाभिश्चित्रेऽस्मिंश्चतुष्क एनां पार्वतीमावर्जितानामानमितानामष्टापदकुम्भानां कनककलशानां तोयैः सतूर्यं मङ्गलवाद्ययुक्तं यथा तथा स्नपयाम्बभूवुः। अष्टसु लोहेषु पदं प्रतिष्ठा यस्येत्यष्टापदम्॥ "अष्टनः संज्ञायाम्" इति दीर्घः॥ "अष्टापदं स्यात् कनकम्" इति विश्वः॥ १०॥

सेति॥ मङ्गलार्थस्नानेन विशुद्धगात्री निर्मलाङ्गी पत्युर्वरस्योद्गमनीयवस्त्रं धौतवस्त्रम्॥ "धौतमुद्गमनीयं स्यात्" इति हलायुधः। "तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्" इत्यमरः॥ युगग्रहणं तु प्रायिकाभिप्रायम्। अतएवात्र क्षीरस्वामी—"युगं प्रायशो यन्नव्यं तदेव" इति व्याख्याय "गृही-

(१) विन्यस्तवैदूर्यशिले च तस्मिन्। (२) आविद्ध।
(३) गृहीतशुद्धोद्गमनीय। (४) निवृत्त।

तस्मात्प्रदेशाच्च वितानवन्तं
युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः (१)परिगृह्य निन्ये
क्लृप्तासनं कौतुकवेदिमध्यम् ॥ १२ ॥

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बन्त पुरोनिषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्यः ॥ १३ ॥

तपत्युद्गमनीयवस्त्रा" इत्येतदेवोदाहृतवात् ॥ गृहीतं पतिप्रत्युद्गमनीयवस्त्रं यया सा । धौतवस्त्रमाच्छादितवतीत्यर्थः। सा पार्वती निर्वृत्तो निष्पन्नः पर्जन्यस्य जलेनाभिषेको यस्याः सा तथोक्ता। प्रफुल्लतीति प्रफुल्लं काशं काशपुष्पं यस्याः सा तथोक्ता वसुधेव रेजे शुशुभे ॥ ११ ॥

तस्मादिति ॥ किञ्चेति चार्थः। तस्मात् प्रदेशात् स्नानप्रदेशाद्वितानवन्तमुल्लोचयुतम् ॥ "अस्त्री वितानमुल्लोचः" इत्यमरः ॥ मणिस्तम्भचतुष्टयेन युक्तं क्लृप्तं सज्जमानमासनं यस्मिंस्तं कौतुकवेदिमध्यं पतिव्रताभिः परिगृह्य दोर्भ्यामालिङ्ग्य निन्ये नीता। प्रसाधनार्थमित्यर्थः ॥ १२ ॥

तामिति ॥ नार्यः प्रसाधिकास्तां तन्वीं पार्वतीं तत्र वेदिमध्ये प्राङ्मुखीं निवेश्य उपवेश्य पुरोनिषण्णा अग्रे स्थिताः। प्रसाध्यतेऽनेनेति प्रसाधने अलङ्कारसाधनवर्गे सन्निहितेऽपि भूतार्था सत्यरूपा। स्वाभाविकीति यावत्। या शोभा रामणीयकं तया ह्रियमाणान्याकृष्यमाणानि नेत्राणि यासां तास्तथोक्ताः क्षणं व्यलम्बन्त। स्वभावसुन्दर्याः किमस्याः प्रसाधनेनेति तूष्णीं तस्थुरित्यर्थः ॥ १३ ॥

---

(१) प्रतिगृह्य ।

(१)धूपोष्मणा त्याजितमार्द्रभावं
केशान्तमन्तःकुसुमं तदीयम् ।
पर्याक्षिपत् काचिदुदारबन्धं
दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥

(२)विन्यस्तशुक्लागुरु (३)चक्रुरङ्गं
गोरोचनापत्त्र(४)विभक्तमस्याः ।
सा चक्रवाकाङ्कितसैकताया-
स्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥ १५ ॥

(५)लग्नद्विरेफं परिभूय पद्मं
समेघलेखं शशिनश्च बिम्बम् ।

धूपेति ॥ काचित् प्रसाधिका धूपोष्मणा करणेनार्द्रभाव-मार्द्रत्वं त्याजितम् ॥ पचादिषु पाठाद्धिकर्मकत्वम् । त्यजते-र्ण्यन्तादप्रधाने कर्मणि क्तः ॥ अन्तःकुसुममन्तर्निक्षिप्तकुसुमं तस्या इमं तदीयं केशान्तं केशपाशं दूर्वावता मध्ये मध्ये ग्रथि-तदूर्वेण पाण्डुमधूकदाम्ना हरितमधुद्रुमकुसुममाल्येन ॥ "मधूके तु गुडपुष्पमधुद्रुमौ" इत्यमरः ॥ उदारबन्धं रम्यबन्धं यथा तथा पर्याक्षिपत् बबन्ध ॥ १४ ॥

विन्यस्तेति ॥ अस्या गौर्या अङ्गं गात्रं विन्यस्तं विरचितं शुक्लागुरु यस्मिन् तद्गोरोचनायाः पत्त्रैः पत्त्ररचनाभिर्विभक्तं विशेषितं च चक्रुः । सा तथाभूता गौरी चक्रवाकैरङ्कितं सैकतं यस्यास्तस्यास्त्रिस्रोतसो गङ्गायाः कान्तिं शोभामतीत्यातिक्रम्य तस्थौ ॥ अत्र गोरोचनाचक्रवाकयोः पीतत्वेन साम्यं त्रिस्रो-तसो धावल्यं तु प्रसिद्धत्वान्न स्वपदेनोपात्तम् ॥ १५ ॥

लग्नेति ॥ प्रसिद्धैर्भूषितैः ॥ "प्रसिद्धौ ख्यातभूषितौ" इत्य-

---

(१) धूपेन सम्मार्जितम् ।  (२) आसक्तं ।
(३) चक्रुरस्याः ।  (४) विभक्तमङ्गम् ।  (५) लीन ।

तदाननश्रीरलकैः प्रसिद्धै-

श्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६ ॥

कर्णार्पितो लोध्रकषायरूक्षे

(१)गोरोचनाक्षेपनितान्तगौरे ।

तस्याः कपोले परभागलाभाद्

बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥

रेखाविभक्तः (२)सुविभक्तगात्र्याः

किञ्चिन्मधूच्छिष्ट(३)विमृष्टरागः ।

मरः ॥ अलकैरुपलक्षिता तस्या गौर्या आननश्रीर्लग्नद्विरेफ पद्मं समेघलेखं मेघरेखायुक्तं शशिनो बिम्बं च परिभूय तिर स्कृत्य सादृश्यमुपमा तस्य कथोक्तिस्तस्याः प्रसङ्गं प्रसक्ति सादृश्यं वाक्यात्रप्रसक्तमपि चिच्छेदाभिनत् । प्रसक्तयोः पद्म चन्द्रयोः परिभूतत्वादन्यत्र चाप्रसङ्गादित्यर्थः ॥ अत्र पूर्वार्धवा क्यार्थस्य सादृश्यकथाच्छेदं प्रति हेतुत्वेनोपन्यासात् काव्य लिङ्गमलङ्कारः । लक्षणं तूक्तम् ॥ १६ ॥

कर्णेति ॥ तस्या गौर्याः कर्णे अर्पितो निक्षिप्तो यवप्ररो यवाङ्कुरो लोध्रस्य वृक्षविशेषस्य कषायेण विलेपनेन रू विशदे । उद्वर्तिते इत्यर्थः ॥ "कषायो रसभेदे स्यादङ्गरा विलेपने" इति विश्वः ॥ गोरोचनायाः क्षेपेण विन्यासेन निता न्तगौरेऽत्यन्तारुणे ॥ "गौरः श्वेतेऽरुणे पीते" इति विश्वः कपोले गण्डस्थले परभागलाभाद्वर्णोत्कर्षप्राप्तेश्चक्षूंषि । द्रष्टृ णामिति शेषः । बबन्ध जहार । आचकर्षेत्यर्थः । गोरोचना रुणे गण्डस्थले पाण्डुरो यवाङ्कुरो विजातीयवर्णसंनिधाना वर्णोत्कर्षः संश्चक्षुराकर्षकोऽभूदिति भावः ॥ १७ ॥

रेखेति ॥ सुविभक्तगात्र्याः सुसंश्लिष्टावयवायाः पार्वत

---

(१) गोरोचनाभेदः । (२) च विभक्त । (३) विसृष्ट ।

कापप्यभिख्यां स्फुरितैरपुष्य-
दासन्नलावण्यफलोऽधरोष्ठः ॥ १८ ॥

पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशी-
र्माल्येन तां निर्वचनं जघान ॥ १९ ॥

खया मध्यगतया विभक्तः सुश्लिष्टः किञ्चिदीषन्मधूच्छिष्टेन सिक्थकेन विमृष्टो विशेषेण निर्मलीकृतो रागो यस्य स थोक्तः ॥ "मधूच्छिष्टं तु सिक्थकम्" इति "निर्णिक्तं शोधितं ष्टम्" इति चामरः ॥ अन्यत्रोक्तम्—"अलौहित्यापगमाया- रेषु सिक्थकलेपः क्रियते" ॥ आसन्नं सन्निहितं लावण्यफलं ौन्दर्यप्रयोजनं मुखचुम्बनादिरूपं यस्य स तथोक्तोऽधरोष्ठः फुरितैर्भाविसुखशंसिभिः स्पन्दैः कामप्यनिर्वाच्यामभिख्यां ोभामपुष्यत् पुपोष ॥ "अभिख्या नामशोभयोः" इत्यमरः १८ ॥

पत्युरिति ॥ सख्या ॥ कर्त्र्या ॥ चरणौ रञ्जयित्वा लाक्षा- साक्तौ कृत्वा ॥ कृताशीरिति करोतिना समानकर्तृकत्वम् ॥ नेन चरणेन ॥ रञ्जने द्वयोरपि नियमाच्चरणावित्युक्त्वाध्यौ- चित्यात्ताडनविधावेकतरपरामर्श इत्याहुः ॥ पत्युरीश्वरस्य रश्चन्द्रकलाम् । सुरतविशेष इति शेषः । स्पृश ताडयेति रिहासपूर्वं कृताशीः प्रयुक्ताशीर्वादा सा पार्वती तां खीं माल्येन मालया ॥ "माल्यं मालास्रजौ" इत्यमरः ॥ नर्वचनं यथा तथा । तूष्णीमित्यर्थः । जघान ताडयामास ॥ नर्वचनमित्यनेन विहृताख्यः शृङ्गारानुभाव उक्तः । तदुक्तम्— 'प्राप्तकालं तु यद् ब्रूयात् कुर्याद्वा विहृतं हि तत्" इति १९ ॥

तस्याः सुजातोत्पलपत्त्रकान्ते
प्रसाधिकाभिर्नयने (१)निरीक्ष्य ।
न चक्षुषोः कान्तिविशेषबुद्ध्या
कालाञ्जनं मङ्गलमित्युपात्तम् ॥ २० ॥

सा सम्भवद्भिः कुसुमैर्लतेव
ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद्विहङ्गैरिव लीयमानै-
रामुच्यमानाभरणा चकासे ॥ २१ ॥

तस्या इति ॥ प्रसाधिकाभिः अलङ्कर्त्रीभिः सुजाते सम्यगुत्पन्ने उत्पलपत्त्रे इव कान्ते रम्ये तस्या नयने निरीक्ष्य कालाञ्जनमञ्जनविशेषश्चक्षुषोः कान्तिविशेषबुद्ध्या । शोभातिशयो भविष्यतीति बुद्धेरित्यर्थः । नोपात्तं न गृहीतं किन्तु मङ्गलं शुभमिति हेतोरुपात्तम् । निसर्गसुभगस्य किमाहार्यकाडम्बरेणेति भावः ॥ २० ॥

सेति ॥ आमुच्यमानाभरणा निबध्यमानाभरणा सा गौरी सम्भवद्भिरुत्पद्यमानैः कुसुमैः लतेव । अनेन पद्मरागेन्द्रनीलादीन्याभरणानि सूचितानि लताकुसुमानां नानावर्णत्वात् । उद्यद्भिरुदयं गच्छद्भिर्ज्योतिर्भिरुडुभिः त्रियामा रात्रिरिव । अनेन मौक्तिकानि कथितानि । लीयमानैराश्रयद्भिः । निषीदद्भिरित्यर्थः । विहङ्गैश्चक्रवाकैः सरिदिव । अनेन सुवर्णाभरणानि सूचितानि । विहङ्गाश्च तत्सूचनाय चक्रवाका अभिमताः । चकासे रेजे । अत्र लताकुसुमादीनां सहजसम्बन्धिनामुपमानत्वेनोपादानादाहार्यकमपि तस्याः सहजमिवाशोभतेति भावः ॥ २१ ॥

---

(१) समीक्ष्य ।

आत्मानमालोक्य च शोभमान-
मादर्शबिम्बे स्तिमितायताक्षी ।
हरोपयाने त्वरिता बभूव
स्त्रीणां प्रियालोकफलो हि वेषः ॥ २२ ॥
(१)अथाङ्गुलिभ्यां हरितालमार्द्रं
(२)माङ्गल्यमादाय मनःशिलां च ।
कर्णावसक्तामलदन्तपत्रं
माता तदीयं मुखमुन्नमय्य ॥ २३ ॥
उमास्तनोद्भेदमनु प्रवृद्धो
मनोरथो यः प्रथमं बभूव ।

आत्मानमिति ॥ किञ्चेति चार्थः । गौरी शोभमानमात्मानं निजशरीरमादर्शबिम्बे दर्पणमण्डले ॥ "दर्पणे मुकुरादर्शौ" इत्यमरः ॥ स्तिमितायताक्ष्यादरान्निश्चलायतलोचना सत्यालोक्य हरोपयाने हरप्राप्तौ त्वरिता व्यग्रा बभूव। स्त्रीणां वेषो नेपथ्यं प्रियस्य भर्तुरालोको दर्शनं फलं प्रयोजनं यस्य स तथोक्तो हि । अन्यथारण्यचन्द्रिका स्यादिति भावः। अनेन कालाक्षमत्वलक्षणमौत्सुक्यमुक्तमित्यनुसन्धेयम् ॥ २२ ॥

अथेति ॥ अथ प्रसाधनानन्तरं माता मेनका माङ्गल्यं मङ्गलार्थमार्द्रं द्रवं हरितालं वर्णद्रव्यविशेषं मनःशिलां धातुविशेषं चाङ्गुलिभ्यां तर्जनीमध्यमाभ्यामादाय कर्णयोरवसक्ते लग्ने अमले दन्तपत्रे यस्य तत्तथोक्तं तस्याः पार्वत्या इदं तदीयं मुखमुन्नमय्य। "विवाहदीक्षातिलकं चकार" ( ७। २४ ) इत्युत्तरश्लोकेनान्वयः ॥ २३ ॥

उमेति ॥ उमायाः स्तनोद्भेदमनु । स्तनोदयमारभ्येत्यर्थः।

---

(१) अथाङ्गुलीभ्याम् ।        (२) मङ्गल्यम् ।

तमेव मेना दुहितुः कथञ्चि-
द्विवाहदीक्षातिलकं चकार ॥ २४ ॥

बबन्ध चास्राकुलदृष्टिरस्याः
स्थानान्तरे कल्पितसन्निवेशम् ।
धात्र्यङ्गुलीभिः प्रतिसार्यमाण-
मूर्णामयं कौतुकहस्तसूत्रम् ॥ २५ ॥

क्षीरोदवेलेव सफेनपुञ्जा
पर्याप्तचन्द्रेव शरत्त्रियामा ।

प्रवृद्धो वृद्धिं गतः । प्रागेवोत्पन्न इति भावः । यो मनोरथो वाञ्छा ॥ "वाञ्छा लिप्सा मनोरथः" इत्यमरः ॥ प्रथमं मनोरथान्तरात्प्राक् । अयमेव प्रथमो मनोरथ इत्यर्थः । बभूव । मेना दुहितुस्तमेव मनोरथभूतमेव ॥ तद्विषये तत्तोपचारः ॥ विवाहदीक्षायां विवाहकृत्ये तिलकं कथञ्चित् कृच्छ्रेण चकार । आनन्दबाष्पान्धतयेति शेषः । विवाहानन्तरभावित्वादन्येषामयमेव प्रथमो मनोरथ इति भावः ॥ युग्मकम् ॥ २४ ॥

बबन्धेति ॥ अस्याः पार्वत्या अस्रैरानन्दबाष्पैराकुलदृष्टिरतएव स्थानान्तरे कल्पितः सन्निवेशो निक्षेपो यस्य तत् । स्वस्थानादन्यत्र स्थापितमित्यर्थः । अतएव धात्र्या उपमातुरङ्गुलीभिः प्रतिसार्यमाणं स्वस्थानं प्राप्यमाणम् ऊर्णामयं मेषादिलोमनिर्मितम् ॥ "ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः ॥ कौतुकहस्तसूत्रं मङ्गलहस्तसूत्रम् ॥ "कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले" इति शाश्वतः ॥ बबन्ध च । मेनेति शेषः ॥ पूर्वोक्ततिलकक्रियासमुच्चयार्थश्चकारः ॥ २५ ॥

क्षीरोदेति ॥ नवं नूतनं क्षौमं दुकूलं निवस्ते आच्छादयतीति नवक्षौमनिवासिनी ॥ वस्तेराच्छादनार्थाण्णिनिः ॥ तथा नवं दर्पणमादधाना बिभ्रती सा गौरी सफेनपुञ्जा

नवं नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमादधाना ॥ २६ ॥

तामर्चिताभ्यः कुलदेवताभ्यः
कुलप्रतिष्ठां प्रणमय्य माता ।
अकारयत् कारयितव्यदक्षा
क्रमेण पादग्रहणं सतीनाम् ॥ २७ ॥

अखण्डितं प्रेम लभस्व पत्यु-
रित्युच्यते (३)ताभिरुमा स्म नम्रा ।

मण्डितपङ्क्तिः । क्षीरमुदकं यस्य स क्षीरोदः क्षीरसमुद्रः ॥ "उदकस्योदः संज्ञायाम्" इत्युदादेशः । तस्य वेला तीरभूमिरिव ॥ "वेला काले च जलधेस्तीरनीरविकारयोः" इति विश्वः ॥ पर्याप्तचन्द्रा पूर्णचन्द्रा शरत्त्रियामा शरद्रात्रिरिव भूयो भूयिष्ठं बभौ चकासे ॥ २६ ॥

तामिति ॥ कारयितव्येषु दक्षा कारयित्री । कर्मोपदेशकुशलेत्यर्थः । माता मेना । प्रतितिष्ठत्यस्यामिति प्रतिष्ठा ॥ "आतश्चोपसर्गे" इति कः । स्त्रियां टाप् ॥ कुलस्य प्रतिष्ठां कुलालम्बनभूताम् । स्थितिकारिणीमित्यर्थः । तां गौरीम् । अर्चिताभ्यः पूजिताभ्यः कुलदेवताभ्यो गृहदेवताभ्यः प्रणमय्य प्रणामं कारयित्वा ॥ "ल्यपि लघुपूर्वात्" इति णेरयादेशः ॥ सतीनां पतिव्रतानां पादग्रहणं पादाभिवन्दनं क्रमेणाकारयत्कारयामास ॥ "हृक्रोरन्यतरस्याम्" इत्यणिकर्तुः कर्मत्वम् । अन्यत्र च नमिरकर्मकत्वात् "गतिबुद्धि—" इत्यादिना ॥ २७ ॥

अखण्डितमिति ॥ नम्रा प्रणतोमा ताभिः सतीभिः पत्युः शिवस्याखण्डितमक्षतं प्रेम लभस्व प्राप्नुहीत्युच्यते स्म अभिहिता ॥ "लट् स्मे" इति भूतार्थे लट् ॥ तस्य हरस्य । अर्धं

(३) ताभिरसौ ।

तया तु (४)तस्यार्धशरीरभाजा
पश्चात्कृताः (५)स्निग्धजनाशिषोऽपि ॥२८॥

इच्छाविभूत्योरनुरूपमद्रि-
स्तस्याः कृती कृत्यमशेषयित्वा ।
सभ्यः सभायां सुहृदास्थितायां
तस्थौ वृषाङ्का(६)गमनप्रतीक्षः ॥ २९ ॥

तावद्व(७)रस्यापि कुबेरशैले
तत्पूर्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभि-
र्न्यस्तं पुरस्तात् (८)पुरशासनस्य ॥ ३० ॥

शरीरस्य अर्धशरीरम् ॥ "अर्धं नपुंसकम्" इति समासः ॥ तद्भ जतीति अर्धशरीरभाजा तया गौर्या तु स्निग्धजनाशिषो बन्धु जनाशीर्वादा अपि पश्चात्कृता अधरीकृताः । ततोऽप्यधिक फललाभादिति भावः ॥ २८ ॥

इच्छेति ॥ कृती कुशलः । सभायां साधुः सभ्यः ॥ "सभाय यः" इति यप्रत्ययः ॥ अद्रिर्हिमवानिच्छाविभूत्योरुत्साहैश्वर्य योरनुरूपं सदृशं यथा तथा तस्याः पार्वत्याः कृत्यं कर्तव्यमशे षयित्वाशेषं निःशेषं कृत्वा । समाप्येत्यर्थः ॥ अशेषशब्दात्तत्क रोतीति ण्यन्तात् क्त्वाप्रत्ययः ॥ सुहृदास्थितायां बन्धुजनाक्रा न्तायां सभायां संसदि वृषाङ्कस्य हरस्यागमनं प्रतीक्षत इति तथोक्तः सन् ॥ "कर्मण्यण्" इत्यण् ॥ तस्थौ स्थितः ॥ २९ ॥

तावदिति ॥ तावत् । यावद्गौरीप्रसाधनं क्रियते तत्काल एवेत्यर्थः । कुबेरशैले कैलासे । तदेव पूर्वं तत्पूर्वं तच्च त

(४) तस्यार्धशरीरलाभात् । (५) बन्धुजन
(६) आगमनं प्रतीक्ष्य । (७) वरस्य । (८) हर ।

तद्गौरवान्मङ्गलमण्डनश्रीः
सा पस्पृशे केवलमीश्वरेण ।
(६)स एव वेषः परिणेतुरिष्टं
भावान्तरं तस्य विभोः प्रपेदे ॥ ३१ ॥

बभूव भस्मैव (१)सिताङ्गरागः
कपालमेवामलशेखरश्रीः ।
(२)उपान्तभागेषु च रोचनाङ्को
गजाजिनस्यैव दुकूलभावः ॥ ३२ ॥

पाणिग्रहणं तस्यानुरूपं प्रसाधनमलङ्कारसमग्री । आदृताभिः सादराभिः ॥ कर्तरि क्तः ॥ मातृभिर्ब्राह्मीप्रभृतिभिः सप्तमातृभिः । पुरं शास्तीति पुरशासनस्तस्य पुरशासनस्य ॥ कर्तरि ल्युट् ॥ भवस्यापि पुरस्तादग्रे न्यस्तं निक्षिप्तम् ॥ ३० ॥

तदिति ॥ ईश्वरेण शिवेन सा मङ्गलमण्डनश्रीः शुभप्रसाधनसम्पत्तद्गौरवात्तासु मातृष्वादरात्केवलं पस्पृशे । स्पृष्टैव न तु दध्र इत्यवधारणार्थः केवलशब्दः ॥ "केवलं चावधारणे" इति शाश्वतः ॥ किन्तु तस्य विभोः देवस्य स एव वेषः स्वाभाविको भस्मकपालादिवेष एव परिणेतुर्लोक उद्वोढुरिष्टमपेक्षितं भावान्तरं रूपान्तरं प्रपेदे । अङ्गरागादिरूपतां प्रापेत्यर्थः ॥ ३१ ॥

भावान्तरापत्तिमेवाह—

बभूवेति ॥ भस्मैव सिताङ्गरागः शुभ्रगन्धानुलेपनं बभूव । कपालमेवामलं शेखरं शिरोभूषणं तस्य श्रीः शोभा बभूव । गजाजिनस्यैवोपान्तभागेष्वञ्चलप्रदेशेषु रोचनैवाङ्को हंसादिचिह्नं यस्य स तथोक्तो दुकूलभावः पट्टांशुकत्वं च बभूव । भस्मादिकमेवाङ्गरागादिभावं प्राप्तमित्यर्थः ॥ ३२ ॥

---

(६) स्वः । (१) कृताङ्गरागः । (२) उपान्तभावेषु ।

(३)शङ्खान्तरद्योति विलोचनं यत्
(४)अन्तर्निविष्टामलपिङ्गतारम् ।
सान्निध्यपक्षे हरितालमय्या-
स्तदेव जातं तिलकक्रियायाः ॥ ३३ ॥

यथाप्रदेशं भुजगेश्वराणां
करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे
तथैव तस्थुः फणरत्नशोभाः ॥ ३४ ॥

दिवापि निष्ठ्यूतमरीचिभासा
बाल्यादनाविष्कृतलाञ्छनेन ।

शङ्खेति ॥ शङ्खान्तरे ललाटास्थिमध्ये द्योतत इति तथोक्तम् ॥ "शङ्खो निधौ ललाटास्थ्नि" इत्यमरः ॥ अन्तर्निविष्टा मध्यगता अमला पिङ्गा तारा कनीनिका यस्य तत्तथोक्तम् ॥ "तारकाक्ष्णः कनीनिका" इत्यमरः ॥ यद्विलोचनं तद्विलोचनमेव हरितालमय्या वर्णद्रव्यविशेषविकारस्य तिलकक्रियायास्तिलकरचनायाः सन्निधिरेव सान्निध्यं तदेव पक्षः साध्यम् । "पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु" इति यादवः ॥ तस्मिन् सान्निध्यपक्षे जातम् । प्रविष्टमित्यर्थः । अनेन ललाटलोचनमेव तस्य हरितालतिलकमभूदित्युक्तम् ॥ ३३ ॥

यथेति ॥ यथाप्रदेशं प्रदेशान् प्रकोष्ठादीननतिक्रम्याभरणान्तरत्वं कङ्कणाद्याभरणविशेषत्वं करिष्यतां सम्पादयिष्यतां भुजगेश्वराणां शरीरमात्रं शरीरमेव विकृतिं रूपान्तरं प्रपेदे । फणरत्नशोभास्तथैव तस्थुः । तासां तथैवोपादेयत्वादिति भावः ॥ ३४ ॥

दिवापीति ॥ दिवा दिनेऽपि निष्ठ्यूता उद्गीर्णा मरीचि-

---

(३) नेत्रान्तरद्योति । (४) अन्तर्निविष्टानल ।

चन्द्रेण नित्यं प्रतिभिन्नमौले-
श्चूडामणेः किं ग्रहणं हरस्य ॥ ३५ ॥

(५)इत्यद्भुतैकप्रभवः प्रभावात्
(६)प्रसिद्धनेपथ्यविधेर्विधाता।
आत्मानमासन्नगणोपनीते
खड्गे निषक्तप्रतिमं ददर्श ॥ ३६ ॥

स गोपतिं नन्दिभुजावलम्बी
शार्दूलचर्मान्तरितोरुपृष्ठम्।
तद्भक्तिसंक्षिप्तबृहत्प्रमाण-
मारुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥

भासः किरणकान्तयो यस्य तेन बाल्यात् अल्पतनुत्वादनाविष्कृतलाञ्छनेन। अदृश्यमानकलङ्केनेत्यर्थः। चन्द्रेण नित्यं सर्वदा प्रतिभिन्नमौलेः सङ्गतमुकुटस्य हरस्य चूडामणेः ग्रहणं स्वीकारः किं किमर्थम्। चन्द्रचूडामणेर्देवस्य किमन्यैश्चूडामणिभिरिति भावः ॥ ३५ ॥

इतीति ॥ इतीत्थं प्रभावात्सामर्थ्यात्प्रसिद्धस्य नेपथ्यविधेर्वेषसंविधानस्य विधाता निर्माता। अतएवाद्भुतानामाश्चर्याणामेकप्रभवो मुख्यनिधिः स देव आसन्नगणेन पार्श्वस्थवर्गेण। प्रथमगणेनेत्यर्थः। उपनीत आनीते खड्गे निषक्तप्रतिमं संक्रान्तप्रतिबिम्बमात्मानं ददर्श। वीरपुरुषाणामेष आचारः ॥३६॥

स इति ॥ स देवो नन्दिभुजावलम्बी नन्दिकेश्वरभुजावलम्बनः सन्। शार्दूलचर्मणा व्याघ्रचर्मणान्तरितमाच्छादितमुरु विशालं पृष्ठं यस्य तं तथोक्तम् ॥ "शार्दूलद्वीपिनौ व्याघ्रे" इत्यमरः ॥ तस्मिन् देवे भक्त्या संक्षिप्तं सङ्कोचितं बृहत्प्रमाणं यस्य तं गोपतिं वृषभं कैलासमिवारुह्य प्रतस्थे चचाल ॥ ३७ ॥

---

(५) अत्यद्भुत। (४) प्रसिद्धनेपथ्यविधिः।

तं मातरो देवमनुव्रजन्त्यः
(७)स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः
(८)पद्माकरं चक्रुरिवा(९)न्तरीक्षम् ॥३८॥

तासां च पश्चात् कनकप्रभाणां
काली कपालाभरणा चकासे ।
बलाकिनी नीलपयोद(१)राजी
दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९ ॥

ततो गणैः शूलभृतः पुरोगै-
रुदीरितो मङ्गलतूर्यघोषः ।

तमिति ॥ तं देवम् अनुव्रजन्त्यः अनुगच्छन्त्यः स्ववाहनानां क्षोभेण प्रकम्पेण चलावतंसाश्चलकुण्डला मातरः सप्तमातृकाः प्रभामण्डलान्येव रेणवः परागास्तैर्गौरैररुणैः ॥ "गौरोऽरुणे सिते पीते" इति यादवः ॥ मुखैरन्तरीक्षमाकाशं पद्माकरमिव चक्रुः ॥ ३८ ॥

तासामिति ॥ कनकप्रभाणां सुवर्णवर्णानां तासां मातृणां पश्चात् कपालाभरणा । सितकपालालङ्कारेत्यर्थः । काली महाकाली देवी च । कृष्णवर्णत्वसूचनाय कालीसंज्ञयाभिधानम् । बलाकिनी बलाकावती ॥ व्रीह्यादित्वादिनिः ॥ दूरं यथा तथा पुरोऽग्रे क्षिप्ताः प्रसारिताः शतह्रदा विद्युतो यस्याः सा तथोक्ता नीलपयोदराजी कालमेघपङ्क्तिरिव चकासे ॥ ३९ ॥

तत इति । ततः अनन्तरं शूलभृतः शिवस्य पुरो गच्छन्तीति पुरोगैः अग्रेसरैः ॥ "अन्यत्रापि दृश्यत इति वक्तव्यम्"

(७) स्ववाहनाक्षोभ । (८) पद्माकरीचक्रुः ।
(९) अन्तरिक्षम् । (१) राजिः ।

विमानशृङ्गाण्यवगाहमानः
शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥

उपाददे तस्य सहस्ररश्मि-
स्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलि-
र्बभौ (१)पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१ ॥

मूर्ते च गङ्गायमुने तदानीं
सचामरे देवमसेविषाताम् ।

इति मसेर्डप्रत्ययः ॥ गणैः प्रमथैः उदीरितः उत्पादितः मङ्गल-तूर्यघोषो मङ्गलवाद्यध्वनिः विमानशृङ्गाण्यवगाहमानः सन् । सुरेभ्यो विमानस्थेभ्यः सेवावसरं शशंस । सुराः प्रस्थानतूर्यध्व-निमाकर्ण्यायमेव नः सेवावसर इत्याजग्मुरित्यर्थः ॥ ४० ॥

सुराणां सेवाप्रकारमेवाह—

उपाददे इति ॥ तस्य हरस्य सहस्ररश्मिः सूर्यस्त्वष्ट्रा विश्व-कर्मणा निर्मितं नवमातपत्रमुपाददे । धृतवानित्यर्थः । उत्-प्रेक्षते—तद्दुकूलात् तस्यातपत्रस्य प्रान्तलम्बिनो दुकूलादवि-दूरमौलिः । तद्दुकूलस्यासन्नमौलिरित्यर्थः । स हर उत्तमाङ्गे शिरसि ॥ "उत्तमाङ्गं शिरः शीर्षम्" इत्यमरः ॥ पतन्ती गङ्गा यस्य स पतद्गङ्ग इव बभौ ॥ तद्दुकूलादित्यत्र "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" इति दूरार्थयोगे विकल्पेन पञ्चमी ॥ नाथे-नोक्तम् "अन्यारात्—" इत्यत्राराच्छब्दस्यार्थग्रहणार्थत्वात्पञ्च-मीति तदनाकरम् । किञ्चास्य शास्त्रोक्तविकल्पापवादत्वात् "दूरं ग्रामस्य" इत्यादिषष्ठीप्रयोगो दूरापास्तः स्यादित्युपेक्ष-णीयमेव ॥ ४१ ॥

मूर्ते इति ॥ गङ्गा च यमुना च गङ्गायमुने मूर्ते विग्रह-धारिण्यौ सचामरे चामरसहिते सत्यौ । अतएव समुद्रगा नदी

(१) वहन् गाङ्गमिव प्रवाहम् ।

समुद्रगारूपविपर्ययेऽपि
(२)सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥
तमभ्यगच्छत्प्रथमो विधाता
श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।
जयेति वाचा महिमानमस्य
संवर्धयन्तौ (३)हविषेव वह्निम् ॥ ४३ ॥
एकैव मूर्तिर्बिभिदे (४)त्रिधा सा
सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचि-
द्वेधास्तयोस्तावपि धातु(५)राद्यौ ॥ ४४ ॥

तस्या रूपं स्वरूपं तस्य विपर्ययेऽप्यभावेऽपि । सह हंसपातेन हंससञ्चारेण वर्तेते इति सहंसपाते इव ॥ "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । "वोपसर्जनस्य" इति सभावः ॥ लक्ष्यमाणे दृश्यमाने सत्यौ तदानीं विवाहसमये देवमसेविषातामभजताम् ॥ सेवतेर्लुङ् ॥ गङ्गायमुने चामरग्राहिण्यौ देवमुपतस्थतुरित्यर्थः ॥ ४२ ॥

तमिति ॥ प्रथम आद्यो विधाता चतुर्मुखः तथा श्रीवत्सलक्ष्मा श्रीवत्साङ्कः पुरुषो विष्णुश्च साक्षात्तं देवमभ्यगच्छतामुखमाययौ । किं कुर्वन्तौ ॥ जयेति वाचा जयशब्देनास्येश्वरस्य महिमानं महत्त्वं हविषा वह्निमिव संवर्धयन्तौ वृद्धिं गमयन्तौ ॥ ४३ ॥

न चानुचितमेतदुक्तमित्याह—

एकैवेति ॥ सैकैव मूर्तिस्त्रिधा ब्रह्मविष्णुशिवात्मकत्वे बिभिदे । औपाधिकोऽयं भेदो न वास्तविक इत्यर्थः । अत

(२) सहहंसपाते । (३) हविषेव । (४) त्रिधासौ । (५) द्वयौ

तं लोकपालाः पुरुहूतमुख्याः
श्रीलक्षणोत्सर्गविनीतवेषाः ।
दृष्टिप्रदाने कृतनन्दिसंज्ञा-
स्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४५ ॥

कम्पेन मूर्ध्नः शतपत्रयोनिं
वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान्
सम्भावयामास यथाप्रधानम् ॥ ४६ ॥

एवैषां त्रयाणां प्रथमावरयोर्भावः प्रथमावरत्वं ज्येष्ठकनिष्ठभावः सामान्यं साधारणम् । इच्छया सर्वे ज्येष्ठा भवन्ति कनिष्ठाश्चेत्यर्थः । एतदेव विवृणोति—कदाचित् हरो विष्णोराद्यः । कदाचित् हरिस्तस्याद्यः । कदाचिद्वेधास्तयोर्हरिहरयोराद्यः । कदाचित्तौ हरिहरावपि धातुः स्रष्टुराद्यौ । एवमेतेषां पौर्वापर्यमनियतमिति दर्शितम् ॥ ४४ ॥

तमिति ॥ पुरुहूतमुख्या इन्द्रादयो लोकपालाः श्रीलक्षणानाम् ऐश्वर्यचिह्नानां छत्रचामरवाहनानामुत्सर्गेण त्यागेन विनीतवेषा अनुनीतवेषाः सन्तः । तथा दृष्टिप्रदाने दर्शननिमित्ते । दर्शनप्रदानार्थमित्यर्थः । कृता नन्दिनः प्रतीहारस्य संज्ञा सङ्केतो यैस्तादृशाः । मम दर्शनं दापयेति नन्दिनं प्रति कृतहस्तादिसूचना इत्यर्थः ॥ "संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः ॥ तद्दर्शितास्तेन नन्दिना दर्शिता अयमिन्द्रः प्रणमत्ययं चन्द्र इत्याद्युक्तिपूर्वकं निवेदिताः प्राञ्जलयः कृताञ्जलयः सन्तः । तं भवं प्रणेमुः प्रणताः ॥ ४५ ॥

कम्पेनेति ॥ स देवः शतपत्रयोनिं चतुर्मुखं मूर्ध्नः कम्पेन तथा हरिं वाचा सम्भावणेन वृत्रं हतवन्तं वृत्रहणमिन्द्रम् ॥ "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति क्विप् ॥ स्मितेन मन्दहासेनाशेषान्

तस्मै जयाशीः ससृजे पुरस्तात्
सप्तर्षिभिस्तान् स्मितपूर्वमाह ।
विवाहयज्ञे विततेऽत्र यूय-
मध्वर्यवः पूर्ववृता मयेति ॥ ४७ ॥

विश्वावसुप्राग्रहरैः प्रवीणैः
सङ्गीयमानत्रिपुरावदानः ।
अध्वानमध्वान्तविकारलङ्घ्य-
स्ततार ताराधिपखण्डधारी ॥ ४८ ॥

पुरानालोकमात्रेण दृष्टिमात्रेणेत्यर्थं यथाप्रधानं यथार्हं सम्भा-वयामास ॥ ४६ ॥

तस्मा इति ॥ तस्मै शिवाय सप्तर्षिभिः ॥ "दिक्संख्ये संज्ञायाम्" इति समासः ॥ पुरस्तादग्रे जयेत्याशीः ससृजे प्रयुक्ता । तान् सप्तर्षीन् स्मितपूर्वमाह—किमिति । वितते विस्तृते अत्र प्रवर्तिते विवाह एव यज्ञः तस्मिन् यूयं मया पूर्वमेव वृताः प्रार्थिता अध्वर्यवो ऋत्विज इति ॥ विशेषवाचिना सामान्यमुक्तम् ॥४७॥

विश्वावस्विति ॥ विश्वावसुर्नाम कश्चिद्गन्धर्वो देवगायकस्तत्प्राग्रहरैस्तत्प्रमुखैः प्रवीणैः प्रकृष्टवीणैर्निपुणैर्वा ॥ "प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इत्यमरः । त्रयाणां पुराणां समाहारस्त्रिपुरम् ॥ "तद्धितार्थोत्तरपद—" इत्यादिना समाहारसमासः ॥ "पात्रादिभ्यः प्रतिषेधो वक्तव्यः" इति स्त्रीलिङ्गान्ततानिषेधः ॥ त्रिपुरस्य सम्बन्ध्यवदानं पूर्ववृत्तं कर्म विजयरूपं त्रिपुरावदानं तत्सङ्गीयमानं स्तूयमानं यस्य स तथोक्तः ॥ "अवदानं कर्म वृत्तम्" इत्यमरः ॥ ध्वान्तं तमः । मोह इति यावत् । तद्विकारेण रागादिना लङ्घ्योऽभिभवनीयो न भवतीत्यध्वान्तविकारलङ्घ्यः । विवाहादिकं तु तस्य लीलेत्यर्थः । ताराधिपखण्डधारी चन्द्रशेखरः शम्भुरध्वानं मार्गं ततारात्यगच्छत् ॥ ४८ ॥

खे खेलगामी तमुवाह वाहः
सशब्दचामीकरकिङ्किणीकः।
तटाभिघातादिव लग्नपङ्के
धुन्वन्मुहुः प्रोतघने विषाणे ॥ ४९ ॥

स प्रापदप्राप्तपराभियोगं
नगेन्द्रगुप्तं नगरं मुहूर्तात्।
पुरोविलग्नैर्हरदृष्टिपातैः
सुवर्णसूत्रैरिव (६)कृष्यमाणः ॥ ५० ॥

तस्योपकण्ठे घननीलकण्ठः
कुतूहलादुन्मुखपौरदृष्टः।

ख इति ॥ खे आकाशे खेलं सुन्दरं गच्छतीति खेलगामी। सशब्दाः शब्दायमानाश्चामीकरकिङ्किण्यः काञ्चनक्षुद्रघण्टिका यस्य स तथोक्तः॥ "किङ्किणी क्षुद्रघण्टिका" इत्यमरः॥ "नद्यृतश्च" इति कप्॥ वाह्यतेऽनेनेति वाहो वृषभः॥ करणे घञ्॥ प्रोतघने स्यूतमेघे अतएव तटाभिघातादोघोभेदाल्लग्नपङ्के श्लिष्टकर्दमे इव स्थिते विषाणे शृङ्गे मुहुर्धुन्वंस्तं हरमुवाह वहति स्म ॥ ४९ ॥

स इति॥ स वाहोऽप्राप्तः पराभियोगः शत्रुसमाक्रान्तिर्यस्य तत्तथोक्तं नगेन्द्रेण हिमवता गुप्तं रक्षितं नगरमोषधिप्रस्थं पुरोऽग्रे विलग्नैः संक्रान्तैः हरदृष्टिपातैः सुवर्णसूत्रैः कृष्यमाण इव मुहूर्तात्प्रापत्। अन्यथा कथं दूरस्याशुप्राप्तिः स्यादिति भावः। पुरः प्रसृता हरदृष्टयः पिङ्गलवर्णत्वात् सौवर्णानि इषाकर्षणदानानीवालक्ष्यन्तेत्यर्थः॥ ५०॥

तस्येति॥ तस्य पुरस्योपकण्ठेऽन्तिके घनो मेघ इव नीलः

(६) कृष्यमाणम्।

(७)स्वबाणचिह्नादवतीर्य (८)मार्गा-
दासन्नभूपृष्ठमियाय देवः ॥ ५१ ॥

तमृद्धिमद्बन्धुजनाधिरूढै-
र्वृन्दैर्गजानां गिरिचक्रवर्ती ।
प्रत्युज्जगामागमनप्रतीतः
प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥

वर्गावुभौ देवमहीधराणां
द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ
भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥

कण्ठो यस्य स घननीलकण्ठो देवः कुतूहलाद्दर्शनोत्सुक्याद्-
न्मुखैः पौरैर्दृष्टः सन् । स्वबाणचिह्नात्त्रिपुरविजयसमये स्वबा-
णाङ्कान्मार्गात् कुतश्चिदाकाशदेशादवतीर्यावरुह्य आसन्नभूपृष्ठं
निकटभूतलमियाय प्राप ॥ ५१ ॥

तमिति ॥ आगमनेन शिवागमनेन प्रतीतो हृष्टो गिरि-
चक्रवर्ती पर्वताधिराजो हिमवानृद्धिमता वस्त्रालङ्कारादि-
समृद्धेन बन्धुजनेन अधिरूढैः । अनेन बन्धूनां समस्ताम्यं सूचि-
तम् । गजानां वृन्दैः प्रफुल्ला विकसितकुसुमा वृक्षा येषु तैः
स्वैः स्वकीयैः कटकैर्नितम्बैरिव तं हरं प्रत्युज्जगाम अभि-
ययौ ॥ "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः ॥ ५२ ॥

वर्गाविति ॥ दूरविसर्पी दूरगामी घोषो ययोस्तौ देवाश्च
महीधराश्च तेषां देवमहीधराणामुभौ वर्गावुद्घटितापिधाने-
ऽपनीतकवाटे पुरस्य द्वारे भिन्नो दीर्णः एकसेतु याभ्यां तौ
भिन्नैकसेतू पयसामोघौ प्रवाहाविव समीयतुः सङ्गतौ ॥ ५३ ॥

(७) स्वबाहवाहाद् । (८) वाहात् ।

क्षीमानभूद्भूमिधरो हरेण
त्रैलोक्यवन्द्येन कृतप्रणामः।
पूर्वं महिम्ना स हि तस्य (९)दूर-
मावर्जितं नात्मशिरो विवेद ॥ ५४ ॥

स प्रीतियोगाद्विकसन्मुखश्री-
र्जामातुरग्रेसरतामुपेत्य।
प्रावेशयन्मन्दिरमृद्धमेन-
(१)मागुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥

क्षीमानिति ॥ भूमिधरो हिमवान्। त्रयो लोकास्त्रैलो-
क्यम् ॥ चातुर्वर्ण्यादित्वात् ष्यञ्प्रत्ययः ॥ तस्य वन्द्येन नमस्का-
र्येण हरेण कृतप्रणामः सन् ॥ "ऋत्विक्पितृव्यश्वशुरमातुलानां
कनीयसाम्। प्रवयाः प्रथमं कुर्यात्प्रत्युत्थायाभिवादनम्" इति
स्मरणात् ॥ क्षीमानभूत्। महादेवं प्रति स्वयमल्पत्वात् सङ्कोचं
प्रापेत्यर्थः ॥ ननु विदितेश्वरमहिम्नः स्वयं प्रागेव प्रणतस्य
जामातुराचारमात्रस्वीकारे कः सङ्कोच इति शङ्कां निरस्यति—
पूर्वमिति ॥ हि यस्मात् स हिमवान् पूर्वं प्रागेव तस्येश्वरस्य
महिम्ना सामर्थ्येन दूरमत्यन्तमावर्जितं नमितमात्मशिरो न
विवेद। सत्यं स्वयं प्रणतत्वानुसन्धानेन सङ्कोचः। तदनु-
सन्धानं त्वौत्सुक्यान्नास्तीति भावः ॥ ५४ ॥

स इति ॥ प्रीतियोगात् सन्तोषसम्बन्धाद्विकसन्मुखश्री-
र्विकसन्ती मुखश्रीर्यस्य स तथोक्तः स हिमवान्। जायां
गमीते जामातीति जामातुर्वरस्य ॥ पृषोदरादित्वात् साधु ॥
"जामाता दुहितुः पतिः" इत्यमरः ॥ अग्रेसरतां पुरोगामित्व-
मुपेत्यैनं देवमागुल्फं पादग्रन्थिपर्यन्तं कीर्णानि पर्यस्तान्या-
पणमार्गेषु पण्यवीथिकासु पुष्पाणि यस्मिंस्तदागुल्फकीर्णा-

(९) दूरात्। (१) माङ्गल्य।

तस्मिन् मुहूर्ते पुरसुन्दरीणा-
मीशानसन्दर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं
त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५६ ॥

आलोकमार्गं सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः ।
बद्धुं न सम्भावित एव तावत्
करेण रुद्धोऽपि (२)च केशपाशः ॥ ५७ ॥

पणमार्गपुष्पम् ॥ "तद्ग्रन्थी घुटिके गुल्फौ" इत्यमरः ॥ ऋ समृद्धं मन्दिरं नगरम् ॥ "मन्दिरं नगरेऽगारे मन्दिरो मकरालये" इति विश्वः ॥ प्रावेशयत् ॥ ५५ ॥

तस्मिन्निति ॥ तस्मिन् मुहूर्ते हरपुरप्रवेशसमये ईशानस सन्दर्शने लालसानां लोलुपानाम् ॥ "लोलुपो लोलुभो लोलो लालसो लम्पटश्च सः" इति यादवः ॥ पुरसुन्दरीणां प्रासादमालास्वित्थं वक्ष्यमाणप्रकारेण त्यक्तान्यकार्याणि विसृष्टकार्यान्तराणि विचेष्टितानि व्यापाराः ॥ "नपुंसके भावे क्तः" इति क्तः ॥ बभूवुरासन् ॥ ५६ ॥

तान्येवाह पञ्चभिः श्लोकैः—

आलोकमार्गमिति ॥ आलोकमार्गं दर्शनपथम् । गवाक्षमित्यर्थः । सहसा व्रजन्त्या गच्छन्त्या कयाचिदुद्वेष्टनो द्रुतगतिवशादुन्मुक्तबन्धनोऽतएव वान्तमाल्य उद्गीर्णमाल्यश्च यः स उद्वेष्टनवान्तमाल्यः करेण रुद्धो गृहीतः । अपि च केशपाशः केशकलापः ॥ "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्यमरः ॥ तावदालोकनमार्गप्राप्तिपर्यन्तं बद्धुम् । बन्धनायेत्यर्थः । न सम्भावितो न स्मृत एव ॥ ५७ ॥

---

(२) न केशहस्तः, हि केशपाशः ।

प्रसाधिकालम्बितमग्रपाद-
माक्षिप्य काचिद्द्रवरागमेव ।
(३)उत्सृष्टलीलागतिरा गवाक्षा-
दलक्तकाङ्कां पदवीं ततान ॥ ५८ ॥

विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती ॥ ५९ ॥

जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम् ।

प्रसाधिकेति ॥ काचित् स्त्री प्रसाधिकयालङ्कर्त्र्यालम्बितं रञ्जनार्थं धृतं द्रवरागमेवार्द्रालक्तकमेव । अग्रश्चासौ पादश्चाग्रपादः ॥ इति समानाधिकरणसमासः ॥ "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्" इति वामनः ॥ तमाक्षिप्याकृष्योत्सृष्टलीलागतिस्त्यक्तमन्दगमना सत्या गवाक्षाद्गवाक्षपर्यन्तम् ॥ पदद्वयमेतत् ॥ पदवीम् अलक्तकाङ्कां लाक्षारसचिह्नां ततान ॥ ५८ ॥

विलोचनमिति ॥ अपरा स्त्री दक्षिणं विलोचनमञ्जनेन सम्भाव्यालङ्कृत्य तद्वञ्चितं तेनाञ्जनेन वर्जितं वामनेत्रं यस्याः सा तथोक्ता सती । तथैव तेनैव रूपेण शलाकामञ्जनकूर्चिकां वहन्ती बिभ्रती वातायनसन्निकर्षं गवाक्षसमीपं ययौ ॥ दक्षिणग्रहणं सम्भ्रमादुत्क्रमद्योतनार्थम् । "सव्यं हि पूर्वं मनुष्या अञ्जते" इति श्रुतेः ॥ ५९ ॥

जालान्तरेति ॥ अन्या स्त्री जालान्तरप्रेषितदृष्टिर्गवाक्ष-

(३) उन्मृष्ट ।

नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥

(४)अर्धाचिता सत्वरमुत्थितायाः
पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रसना तदानी-
मङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥

तासां मुखैरासवगन्धगर्भै-
र्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।

मध्यप्रसारितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वस्त्रग्रन्थिम् ॥ "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि" इति विश्वः ॥ न बबन्ध नाबध्नात् । किन्तु नाभिं प्रविष्टाभरणानां कङ्कणानां प्रभा यस्य तेन । प्रभैव नाभेरावरणमभूदिति भावः । हस्तेन वासोऽवलम्ब्य धृत्वा तस्थौ ॥ ६० ॥

अर्धाचितेति ॥ सत्वरं सवेगमुत्थितायाः कस्याश्चिदर्धमाचिता मणिभिर्गुम्फिता अर्धाचिता दुर्निमिते संभ्रमाद्दुःखेन निक्षिप्ते ॥ "डुमिञ् प्रक्षेपणे" इति धातोः कर्मणि क्तः ॥ पदे पदे प्रतिपदम् ॥ वीप्सायां द्विर्भावः ॥ गलन्ती गलद्रत्ना सती रसना मेखला तदानीं तस्मिन्नवसरेऽङ्गुष्ठमूलेऽर्पितं लगितं सूत्रमेव शेषो यस्याः सासीत् ॥ ६१ ॥

तासामिति ॥ तदानीं सान्द्रकुतूहलानां तासां स्त्रीणामासवगन्धो गर्भे येषां तैः । विलोलानि नेत्राण्येव भ्रमरा येषु

---

(४) अर्धाञ्चिता ।

६१—६२ श्लोकयोर्मध्ये श्लोकोऽयं दृश्यते ।

स्तनन्धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती ।
संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित्पयसा गवाक्षम् ।

विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन् ॥ ६२ ॥
तावत्पताकाकुलमिन्दुमौलि-
रुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्वन्
(५)ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥ ६३ ॥
तमेकदृश्यं नयनैः पिबन्त्यो
नार्यो न जग्मुर्विषयान्तराणि ।
तथाहि शेषेन्द्रियवृत्तिरासां
सर्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥

तैर्मुखैर्व्याप्तान्तरास्छन्नावकाशा गवाक्षाः सहस्रपत्राभरणा इवासन् । कमलालङ्कृता इव स्थिता इत्यर्थः ॥ ६२ ॥

तावदिति ॥ तावत्तस्मिन्नवसर इन्दुमौलिरीश्वरो दिवापि प्रासादशृङ्गाणि ज्योत्स्नाया अभिषेकेण स्नपनेन द्विगुणद्युतीनि द्विरावृत्तकान्तीनि ॥ "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति वैजयन्ती ॥ कुर्वन् पताकाभिराकुलं व्याकीर्णमुत्तोरणमुच्छ्रिततोरणं राजपथं प्रपेदे ॥ ६३ ॥

तमिति ॥ एक एव दृश्यो दर्शनीयस्तमेकदृश्यं तमीश्वरं नयनैः पिबन्त्यः । अतितृष्णया पश्यन्त्य इत्यर्थः ॥ "ताः शङ्करं दृष्टिभिरापिबन्त्यः" इति वा पाठः ॥ नार्यो विषयान्तराणि ततोऽन्यान्विषयान् । शब्दादीनित्यर्थः । न जग्मुः । न विदुरित्यर्थः । तथाहि । आसां नारीणां शेषेन्द्रियवृत्तिः श्रोत्रादिप्रवृत्तिः सर्वात्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टेव । श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरेव प्रविश्य कौतु-

---

(५) ज्योत्स्नाभिषेकद्विगुणच्छवीनि ।

स्थाने तपो दुश्चरमेतदर्थ-
मपर्णया (६)पेलवयापि तप्तम्।
या दास्यमप्यस्य लभेत नारी
सा स्यात् कृतार्था किमुताङ्कशय्याम् ॥ ६५ ॥
परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन्द्वये रूपविधानयत्नः
पत्युः प्रजानां (७)विफलोऽभविष्यत् ॥ ६६ ॥

कात् स्वयमप्येनमुपलभन्ते किमु। अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति भावः ॥ ६४ ॥

अथ पौराङ्गनावचनान्याह—

स्थान इति ॥ पेलवया कोमलयापि अपर्णया पार्वत्या एतस्मै शिवायैतदर्थम् ॥ "अर्थेन सह नित्यसमासः सर्वलिङ्गता च" इति विशेष्यनिघ्नत्वम् ॥ दुश्चरं तपस्तप्तं स्थाने युक्तम्। कुतः। या नारी अस्येश्वरस्य दास्यं दासीत्वमपि लभेत सा कृतार्था स्यात्। या अङ्क एव शय्या तामङ्कशय्यां लभेत सा किमुत। कृतार्थेति किमु वक्तव्यमित्यर्थः ॥ ६५ ॥

परस्परेणेति ॥ स्पृहणीयशोभं सर्वैराशास्यमानसौन्दर्यमिदं द्वन्द्वं मिथुनम् ॥ "द्वन्द्वं रहस्य—" इति निपातः ॥ परस्परेण नायोजयिष्यच्चेन्न योजयेद्यदि प्रजानां पत्युर्विधातुरस्मिन् द्वये द्वन्द्वे रूपविधाने सौन्दर्यनिर्माणे यत्नः प्रयासो विफलोऽभविष्यद्भवेत्। एतदनुरूपस्त्रीपुंसान्तराभावादिति भावः ॥ "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इति लृङ् ॥ ६६ ॥

---

(६) कोमलया। (७) वितथः।

न नूनमारूढरुषा शरीर-
मनेन दग्धं कुसुमायुधस्य।
व्रीडादमुं (८)देवमुदीक्ष्य मन्ये
संन्यस्तदेहः स्वयमेव कामः॥ ६७॥

अनेन (९)सम्बन्धमुपेत्य दिष्ट्या
मनोरथप्रार्थितमीश्वरेण।
मूर्धानमालि (१)क्षितिधारणोच्च-
(२)मुच्चैस्तरं वक्ष्यति शैलराजः॥ ६८॥

नेति॥ आरूढरुषा प्ररूढकोपेनानेन हरेण कुसुमायुधस्य कामस्य शरीरं न दग्धं नूनं किन्तु कामोऽमुं देवमुदीक्ष्य दृष्ट्वा व्रीडात् सौन्दर्येण जितोऽस्मीति लज्जया स्वयमेव संन्यस्तदेहस्त्यक्तदेह इति मन्ये। इत्युत्प्रेक्षा। न स्वयं न्यस्ताकृतेः कोपः सम्भवतीति भावः॥ ६७॥

काचित्काञ्चिदाह—

अनेनेति॥ हे आलि सखि। "आलिः सखी वयस्या च" इत्यमरः॥ शैलराजो हिमवान्। दिष्ट्येत्यानन्देऽव्ययम्। मनोरथैः प्रार्थितमवरुद्धम्। अभिलाषविषयीकृतमित्यर्थः॥ "प्रार्थना याच्ञावरोधयोः" इत्यभिधानात्॥ अनेनेश्वरेण सम्बन्धमुपेत्यावाप्य क्षितिधारणेनोच्चमुन्नतं मूर्धानमुच्चैस्तरमुन्नततरम्॥ उच्चैरित्यव्ययात्तरप्प्रत्ययः॥ मूर्ध्नो द्रव्यत्वादामुप्रत्ययाभावो निपातः। "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यादिना द्रव्यप्रकर्षे तस्य विधानादिति॥ वक्ष्यति धारयिष्यति॥ वहेर्लृट्॥ ६८॥

---

(८) देवमवेक्ष्य।　　(९) सम्बन्धमवाप्य।
(१) क्षितिपालनोच्चम्।　　(२) उच्चैस्तराम्।

इत्योषधिप्रस्थविलासिनीनां
शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाज(३)मुष्टिं
हिमालयस्यालयमाससाद ॥ ६९ ॥

(४)तत्रावतीर्याच्युतदत्तहस्तः
शरद्घनाद्दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन
(५)कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ७० ॥

तमन्वगिन्द्रप्रमुखाश्च देवाः
सप्तर्षिपूर्वाः परमर्षयश्च ।

इतीति ॥ त्रिनेत्रस्त्र्यम्बकः ॥ त्रिनेत्रत्रिनयनशब्दयोः "क्षुभ्नादिषु च" इति णत्वाभावः ॥ इतीत्थमोषधिप्रस्थविलासिनीनां सम्बन्धिनीः श्रोत्रसुखाः श्रवणमधुराः कथा आलापान् शृण्वन् केयूरैरङ्गदैश्चूर्णीकृता लाजानां मुष्टयो यस्मिंस्तं तथोक्तम् । तत्रावकीर्णा आचारलाजा अन्तराल एवाङ्गदैश्चूर्णपेषं पिष्यन्त इति पुरन्ध्रिजनसम्बन्धातिशयोक्तिः । हिमालयस्य हिमवत आलयं भवनमाससाद ॥ ६९ ॥

तत्रेति ॥ तत्र हिमवदालयेऽच्युतेन विष्णुना दत्तहस्तो वितीर्णहस्तावलम्बः सन् । शरद्घनाच्छरन्मेघात् । शरद्विशेषणाभ्यां घनस्य शुभ्रत्वं गम्यते । दीधितिमान् सूर्य इवोक्ष्णो वृषादवतीर्य कमलासनेन पूर्वमग्रे क्रान्तानि प्रविष्टान् अद्रिपतेः कक्ष्यान्तराणि गेहप्रकोष्ठान्तराणि विवेश ॥ "कक्ष्या कक्षे वरत्रायां काञ्च्यां गेहे प्रकोष्ठके" इति यादवः ॥ ७० ॥

---

(३) वृष्टिः, मुष्टिः । (४) ततः । (५) कक्षान्तराणि ।

गणाश्च गिर्यालय(६)मभ्यगच्छन्
प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७१ ॥
तत्रेश्वरो विष्टरभाग्यथावत्
सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च (७)नगोपनीतं
प्रत्यग्रहीत्सर्वममन्त्र(८)वर्जम् ॥ ७२ ॥

तमिति ॥ तमीश्वरमन्वगनुपदम् ॥ अव्ययमेतत् ॥ "अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्" इत्यमरः ॥ इन्द्रप्रमुखा देवाश्च सप्तर्षयः पूर्वे येषां ते सप्तर्षिपूर्वाः ॥ "न बहुव्रीहौ" इति सर्वनामसंज्ञाप्रतिषेधः ॥ परमर्षयः सनकादिमहर्षयश्च ॥ "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति तत्पुरुषः ॥ गणाः प्रमथाद्य उत्तमार्था महाप्रयोजनाः प्रशस्तं प्रकृष्टम् । अमोघमित्यर्थः । आरभ्यत इत्यारम्भ उपायस्तमिव गिर्यालयं हिमवन्मन्दिरमभ्यगच्छन् । प्राविशन्नित्यर्थः ॥

तत्रेति ॥ तत्र हिमवदालय ईश्वरो विष्टरभागासनगतः । उपविष्ट इत्यर्थः । यथावद्यथार्हम् । विधिवदित्यर्थः । सरत्नं रत्नसहितमर्घ्यमर्घार्थं जलम् । मधु क्षौद्रमस्मिन्नस्तीति मधुमत् । गवि भवं गव्यम् । दधि च । मधुपर्कमित्यर्थः ॥ "दधिमधुनी सर्पिर्मध्वलाभः" इत्याश्वलायनगृह्यसूत्रात् ॥ नवे दुकूले चेति सर्वं नगोपनीतं हिमवदानीतमर्घ्यादिकं मन्त्रान्वर्जयित्वा मन्त्रवर्जम् ॥ ततो नञ्समासः ॥ अमन्त्रवर्जम् । मन्त्रान्न वर्जयित्वेत्यर्थः ॥ "द्वितीयायां च" इति णमुल्प्रत्यय इत्याह न्यासकारः "अनुदात्तं पदमेकवर्जम्" इत्यत्र ॥ प्रत्यग्रहीत् स्वीकृतवान् ॥ ७२ ॥

---

(६) अन्वगच्छन् । (७) नगोपनीतैः । (८) वन्द्यम् ।

दुकूलवासाः स वधूसमीपं
निन्ये विनीतैरवरोधदक्षैः ।
(१)वेलासमीपं स्फुटफेनराजि-
र्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥

तया (२)प्रवृद्धाननचन्द्रकान्त्या
प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत्
संसृज्यमानः शरदेव लोकः ॥ ७४ ॥

तयोः समापत्तिषु कातराणि
किञ्चिद्व्यवस्थापितसंहृतानि ।

दुकूलेति ॥ अथ दुकूलवासाः । दुकूलं वसान इत्यर्थः । स हरो विनीतैरनुद्धतैरवरोधेषु ये दक्षास्तैरवरोधदक्षैर्वधूसमीपं निन्ये नीतः । कथमिव । स्फुटा फेनानां राजिर्यस्य स उदकमस्यास्तीति उदन्वान् समुद्रः ॥ "उदन्वानुदधौ च" इति निपातनात् साधुः ॥ नवैरचिरोदितैश्चन्द्रकिरणैर्वेलासमीपमिव ॥ ७३ ॥

तयेति ॥ आननं चन्द्र इव । इति उपमितसमासः । प्रवृद्धाननचन्द्रस्य कान्तिर्यस्याः तया तथोक्तया तया कुमार्या शरदा लोक इव संसृज्यमानः सङ्गच्छमानः शिवश्चक्षूंषि कुमुदानीव तानि प्रफुल्लानि यस्य स तथोक्तः । चेतः सलिलमिव तत्प्रसन्नं यस्य स तथोक्तः । प्रसन्नचेतःसलिलोऽभूत् । शरल्लोकयोरपि यथोचितं विशेषणानि योज्यानि ॥ ७४ ॥

तयोरिति ॥ तयोः वधूवरयोः समापत्तिषु यदृच्छया सङ्गतिषु कातराणि चकितानि ॥ "अधीरे कातरं" इत्यमरः ॥

---

(१) वेलासकाशम् । (२) विवृद्ध ।

ह्रीयन्त्रणां (३)तत्क्षणमन्वभूव-
न्नन्योन्यलोलानि विलोचनानि ॥ ७५ ॥

तस्याः करं शैलगुरूपनीतं
जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।
(४)उमातनौ गूढतनोः स्मरस्य
(५)तच्छङ्किनः पूर्वमिव प्ररोहम् ॥ ७६॥

रोमोद्गमः प्रादुरभूदुमायाः
(६)स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।

द्रष्टुम् असमर्थानीति भावः । किञ्चित् ईषद् व्यवस्थापितानि स्वीकृतानि पश्चात् संहृतानि निवर्तितानि चेति व्यवस्थापितसंहृतानि ॥ "पूर्वकाल—" इत्यादिना तत्पुरुषः ॥ अन्योन्यस्मिँल्लोलानि सतृष्णानि ॥ "लोलश्चलसतृष्णयोः" इत्यमरः ॥ विलोचनानि दृष्टयस्तत्क्षणं तस्मिन् क्षणे ह्रीयन्त्रणां ह्रिया निमित्तेन सङ्कोचमन्वभूवन् ॥ ७५ ॥

तस्या इति ॥ अष्टमूर्तिः शिवः । तस्मात् ईश्वरात् शङ्कत इति तच्छङ्किनः । तद्भीतस्येत्यर्थः । अतएवोमातनावुमाशरीरे गूढतनोर्गुप्तशरीरस्य स्मरस्य पूर्वं प्ररोहमिव प्रथमाङ्कुरमिव स्थितं शैलगुरूपनीतं शैलगुरुणा हिमवता उपनीतं प्रापितम् । अथवा शैलगुरुणा हिमवत्पुरोधसा उपनीतं ताम्राङ्गुलिं रक्ताङ्गुलिं तस्याः पार्वत्याः करं जग्राह ॥ ७६ ॥

रोमोद्गम इति ॥ उमाया रोमोद्गमो रोमाञ्चः प्रादुरभूत् । पुमान् गौः पुङ्गवो वृषभः ॥ "गोरतद्धितलुकि" इति टच् ॥ स केतुश्चिह्नं यस्य स पुङ्गवकेतुः शिवः स्विन्नाङ्गुलिः आसीत् । अत्रोत्प्रेक्ष्यते—पाणिसमागमेन पाण्योः संस्पर्शेन ॥ कर्वा ॥

(३) आनन्दगिरे सुहूर्तम्, आनन्दगिरे मनोज्ञाम् ।
(४) उमात्मना । (५) तच्छङ्कितः । (६) चित्राङ्गुलिः ।

वृत्तिस्तयोः पाणिसमागमेन
समं विभक्तेव मनोभवस्य ॥ ७७ ॥
प्रयुक्तपाणिग्रहणं यदन्यद्
वधूवरं पुष्यति कान्तिमग्र्याम् ।
सान्निध्ययोगादनयोस्तदानीं
किं कथ्यते श्रीरुभयस्य तस्य ॥ ७८ ॥
प्रदक्षिणप्रक्रमणात् कृशानो-
रुदर्चिषस्तन्मिथुनं चकासे ।

तयोः वधूवरयोः मनोभवस्य वृत्तिरवस्थितिः समं विभक्तेव समीकृतेवेत्यर्थः ॥ प्राक्सिद्धस्याप्यनुरागसाम्यस्य सम्प्रति तत्कार्यदर्शनात् पाणिसंस्पर्शकृतत्वमुत्प्रेक्ष्यते । ननु कन्या तु प्रथमसङ्गमे स्विन्नकरचरणा भवति पुमांस्तु रोमाञ्चितो भवतीति वात्स्यायनेन विपरीतमुक्तमिति चेन्नैष दोषः । एभिरनयोर्भावं परीक्षेतेति वाक्यशेष एभिरिति बहुवचनेन स्वेदरोमाञ्चग्रहणस्य सकलसात्त्विकोपलक्षणत्वावगमेनानियमावधारणात् । अतएव रघुवंशेऽन्यथाभिधानात् स्वोक्तिविरोध इत्यपास्तम् । तदेतद्रघुवंशसञ्जीविन्यां (७ । २२) सुव्यक्तमवोचम् । सात्त्विकास्तु "स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः" इति ॥ ७७ ॥

प्रयुक्तेति ॥ यद्यस्मात्कारणात् प्रयुक्तं पाणिग्रहणं यस्य तत्तथोक्तमन्यल्लौकिकम् । वधूश्च वरश्च वधूवरम् ॥ समाहारे द्वन्द्वैकवद्भावः ॥ तदानीं पाणिग्रहणकालेऽनयोरुमाशिवयोः सान्निध्ययोगात् सन्निधिभावात् अग्र्याम् उत्तमां कान्तिं शोभां पुष्यति पुष्णाति तस्योभयस्योमामहेश्वररूपस्य मिथुनस्य श्रीः किं कथ्यते । यत्प्रसादादन्यस्य शोभालाभस्तस्य शोभा किमु वक्तव्येत्यर्थः ॥ "विवाहसमये गौरीशिवौ वधूवरावनुप्रविशेताम्" इत्यागमः ॥ ७८ ॥

मेरोरुपान्तेष्विव वर्तमान-
मन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९ ॥

तौ दम्पती त्रिः परिणीय वह्नि-
मन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास बधूं पुरोधा-
स्तस्मिन् समिद्धार्चिषि लाजमोक्षम् ॥८०॥

सा लाजधूमाञ्जलिमिष्टगन्धं
गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या
मुहूर्तकर्णोत्पलतां प्रपेदे ॥ ८१ ॥

प्रदक्षिणेति ॥ तन्मिथुनमुदर्चिष उन्नतज्वालस्य कृशानोः कर्मणः प्रदक्षिणप्रक्रमणात् प्रदक्षिणीकरणाच्चकासे। किमिव। मेरोरुपान्तेषु परिसरेषु वर्तमानम् आवर्तमानम्। मेरुं प्रदक्षिणीकुर्वदित्यर्थः। अन्योन्येन संसक्तं सङ्गतम्। मिथुनस्याप्येतद्विशेषणम्। अहश्च त्रियामा चाहस्त्रियामं रात्रिंदिवमिव ॥ समाहारे द्वन्द्वैकवद्भावः ॥ ७९ ॥

ताविति ॥ स पुरस्तादेव हितं विधत्त इति पुरोधाः पुरोहितोऽन्योन्यस्य संस्पर्शेन स्पर्शसुखेन निमीलिताक्षौ तौ जाया च पतिश्च दम्पती ॥ कर्मभूतौ ॥ जायाशब्दस्य दंभावो निपातितः ॥ वह्निं त्रिस्त्रिवारम् ॥ "द्वित्रिचतुर्भ्यः सुच्" इति सुच् ॥ परिणीय परितो नीत्वा। प्रदक्षिणीकार्येत्यर्थः ॥ नयतेर्द्विकर्मकात्ल्यप्। समिद्धार्चिषि दीप्तज्वाले तस्मिन् वह्नौ बधूं लाजमोक्षं लाजविसर्गं कारयामास ॥ "हृक्रोरन्यतरस्याम्" इति विकल्पादणिकर्तुः कर्मत्वम् ॥ ८० ॥

सेति ॥ सा बधूः गुरोः पुरोधस उपदेशात् इष्टः। घ्राणतर्पण इत्यर्थः। गन्धो यस्य तं लाजधूमाञ्जलिं वदनं निनाय।

तदीषदार्द्रारुणगण्डलेख-
मुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
बधूमुखं क्लान्तयवावतंस-
माचारधूमग्रहणाद्बभूव ॥ ८२ ॥

बधूं द्विजः प्राह तवैष वत्से
वह्निर्विवाहं प्रति (७)कर्मसाक्षी ।
शिवेन भर्त्रा सह धर्मचर्या
कार्या त्वया मुक्तविचारयेति ॥ ८३ ॥

कपोलसंसर्पिणी शिखा यस्य स तथोक्तः स धूमस्तस्या गौर्या मुहूर्तं कर्णोत्पलतां प्रपेदे। धूमस्य विसृमरत्वात् मुहूर्तग्रहणम् ॥ ८१ ॥

तदिति ॥ तद्बधूमुखमाचारधूमग्रहणादाचारप्राप्तधूमत्वात् ईषदार्द्रे स्विन्ने अरुणे च गण्डलेखे गण्डस्थले यस्य तत्तथोक्तम्। अक्ष्णोरुच्छ्वासी उद्गच्छन् कालाञ्जनस्य रागोऽञ्जनं यस्य तत्तथोक्तम्। क्लान्तो यवावतंसो यवाङ्कुरकर्णपूरो यस्य तत्तथाभूतं बभूव ॥ "लाजाञ्जलिं विसृज्य धूमाग्रं जिघ्रेत्" इति प्रयोगवृत्तिकारः ॥ ८२ ॥

बधूमिति ॥ अथ बधूं द्विजः पुरोधाः प्राह। किमिति। हे वत्से। एष वह्निस्तव विवाहं प्रति। विवाहकर्मणीत्यर्थः। कर्मसाक्षी कर्मद्रष्टा। भर्त्रा शिवेन सह मुक्तविचारया निर्विचारया त्वया धर्मचर्या धर्माचरणं कार्या कर्तव्येति। अयं च प्राजापत्यविवाहो द्रष्टव्यः। यथाहाश्वलायनः—"सह धर्मं चरेदिति प्राजापत्ये" इति ॥ ८३ ॥

---

(७) पूर्वसाक्षी।

आलोचनान्तं (८)श्रवणे वितत्य
पीतं गुरोस्तद्वचनं भवान्या ।
निदाघकालोल्वण(९)तापयेव
माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ८४ ॥

ध्रुवेण भर्त्रा ध्रुवदर्शनाय
प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य
ह्रीसन्न(१)कण्ठी कथमप्युवाच ॥ ८५ ॥

इत्थं विधिज्ञेन पुरोहितेन
प्रयुक्तपाणिग्रहणोपचारौ ।

आलोचनान्तमिति ॥ भवस्य पत्न्या भवान्या ॥ "इन्द्र-वरुणभवशर्वरुद्र—" इत्यादिना ङीप् । आनुगागमश्च ॥ आलोचनान्तं नेत्रान्तपर्यन्तम् ॥ "आङ् मर्यादाभिविध्योः" इत्यव्ययीभावः ॥ श्रवणे श्रोत्रे वितत्य विस्तार्य तत् पूर्वोक्तं गुरोः याज्ञिकस्य वचनं "सह धर्मं चर" इति वाक्यं निदाघ-काले ग्रीष्मकाले उल्वणतापयोत्कटसन्तापया पृथिव्या प्रथ-ममाद्यं माहेन्द्रं पार्जन्यमम्भ इव पीतम् । अत्यादरेण शुश्रा-वेत्यर्थः ॥ ८४ ॥

ध्रुवेणेति ॥ प्रियं दर्शनं यस्य ॥ कर्मभूतस्य ॥ तेन प्रियद-र्शनेन ध्रुवेण शाश्वतेन भर्त्रा ध्रुवस्य नक्षत्रविशेषस्य दर्शनाय ॥ "ध्रुवो भभेदे क्लीवं तु निश्चिते शाश्वते त्रिषु" इत्यमरः ॥ प्रयु-ज्यमाना दृश्यतामिति प्रेर्यमाणा ह्रीसन्नकण्ठी ह्रिया हीन-स्वरा सा वधूः कथमप्याननमुन्नमय्य दृष्ट इत्युवाच ॥ ८५ ॥

---

(८) श्रवणौ । (९) तप्तयेव । (१) कण्ठम् ।

प्रणेमतुस्तौ पितरौ प्रजानां
पद्मासनस्थाय पितामहाय ॥ ८६ ॥

वधूर्विधात्रा प्रतिनन्द्यते स्म
कल्याणि वीरप्रसवा भवेति ।
वाचस्पतिः सन्नपि सोऽष्ट(१)मूर्तौ
त्वाशास्य चिन्तास्तिमितो बभूव ॥८७॥

क्लृप्तोपचारां चतुरस्रवेदीं
तावेत्य पश्चात्कनकासनस्थौ ।

इत्थमिति ॥ इत्थम् अनेन प्रकारेण ॥ "इदमस्थमुः" इति थमुप्रत्ययः ॥ विधिज्ञेन विवाहप्रयोगज्ञेन । शास्त्रज्ञेनेत्यर्थः । पुरोहितेन हैमवतेन प्रयुक्तपाणिग्रहणोपचारौ कृतविवाहकर्माणौ प्रजानां पितरौ तावुमामहेश्वरौ पद्मासनस्थाय पद्मासनोपविष्टाय पितॄणां पित्रे पितामहाय ब्रह्मणे ॥ "पितामहो विरिञ्चौ स्यात् तातस्य जनकेऽपि च" इति विश्वः ॥ "पितृव्यमातुलमातामहपितामहाः" इति निपातनात् साधुः ॥ प्रणेमतुः नमश्चक्रतुः । पितामहस्य पित्रोरपि पूज्यत्वादिति भावः ॥ ८६ ॥

वधूरिति ॥ वधूः कन्या विधात्रा ब्रह्मणा । हे कल्याणि शोभने । वीरः प्रसवोऽपत्यं यस्याः सा वीरप्रसवा वीरसूर्भवेति प्रतिनन्द्यते स्म । आशिषमुक्तेत्यर्थः । स विधाता वाचस्पतिर्वागीश्वरोऽपि सन् ॥ कस्कादिषु पाठात् साधुः ॥ अष्टमूर्तौ शिवे त्वाशास्यमाकाङ्क्ष्य तत्र चिन्ता विचारस्तस्यां स्तिमितो मन्दो बभूव । तस्य निरीहस्याशास्याभावादाशिषि स्तिमितत्वमित्यर्थः ॥ ८७ ॥

क्लृप्तेति ॥ तौ जायापती वधूवरौ पश्चात् नमस्कारानन्तरं

---

(१) मूर्तावाशास्य ।

जायापती (४)लौकिकमेषणीय-
मार्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥

पत्रान्तलग्नैर्जलबिन्दु(५)जालै-
राकृष्टमुक्ताफल(६)जालशोभम् ।
तयोरुपर्यायतनालदण्ड-
माधत्त लक्ष्मीः कमलातपत्रम् ॥ ८९ ॥

द्विधाप्रयुक्तेन च वाङ्मयेन
सरस्वती तन्मिथुनं नुनाव ।

क्लृप्ता रचिता उपचाराः पुष्परचनादयो यस्यां तां चतुरस्रवेदीं एत्य प्राप्य कनकासनस्थौ सन्तौ लौकिकं लोके विदितम् । आचारप्राप्तमित्यर्थः । अतएवैषणीयमाशास्यम् । "तथापि लौकिकाचारं मनसापि न लङ्घयेत्" इति शास्त्रादवश्यकर्तव्यमित्यर्थः ॥ इषेरिच्छार्थादनीयप्रत्ययः ॥ आर्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥

पत्रान्तेति ॥ लक्ष्मीः श्रीदेवी पत्रान्तेषु दलप्रान्तेषु लग्नैर्जलबिन्दुजालैराकृष्टाहृता मुक्ताफलजालेन प्रान्तलम्बिना मुक्ताकलापेन या शोभा सा येन तत्तथोक्तमायतं दीर्घं नालमेव दण्डो यस्य तत् कमलमेव आतपत्रं तत्तयोः उपरि आधत्त दधौ ॥ ८९ ॥

द्विधेति ॥ अथ सरस्वती वाग्देवी द्विधा संस्कृतप्राकृतरूपेण द्वैविध्येन प्रयुक्तेन उच्चारितेन वाङ्मयेन शब्दजालेन तत् मिथुनं नुनाव तुष्टाव ॥ "णु स्तुतौ" इति धातोर्लिट् ॥ केन कमित्याह—संस्कारेति ॥ संस्कारेण शास्त्रव्युत्पत्त्या पूतेन प्रकृतिप्रत्ययविभागशुद्धेन । संस्कृतेनेत्यर्थः । वरेण्यं वरणीयम् ।

---

(४) लौकिकमेषितव्यम् । (५) इन्दैः । (६) भक्तिशोभम् ।

संस्कारपूतेन वरं वरेण्यं
बधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥
तौ सन्धिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्तं
प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९१ ॥

श्लाघ्यमित्यर्थः ॥ वृणोतेरौणादिक एन्यप्रत्ययः ॥ वरं वोढारं शिवम्। सुखेन ग्राह्यं सुबोधं निबन्धनं रचना यस्य तेन वाङ्मयेन। प्राकृतभाषया इत्यर्थः। बधूम्। नुनाव इत्यनेन सम्बन्धः ॥ ९० ॥

ताविति ॥ तौ दम्पती सन्धिषु मुखादिनिर्वहणान्तेषु पञ्चसन्धिषु ॥ तदुक्तं दशरूपके—"मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः" इति ॥ व्यञ्जितवृत्तिभेदं स्फुटीकृतकौशिक्यादिवृत्तिविशेषम्। रसानुगुण्येनेति शेषः ॥ तदुक्तं भूपालेन—"कौशिकी स्यात् तु शृङ्गारे रसे वीरे तु सात्वती। रौद्रबीभत्सयोर्वृत्तिर्नियतारभटी पुनः। शृङ्गारादिषु भावज्ञैः रसेष्विष्टा तु भारती"। तथा। "कौशिक्यारभटी चैव सात्वती भारती तथा। चतस्रो वृत्तयो ज्ञेयास्तासु नाट्यं प्रतिष्ठितम्" इति ॥ रसान्तरेषु शृङ्गारादिरसभेदेषु ॥ "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः ॥ "शृङ्गारहास्यकरुणारौद्रवीरभयानकाः। बीभत्साद्भुतशान्ताख्या रसाः पूर्वैरुदाहृताः" इति ॥ प्रतिबद्धरागं प्रतिनियमेन प्रवर्तितो वसन्तललितादिरागो यस्मिंस्तम्। यस्मिन्रसे यो रागो विहितस्तदनुसारेण प्रयुक्तरागमित्यर्थः। यथाह काहलः—"रौद्रेऽद्भुते तथा वीरे पुंरागेण प्रगीयते। शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्तिताः। भयानके च बीभत्से शान्ते गेयो नपुंसके" इति ॥ ललिताङ्गहारं मधुराङ्गविक्षेपम् ॥ "अङ्गहारोऽङ्गविक्षेपः" इत्यमरः ॥ आदौ भवम् आद्यम्। रूपकान्तरप्रकृतिभूतमित्यर्थः।

देवास्तदन्ते हरमूढभार्यं
किरीटबद्धाञ्जलयो निपत्य।
शापावसाने (७)प्रतिपन्नमूर्ते-
र्ययाचिरे पञ्चशरस्य सेवाम् ॥ ९२ ॥

तस्यानुमेने भगवान्विमन्यु-
र्व्यापारमात्मन्यपि सायकानाम्।
(८)कालप्रयुक्ता खलु (९)कार्यविद्भि-
र्विज्ञापना भर्तृषु सिद्धिमेति ॥ ९३ ॥

तदुक्तम्—"आहुः प्रकरणादीनां नाटकं प्रकृतिं बुधाः" इति ॥
अप्सरसाम् उर्वश्यादीनाम्। प्रयुज्यत इति प्रयोगो रूपकम्।
नाटकमित्यर्थः। आद्यमिति विशेषणात्। तं मुहूर्तमपश्यतां
दृष्टवन्तौ॥ "पाघ्राध्मास्था—" इत्यादिना दृशेः पश्यादेशः
९१ ॥

देवा इति॥ देवा इन्द्रादयस्तदन्ते तस्य प्रयोगदर्शनस्या-
न्तेऽवसान ऊढभार्यं परिणीतदारं हरं किरीटेषु बद्धा अञ्ज-
लयो येषां ते तथोक्ताः सन्तः। निपत्य प्रणम्य शापावसाने
प्रतिपन्नमूर्तेर्लब्धशरीरस्य। "परिणेष्यति पार्वतीं यदा" (४।
४२) इत्यादिना शापस्य पार्वतीपरिणयान्तत्वादित्यर्थः। पञ्च-
शरस्य कामस्य॥ कर्तुः॥ सेवां ययाचिरे। पुनः समासादित-
शरीरस्य तस्य सेवा स्वीक्रियतामिति प्रार्थयामासुरित्यर्थः॥
दुह्याच्पच्—" इत्यादिना द्विकर्मकत्वम् ॥ ९२ ॥

तस्येति॥ विमन्युः विगतक्रोधो भगवानीश्वर आत्मन्यपि
तस्य कामस्य सायकानां व्यापारमनुमेने। तथाहि। कार्य-
विद्भिः कार्यज्ञैः। अथवा कालविद्भिः। अवसरज्ञैः काले योग्या-

---

(७) प्रतिलब्ध। (८) काले प्रयुक्ता। (९) कालविद्भिः।

अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः करेण ।
कनककलश(२)युक्तं भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात् ॥९४॥

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः ।

वसरे प्रयुक्तानुष्ठिता भर्तृषु स्वामिषु विषये विज्ञापना मिद्धि- र्मेति खलु । सफला भवतीत्यर्थः । अयमेवास्य स्मरमेवास्वी- कारो यदात्मन्यपि तत्सायकव्यापारमङ्गीकृतवानिति ॥ ९३ ॥

अथेति ॥ अथ इन्दुमौलिरीश्वरस्तान्विबुधगणान्विसृज्य क्षितिधरपतिकन्यां पार्वतीं करेण आददानः कनककलशयुक्तं मङ्गलार्थमन्तर्निहितहेममयपूर्णकुम्भं भक्तयः पुष्पादिरचना- स्तासां शोभया सनाथम् । सहितमित्यर्थः । क्षितिविरचित- शय्यं क्षितौ विरचिता स्थण्डिले कल्पिता शय्या तल्पं यस्मिं- स्तत्तथोक्तं कौतुकागारमागाच्छय्यागृहं जगाम ॥ अत्राश्वला- यनः—"अत ऊर्ध्वमक्षारलवणाशिनावधःशायिनौ ब्रह्मचा- रिणौ स्याताम्" इति । अत ऊर्ध्वं विवाहादूर्ध्वम् । आ त्रिर त्रादिति शेषः । "त्रिरात्रं द्वादशरात्रं वा" इति वचनात् तथा कामशास्त्रेऽपि "अथ परिणयरात्रौ प्रक्रमेणैव किञ्चित्ति सृषु च रजनीषु स्तब्धभावा दुनोति। त्रिदिनमिह न भिन्द्या ब्रह्मचर्यं न वाच्या हृदयमननुरुध्य स्वेच्छया नर्म कुर्यात् ॥ ९४ ॥

नवेति ॥ तत्र कौतुकागारे ईश ईश्वरो नवपरिणयेन नवो द्वाहेन या लज्जा सा भूषणं यस्यास्तामतएव तेनेश्वरेण कृता क्षेपं कृताकर्षणम् । उन्नमितमिति यावत् । वदनमपहरन्तीं साचीकुर्वन्तीम् । अयं लज्जानुभावः । अनुभावान्तरमाह-

(२) रत्ना ।

अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्
(३)प्रमथमुखविकारैर्हासयामास गूढम् ॥९५॥

शयनसखीभ्योऽपि शयने सहशायिनीभ्योऽपि। नर्मसहचरीभ्योऽपीत्यर्थः। कथञ्चित् कृच्छ्रेण दत्तवाचं दत्तोत्तरां गौरीं प्रमथा भृङ्गरीटिप्रभृतयो हास्यरसाधिदेवताः पशुपतेः पारिषदाः। यथाह भरतः—शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः" इति॥ "प्रमथाः स्युः पारिषदाः" इत्यमरः॥ तेषां मुखविकारैर्मुखविकृतचेष्टितैर्गूढमप्रकाशं हासयामास। हासाद्युपायैर्लज्जामपाकर्तुं प्रवृत्त इत्यर्थः। यथाह गोनर्दः—"हासेन मधुना नर्मवचसा लज्जितां प्रियाम्। विलुप्तलज्जां कुर्वीत निपुणैश्च सखीजनैः" इति॥ ९५॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमापरिणयो नाम सप्तमः सर्गः।

---

(३) प्रथम।

# कुमारसम्भवम्।

## उत्तरखण्डम्।

### अष्टमः सर्गः।

पाणिपीडनविधेरनन्तरं
शैलराजदुहितुर्हरं प्रति।
भावसाध्वसपरिग्रहादभूत्
(१)कामदोहदसुखं मनोहरम् ॥ १ ॥

अथ शृङ्गाररसुभयोः — — — — —।
कुमारसम्भवफले सर्गेऽस्मिन्नाह संप्रति ॥
सोऽपि संक्षिप्तसम्पन्नसंयुक्तश्च समृद्धिमान्।
इति भेदाश्चतुर्धोक्ताश्चतुर्णां च वियोगिनाम् ॥
तत्रावस्थाप्रभेदेन शृङ्गारे नायिका त्रिधा।
मुग्धा मध्या प्रगल्भा च तत्र क्षोमाध्वसाविलाम् ॥
मुग्धावस्थां समाश्रित्य देव्या आद्यसमागमे।
आदावेकादश श्लोकाः ख्यातपूर्वानुरागिणोः ॥
प्रथमं नाम शृङ्गारं शिवयोः कथितं कविः।
चुम्बनेष्वधरेत्यत्र लक्षणं तस्य वक्ष्यते ॥

पाणीति ॥ पाणिपीडनविधेः अनन्तरं पाणिग्रहणानन्तरम् ॥ विधेरिति पञ्चमी षष्ठी च। उभयथाप्यनुशासनसम्भवादित्युक्तं प्राक् ॥ शैलराजदुहितुः पार्वत्याः ॥ कर्त्र्याः ॥ तं हरं प्रति भावसाध्वसपरिग्रहात् मनोहरं चित्ताकर्षकं कामदोह-

---

(१) कामदोहदसुखंमनोहरं वपुः।

व्याहृता प्रतिवचो न सन्दधे
गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयनं पराङ्मुखी
सा तथापि रतये पिनाकिन: ॥ २ ॥
कैतवेन (२)शयिते कुतूहलात्
पार्वती प्रतिमुखं निपातितम् ।

दम् । कामसंवर्धकमित्यर्थ: ॥ "तरुगुल्मलतादीनामकाले कुशलै: कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्" इति शब्दार्णवे ॥ तच्च तत् सुखं कामदोहदसुखम् अभूत् । हरस्येति शेष: ॥ नायिकानायकयोरन्योन्यानुभवदर्शनात् सुखमाविर्भवति । तच्च मदनोद्दीपकमिति रसविदां स्थिति: । तथा च हरस्य गौर्यां नवोढायां स्वगोचरभावप्रयुक्तसाध्वसदर्शनात् सुखमाविर्भवति । तच्च मदनाकारं प्रादुर्बभूवेत्यर्थ: । तत्र रसाभावस्थायिन: कार्यमनुभाव: । तदुक्तम्—"रसा गच्छन्ति संस्थानं यत्कार्यमुपलक्ष्यते । सोऽनुभाव:" इति ॥१॥

उक्तं भावसाध्वसम् । तस्य सुखमयत्वं च वर्णयति—

व्याहृतेति ॥ सा पार्वती व्याहृता यत्किञ्चिदभिहिता सती प्रतिवच: प्रत्युत्तरं न सन्दधे । न ददावित्यर्थ: । अवलम्बितांशुका गृहीतवस्त्रा सती गन्तुम् अपसर्पतुम् ऐच्छत् इच्छति स्म ॥ इषिधातोर्लङ् । "इषुगमियमां छ:" इति छकार: ॥ पराङ्मुखी सती शयनं सेवते स्म । अनभिमुखमशयिष्टेत्यर्थ: । तथापि । इत्थं साध्वसात् प्रतिकूलचेष्टितापीत्यर्थ: । पिनाकिन: शिवस्य रतये सुखाय । बभूवेति शेष: ॥ प्रातिकूल्यमपि तस्यानन्दकरमभूदित्यर्थ: ॥ एतेन नवोढाया देव्या मौग्ध्यादिर्जितं तन्ममत्वमवसेयम् ॥ २ ॥

कैतवेनेति ॥ प्रिये भर्तरि कुतूहलात् । एषा किं करिष्-

(२)शयने ।

चक्षुरुन्मिषति सस्मितं प्रिये
(३)विद्युदाहतमिव न्यमीलयत् ॥ ३ ॥
नाभिदेशनिहितः सकम्पया
शङ्करस्य रुरुधे तया करः ।
तद्दुकूलमथ चाभवत् स्वयं
दूरमुच्छ्वसितनीविबन्धनम् ॥ ४ ॥
एवमालि निगृहीतसाध्वसं
शङ्करो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला
नास्मरत् प्रमुखवर्तिनि प्रिये ॥ ५ ॥

तीति बुभुत्सयेत्यर्थः। कैतवेन कपटेन शयिते सुप्ते सति पार्वती ॥ कर्त्री ॥ प्रतिमुखं यथा तथा निपातितम्। प्रियस्वापपरीक्षार्थं तदभिमुखं प्रवर्तितमित्यर्थः। चक्षुः स्वदृष्टिं सस्मितम् उन्मिषति। पुनः प्रिये सहासं पश्यतीत्यर्थः। विद्युदाहतं विद्युता प्रतिहतमिव न्यमीलयत्। साध्वसादिति भावः। एतेन किञ्चित्साध्वसस्यापचयो व्यज्यते ॥ ३ ॥

नाभीति ॥ नाभिदेशनिहितः। नीवीमोचनायेति शेषः। शङ्करस्य करः सकम्पया वेपथुमत्या। प्रियकरस्पर्शादुत्पन्नसात्त्विकभावयेत्यर्थः। तया पार्वत्या रुरुधे निवारितः। अथ च। तथापीत्यर्थः। तद्दुकूलं स्वयं स्वत एव दूरम् अत्यन्तम् उच्छ्वसितं स्रस्तं नीविबन्धनं नीवीग्रन्थिर्यस्य तत्तथाभूतम् अभवत्। रतिपारवश्यादिति भावः ॥ ४ ॥

एवमिति ॥ हे आलि सखि, पार्वति रहसि शङ्करः एवम्। स्वोपदिष्टप्रकारेणेत्यर्थः। निगृहीतसाध्वसं निरस्तभयं यथा

(३) विद्युतेव निहतं न्यमीलयत्।

अप्यवस्तुनि कथाप्रवृत्तये
प्रश्नतत्परमनङ्गशासनम् ।
(४)वीक्षितेन परिगृह्य पार्वती
मूर्धकम्पमयमुत्तरं ददौ ॥ ६ ॥
शूलिनः करतलद्वयेन सा
सन्निरुध्य नयने हृतांशुका ।
तस्य पश्यति ललाटलोचने
मोघयत्नविधुरा रहस्यभूत् ॥ ७ ॥

तथा सेव्यतामिति सखीभिः उपदिष्टम् उक्तं वचनं सा पार्वती प्रिये शङ्करे प्रमुखवर्तिनि सति आकुला साध्वसविह्वला सती न अस्मरत् । न स्मृतवतीत्यर्थः । स हि भयपरिप्लुते चेतसि दृष्टतरोऽप्युपदेशः संसारमाधत्ते इति भावः ॥ ५ ॥

अपीति ॥ कथाप्रवृत्तये संलापप्रवर्तनाय अवस्तुनि अप्रस्तुतार्थेऽपि प्रश्नतत्परम् । यत्किञ्चित् पृच्छन्तमित्यर्थः । अनङ्गशासनम् ईश्वरं पार्वती वीक्षितेन । न तु वाचेत्यर्थः । परिगृह्य अङ्गीकृत्य मूर्धकम्पमयं शिरःकम्पस्वरूपम् ॥ स्वार्थे मयट् ॥ उत्तरं ददौ । न तु वाङ्मयं साध्वसादिति भावः ॥ विहृतनामा लज्जानुभाव उक्तः । तदुक्तं रतिरहस्ये—"ईर्ष्यामानातिलज्जाभ्यां न दत्तं योग्यमुत्तरम् । क्रियया व्यज्यते यत्र विहृतं तदुदीरितम्" इति ॥ ६ ॥

पुनस्तमेवाह—

शूलिन इति ॥ सा पार्वती रहसि हृतांशुका प्रियेणाकृष्टवस्त्रा सती करतलद्वयेन । स्वकीयेनेत्यर्थः । शूलिनः हरस्य नयने नेत्रद्वयं सन्निरुध्य संच्छाद्य तस्य शूलिनः ललाटलोचने तृतीयेऽक्ष्णि पश्यति सति मोघयत्ना खिन्नप्रयासा अतएव

(४) वीक्षितेन परिवीक्ष्य पार्वती ।

चुम्बनेष्वधरदानवर्जितं
(५)सन्नहस्तमदयोपगूहने ।
क्लिष्टमन्मथमपि प्रियं प्रभोः
दुर्लभप्रतिकृतं वधूरतम् ॥ ८ ॥

यन्मुखग्रहणमक्षताधरं
(६)दत्तमव्रणपदं नखं च यत् ।
यद्रतं च सदयं प्रियस्य तत्
पार्वती विषहते स्म नेतरत् ॥ ९ ॥

विधुरा अभूत्। तृतीयकराभावादिति भावः॥ एतेन किञ्चिद्दाक्ष्यादयो व्यज्यन्ते ॥ ७॥

चुम्बनेष्विति॥ चुम्बनेषु अधरदानवर्जितम् ओष्ठार्पणरहितम् अदयोपगूहने निर्दयालिङ्गने सन्नौ स्तब्धौ हस्तौ करौ यस्मिन् तत्तथोक्तम्। तथा दुर्लभप्रतिकृतम्। प्रगल्भत्वाभावदन्तताडनाद्यकृतप्रयत्नमित्यर्थः। अतएव क्लिष्टमन्मथं लज्जया उपरुद्धमदनमपि वध्वाः नवोढायाः रतं वधूरतं प्रभोः ईश्वरस्य प्रियम्। अभूदिति शेषः॥ "वधूः स्नुषानवोढास्त्रीभार्यास्पृष्टाङ्गनासु च" इति विश्वः॥ अयं लज्जासाध्वसाभ्यां सङ्कुचितोपचारत्वात् संक्लिष्टसम्भोगः॥ तदुक्तं भूपालेन—"युवानौ यत्र संक्षिप्तसाध्वसव्रीडयादिभिः। उपचारान्निषेवन्ते स संक्लिष्ट इतीरितः" इति॥ ८॥

यदिति॥ पार्वती प्रियस्य सम्बन्धी अक्षतः अखण्डितः अधरः यस्मिन् तत्तथोक्तं यत् मुखग्रहणं मुखचुम्बनम्। अव्रणपदं लक्ष्मरहितम्। "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः॥ दत्तं यच्च नखं नखकर्म। यत् सदयं रतं तत् सर्वं विषहते सहते स्म। न इतरत् विपरीतम्। प्रचण्डमिति यावत्। तत् चुम्बनं नखं सुरतं वा न सहते स्म। नवो-

(५) खिन्नहस्तसदयोपगूहनम्। (६) दानमव्रणपदं नखस्य यत्।

रात्रिवृत्तमनुयोक्तुमुद्यतं
सा (७)विभातसमये सखीजनम्।
नाकरोदपकुतूहलं ह्रिया
शंसितुं (८)च हृदयेन तत्वरे॥ १०॥

दर्पणे च परिभोगदर्शिनी
पृष्ठतः प्रणयिनो निषेदुषः।
प्रेक्ष्य (९)बिम्बमनु बिम्बमात्मनः
कानि (१)कानि न चकार लज्जया॥ ११॥

ढात्वादिति हृदयम्। तदुक्तं रतिरहस्ये—"नात्यन्तमानुलोम्येन न चातिप्रतिलोमतः। सिद्धिं गच्छन्ति वा तस्मान्मध्येन साधयेदिति। नवोढाम्" इति॥ ९॥

रात्रीति॥ सा पार्वती विभातसमये प्रभातकाले रात्रिवृत्तम्। सुरतवृत्तान्तमित्यर्थः। अनुयोक्तुं प्रष्टुम्॥ "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः॥ उद्यतं प्रवृत्तं सखीजनं ह्रिया लज्जया अपकुतूहलं निराकाङ्क्षं न अकरोत्। न किञ्चिदाचष्ट इत्यर्थः। हृदयेन हृदा च शंसितुं तत्वरे त्वरिताभूत्। औत्सुक्यादिति भावः। त्वरासंभ्रमादीनामनुभावत्वादिति॥१०॥

दर्पण इति॥ किञ्चेति चार्थः। दर्पणे मुकुरे परिभोगः नखक्षतादिसम्भोगचिह्नं दर्शति पश्यतीति परिभोगदर्शिनी सा पार्वती पृष्ठतः पश्चाद्भागे निषेदुषः स्थितवतः॥ सदेः क्वसुः॥ प्रणयिनः प्रियस्य हरस्य बिम्बं प्रतिबिम्बम्। दर्पणे संक्रान्तमित्यर्थः। आत्मनः स्वस्य बिम्बमनु। प्रतिबिम्बस्य पृष्ठत इत्यर्थः॥ "अनुर्लक्षणे" इति कर्मप्रवचनीयत्वात् द्वितीया॥ प्रेक्ष्य लज्जया। स्वचापलप्राकट्यकृतयेत्यर्थः। कानि कानि यानि यानि भेदवाच्यानि। अङ्गसंवरणादिचेष्टितानीत्यर्थः॥

(७) प्रभातसमये। (८) तु। (९) बिम्बमुपबिम्बमात्मनः।
(१) कान्यपि।

नीलकण्ठपरिभुक्तयौवनां
तां विलोक्य जननी (२)समाश्वसीत्।
भर्तृवल्लभतया हि मानसीं
मातुरस्यति शुचं वधूजन:॥ १२॥

वासराणि कतिचित् कथञ्चन
स्थाणुना (३)पदमकार्यत प्रिया।
ज्ञातमन्मथरसा शनै:शनै:
सा मुमोच (४)रतिदु:खशीलताम्॥ १३॥

उक्तं च—"लज्जानुभावेन साचीकृता वर्णवैवर्ण्याधोमुखादिकृत्" इति॥ न चकार॥ ११॥

नीलकण्ठेति॥ नीलकण्ठेन परिभुक्तं यौवनं यस्या: सा तां तथोक्ताम्। प्रियेण भुक्तयौवनामित्यर्थ:। तां पार्वतीं विलोक्य जननी मेना समाश्वसीत्। सन्तुतोषेत्यर्थ:॥ श्वसिधातोर्लङ्। "श्रङ्गार्ग्यगालवयो:" इति विकल्पादडागम:॥ तथाहि। वधूजन: भर्तृवल्लभतया पतिवात्सल्येन मातु: मानसीं मनोभवां शुचं शोकम् अस्यति निरस्यति हि॥ "विपर्ययाद्विपर्ययश्च" इत्यर्थादवसेयं सामान्यैकविशेषणसमर्थनरूपोऽर्थान्तरन्यास: ॥ १२॥

सम्प्रति देव्या मुग्धावस्थातो मध्यमावस्थाप्राप्तिमाह—

वासराणीति॥ स्थाणुना शम्भुना॥ कर्त्रा॥ प्रिया पार्वती॥ कर्मभूता॥ कतिचिद्वासराणि। कैश्चिदहोभिरित्यर्थ:॥ अत्यन्तसंयोगे द्वितीया॥ कथञ्चन कृच्छ्रेण पदं पदप्रक्षेपम् अकार्यत कारिता। सुरतकर्मणीति शेष:॥ करोतेर्ण्यन्तात् कर्मणि लुङ्॥ "हृक्रोरन्यतरस्याम्" इत्यपि कर्तु: कर्मत्वे "ण्यन्ते कर्तुश्च कर्मणा" इत्यभिहितत्वं च॥ सा कृतपदा पार्वती

---

(२) समाश्वसत्। (३) रतमकारि चानया। (४) रत।

सस्वजे प्रियमुरो(५)निपीडिता
प्रार्थितं मुखमनेन नाहरत् ।
मेखलाप्रणयलोलतां गतं
हस्तमस्य शिथिलं रुरोध सा ॥ १४ ॥
भावसूचितमदृष्टविप्रियं
(६)चाटुमत् क्षणवियोगकातरम् ।

ज्ञातमन्मथरसा अनुभूतसुरतसुखास्वादा सती॥ "आस्वादे विरसमाहुः" इति शब्दानुशासने ॥ शनैःशनैः क्रमेण रतौ रतं दुःखशीलतां प्रतिकूलस्वभावतां मुमोच॥ "शीलं स्वभावे सद्वृत्ते" इत्यमरः ॥ मध्यमावस्थां प्राप्तेत्यर्थः ॥ १३ ॥

तुल्यलज्जास्मरत्वमेवाह—

सस्वज इति ॥ सा पार्वती उरोनिपीडिता उरसि गाढमाश्लिष्टा सती प्रियं सस्वजे। न तु निष्पन्दमास्तेत्यर्थः। अनेन स्मरातिशयः सूचितः। अनेन प्रियेण प्रार्थितं चुम्बनार्थं याचितम् ॥ "याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः" इति केशवः ॥ मुखं न अहरत् । मेखलायां प्रणयः परिचयः ॥ "प्रणयः स्यात्परिचये याच्ञायां सुहृदेऽपि च" इति यादवः ॥ तत्र लोलतां चञ्चलतां गतम् अस्य प्रियस्य हस्तं शिथिलं रुरोध न्यवारयत्। न तु निर्भरमिति भावः ॥ अत्र सहनप्रतीकाराभ्यां तुल्यलज्जास्मरत्वं व्यज्यते ॥ १४ ॥

अथ देव्याः प्रगल्भावस्थां दर्शयितुं तयोः समानरागित्वं तावदाह—

भावेति ॥ तयोः शिवयोः कैश्चित् कतिभिश्चिदेव दिवसैः ॥ भावसूचितं भावैः चेष्टाभिः कटाक्षनिक्षेपादिभिः सञ्जातम् अदृष्टम् विप्रियम् अप्रियाचरणं यत्र तत्तयोक्तं चाटूनि प्रियोक्तयः यस्मिन् सन्ति तत् चाटुमत् ॥ भूतार्थे मतुप् ॥ क्षणवियोगात्

(५) निपीड़नम्, निपीड़ितम् । (६) दाक्ष्यभाक्, चाटु ततचण ।

कैश्चिदेव (७) दिवसैस्तदा तयोः
प्रेम (८) रूढमितरेतराश्रयम् ॥ १५ ॥

तं यथात्मसदृशं वरं वधू-
रन्वरज्यत वरस्तथैव ताम्।
सागरादनपगा हि जाह्नवी
सोऽपि तन्मुखरसैक(९)निर्वृतिः ॥ १६ ॥

क्षणमात्रविरहादपि कातरं भीरु इतरेतराश्रयम् अन्योन्यविषयं प्रेम। प्रेमपदाभिलप्याङ्कुरावस्था भवतीत्यर्थः। रूढम् अभूत्। क्रमेणानुरागपदाभिलप्यां प्राप्तमित्यर्थः॥ तदेतत् सर्वं स्फुटीकृतं भूपालेन—"अङ्कुरपल्लवकलिकाप्रसूनफलभागियम्—" इत्यादिना। एका रतिरेव स्थायीभूता रसीभवति तस्याश्चाङ्कुरावस्थाभेदोपपत्तौ सा प्रेमादिपदैरभिलप्यते इत्यर्थः। "सप्रेमभेदरहितं यूनोर्यद्भावबन्धनं भावो रतौ राग एव स्वसंवेद्यदशाप्राप्तयावदाश्रयवृत्तिश्चेदनुरागः" इति मानादिलक्षणं विस्तरभयान्न लिख्यत इत्याकर एव द्रष्टव्यम्॥ १५॥

तमिति॥ वधूः आत्मसदृशं स्वानुरूपं तं वरं वोढारं प्रति यथा अन्वरज्यत अनुरक्ता अभूत्॥ रञ्जेर्दैवादिकात् कर्तरि लकारः। स्वरितत्वादात्मनेपदम्॥ तथैव वरोऽपि नवोढापि आत्मनः सदृक् ताम् आत्मसदृशम्॥ "त्यदादिषु दृशेरनालोचने कञ्च" इति चकारात् क्विप्प्रत्ययः। तां वधूं प्रति अन्वरज्यत। वध्वामनुरक्तोऽभूदित्यर्थः॥ "गत्यर्थाकर्मक—" इत्यादिना सकर्मकत्वम्॥ दृष्टान्तमाह—जाह्नवी गङ्गा सागरात् न अपगच्छतीति अनपगा अनपेता हि। सोऽपि सागरः तस्याः जाह्नव्याः मुखरसेन अग्रसलिलेन वक्त्रास्वादेन एका मुख्या निर्वृतिः आनन्दः यस्य स तथोक्तः॥ अत्र दृष्टान्तालङ्कारः। लक्षणं तूक्तम्। इत्थं समानानुरागकथनाद्रसाभासत्वं निरस्तम्। तदुक्तम्—"योषितो बहुसक्तिश्चेद्रसाभासः स उच्यते"।

(७) दिवसैस्तथा। (८) गूढम्। (९) हर्त्तभाक्।

शिष्यतां निधुवनोपदेशिनः
शङ्करस्य रहसि प्रपन्नया।
शिक्षितं युवतिनैपुणं तया
(१)यत्तदेव गुरुदक्षिणीकृतम् ॥ १७ ॥

दष्टमुक्तमधरोष्ठमम्बिका
वेदनाविधुतहस्तपल्लवा।
शीतलेन निरवापयत् क्षणं
मौलिचन्द्रशकलेन शूलिनः ॥ १८ ॥

कविनाप्युक्तं मालविकायाम्—"अनातुरोत्कं प्रति विप्रसिध्यता समीपगेनापि रतिर्न मां प्रति। परस्परप्राप्तिनिराशयोर्वा शरीरनाशोऽपि समानरागयोः" इति ॥ १६ ॥

अथ देव्याः प्रगल्भावस्थामाश्रित्य सम्भोगमाह—

शिष्यतामिति ॥ रहसि एकान्ते निधुवनमुपदिशतीति निधुवनोपदेशिनः सुरतविद्यागुरोः। "व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्" इत्यमरः ॥ शङ्करस्य शिष्यतां प्रपन्नया प्राप्तया तया पार्वत्या यत् युवतिनैपुणं युवतिजनोचितं नैपुणम्। सुरतकौशलमित्यर्थः। शिक्षितम् अभ्यस्तम्। आचरितमित्यर्थः। तदेव गुरुदक्षिणीकृतम्। यथोपदेशकरणाद्दक्षिणासममभूदित्यर्थः ॥ अनेन कृतप्रतिकृतं सूच्यते ॥ १७ ॥

दष्टेति ॥ अम्बिका पार्वती दष्टश्चासौ मुक्तश्च तं दष्टमुक्तम्। "पूर्वकाल—" इत्यादिना समासः ॥ अधरोष्ठं वेदनया विधुतौ कम्पितौ हस्तपल्लवौ पाणिपल्लवौ यस्याः सा तथोक्ता सती शीतलेन शूलिनः मौलिचन्द्रशकलेन क्षणं निरवापयत्। शीतलोपचारेण निर्व्यथमकरोदिति विश्रब्धोक्तिः। निवातेर्धातोर्ण्यन्तात् "अर्तिह्री—" इत्यादिना पुगागमः। अत्राधरपीडनात् सुखेऽपि दुःखवदुपचारात् कुट्टिमनामान-

(१) तत्तदेव गुरुदक्षिणीकृतम्।

चुम्बनादलकचूर्णदूषितं
शङ्करोऽपि नयनं ललाटजम्।
उच्छ्वसत्कमलगन्धये ददौ
पार्वतीवदनगन्धवाहिने॥ १९ ॥

एवमिन्द्रियसुखस्य (२)वर्त्मनः
सेवनादनुगृहीतमन्मथः।
शैलराजभवने सहोमया
(३)मासमात्रमवसद्वृषध्वजः॥२० ॥

सोऽनुमान्य हिमवन्तमात्मभू-
रात्मजाविरहदुःख(४)पीडितम्।

भाव उक्तः। तदुक्तम्—"केशाधरादिसंग्रहणे मोदमानापि मानसे दुःखितेव बहिः कुप्येत्तत् कुट्टिमम्" इति॥ १८॥

चुम्बनादिति॥ अथ शङ्करोऽपि चुम्बनात् चुम्बनार्थितः अलकचूर्णेन दूषितम् उपहतं ललाटजं नयनम् उच्छ्वसत्कमलगन्धये विकचारविन्दगन्धधारिणे॥ "उपमानाच्च" इतीकारः॥ पार्वत्याः वदनगन्धवाहिने। फूत्कारमारुतायेत्यर्थः। ददौ। रजोनिःसारणार्थं तदाभिमुख्येन स्थापितवानित्यर्थः॥ एतेन देव्याः प्रियवशंवदत्वमुक्तम्। अत्र हरचक्षुष्यलकचूर्णकथनात् देव्या उपरिभावः सूचितः॥ १९॥

एवमिति॥ वृषध्वजः हरः एवम् उक्तरीत्या इन्द्रियाणां सुखस्य अनुकूलस्य वर्त्मनः मार्गस्य। स्त्रीप्रसङ्गस्येत्यर्थः। सेवनात् परिभोगात् अनुगृहीतमन्मथः पुनरुज्जीवितमदनः सन्। उमया सह शैलराजभवने हिमवद्गृहे मासमात्रम् अवसत्॥ अत्यन्तसंयोगे द्वितीया॥ मासमात्रमिति वधूवशीकरणकालक्लृप्तिः प्रदर्शिता॥ २०॥

(२) चात्मनः। (३) मासमेकम्। (४) खेदितम्।

तत्र तत्र विजहार (५)सञ्चरन्
अप्रमेयगतिना ककुद्मता ॥ २१ ॥

मेरुमेत्य (६)मरुदाशुवाहनः
पार्वतीस्तनपुरस्कृतः कृती ।
हैमपल्लवविभङ्ग(७)संस्तरान्
अन्वभूत् सुरततत्परः क्षपाम् ॥ २२ ॥

(८)पद्मनाभवलयाङ्किताश्मसु
प्राप्नवत्स्वमृतविप्रुषो नवाः ।
मन्दरस्य कटकेषु चावसत्
पार्वतीवदनपद्मषट्पदः ॥ २३ ॥

स इति ॥ स आत्मभूः शिवः आत्मजायाः दुहितुः विरहदुःखेन पीडितं हिमवन्तम् अनुमान्य अनुमतं ज्ञात्वा अप्रमेयगतिना अपरिच्छेद्यगतिना ककुद्मता वृषेण सञ्चरन् सञ्चरमाणः तत्र तत्र नानादेशेषु विजहार ॥ २१ ॥

मेरुमिति ॥ मरुदाशुवाहनः पवनजवनवाहनः पार्वतीस्तनाभ्यां पुरस्कृतः । पार्वतीपुरोगतयाश्लिष्ट इत्यर्थः । अन्वभूदित्यनेनान्वयः । कृती कुशली हरः मेरुम् एत्य हैमपल्लवानां विभङ्गाः खण्डाः ते एव संस्तरः तल्पं यस्यां तां तथोक्तां क्षपां रात्रिं सुरततत्परः सुरतासक्तः सन् । अन्वभूत् ॥ २२ ॥

पद्मनाभेति ॥ पार्वतीवदनपद्मे षट्पदः । प्रियामुखरसास्वादलोल इत्यर्थः । सः हरः । पद्मं नाभिः यस्य स पद्मनाभः विष्णुः ॥ "अच्प्रत्यन्वयपूर्वात्सामलोम्नः" इत्यत्राजिति योगविभागात्समासान्तः ॥ तस्य वलयैः अङ्किताः अश्मानः येषां

---

(५) संपतन् । (६) मरुदाशुगोचकः ।
(७) संस्तराम् । (८) पद्मनाभचरण ।

(१)रावणध्वनितभीतया तया
(२)कण्ठसक्तमृदुबाहुबन्धनः।
एकपिङ्गलगिरौ जगद्गुरुः
निर्विवेश विशदाः शशिप्रभाः ॥ २४ ॥

तस्य जातु मलयस्थलीरतेः
(३)धूतचन्दनलतः प्रियाक्लमम्।
आचचाम (४)सलवङ्गकेसर-
श्चाटुकार इव दक्षिणानिलः ॥ २५ ॥

तेषु। अमृतमथनसमये इति भावः। तथा नवाः प्रत्यग्राः अमृतविप्रुषः सुधाबिन्दून् प्राशवत्, मन्दरस्य मन्थाचलस्य कटकेषु नितम्बेषु च अवसत्॥ एतेन मन्दरस्यानेकाद्भुताधारत्वान्मनोविनोदकत्वमुक्तम्॥ २३॥

रावणेति॥ जगद्गुरुः। विश्रवसोऽपत्यं रावणः दशकण्ठः। "तस्यापत्यम्" इति अण्प्रत्ययः। वृत्तिविषये विश्रवस्शब्दस्य रवणादेशः॥ रावणस्य ध्वनितात् कैलासोत्पाटनसमयक्ष्वेडितात् भीतया तया पार्वत्या कण्ठसक्ताभ्यां मृदुबाहुभ्यां बन्धनं यस्य स तथाभूतः। एकनेत्रत्वात् एकपिङ्गलः कुवेरः तस्य गिरौ कैलासे विशदाः निर्मलाः शशिप्रभाः चन्द्रिकाः निर्विवेश बुभुजे॥ "निर्वेशो भृतिभोगयोः" इत्यमरः॥ २४॥

तस्येति॥ जातु कदाचित् धूतचन्दनलतः कम्पितपटीरशाखः॥ "समे शाखालते" इत्यमरः॥ सह लवङ्गस्य केसरैः सलवङ्गकेसरः॥ "लवङ्गं देवकुसुमम्" इत्यमरः॥ विशेषणाभ्यां शैत्यसौरभ्ये दर्शिते। दक्षिणानिलः मलयमारुतः। चाटुकारः चाटुप्रयोगः। प्रियवाद इति यावत्॥ भावे घञ्॥ स इव मलयस्थलीषु मलयाचलप्रदेशेषु रतिः सुरतं यस्य तथोक्तस्य।

(१) रावणस्वनितभीतया। (२) कण्ठसक्तदृढबाहुबन्धनः।
(३) धूतचन्दनवनः। (४) सतुषारशीतलः।

हेमतामरसताडितप्रिया
तत्कराम्बुविनिमीलितेक्षणा ।
(५)खे व्यगाहत तरङ्गिणीमुमा
(६)मीनपङ्क्तिपुनरुक्तमेखला ॥ २६ ॥

तां पुलोमतनयालकोचितैः
पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनः
सस्पृहं (७)सुरवधूभिरीक्षितः ॥ २७ ॥

तत्र रममाणस्येत्यर्थः ॥ तस्य शिवस्य प्रियाक्लमं प्रियायाः सुरतश्रमम् आचचाम जहार। यथा लोके महानपि श्रम एकेन प्रियवादेनापैति तद्वद्दक्षिणमारुतेनाप्यस्य सकलोऽपि सुरतक्लमो हृत इत्यर्थः ॥ २५ ॥

हेमेति ॥ उमा गौरी हेमतामरसेन कनककमलेन ताडितः प्रियः यया सा। तेन उत्थितस्य प्रियस्य कराम्बुना कराक्षिप्ताम्भसा विनिमीलितेक्षणा मुकुलिताक्षी। मीनपङ्क्त्या पुनरुक्ता द्विगुणिता मेखला यस्याः सा तथाभूता सती खे तरङ्गिणीं व्यगाहत। तत्र तत्र जलक्रीडामकरोदित्यर्थः ॥ २६ ॥

तामिति ॥ अयुग्मानि लोचनानि यस्य सः अयुग्मलोचनः त्र्यम्बकः ॥ युग्मशब्दो विशेष्यनिघ्नोऽप्यास्ते। "तस्मिन् युग्मासु संविशेत्" "युग्मान्दैवे यथाशक्ति पित्र्ये युग्मांस्तथैव च" इत्यादिप्रयोगदर्शनात् ॥ नन्दने नन्दनोद्याने पुलोमतनया शची ॥ "पुलोम्नस्तु शची सुता" इति हरिवंशे ॥ तस्याः अलकानाम् उचितैः पारिजातकुसुमैः तां प्रसाधयन् अलङ्कुर्वन्

---

(५) सा। (६) मीनपङ्क्तिपुनरुक्तमेखलाम्।
(७) सुरवधूभिरैक्ष्यत, सुरवधूनिरीक्षितः।

इत्यभौममनुभूय शङ्करः
पार्थिवं च (८)वनितासखः सुखम् ।
लोहितायति कदाचिदातपे
(९)गन्धमादनगिरिं व्यगाहत ॥ २८ ॥

तत्र काञ्चनशिलातलाश्रयो
नेत्रगम्यमवलोक्य भास्करम् ।
दक्षिणेतरभुजव्यपाश्रयां
व्याजहार सहधर्मचारिणीम् ॥ २९ ॥

चिरं सुरवधूभिः सस्पृहम् ईक्षितः । केन वा पुण्येनायं लभ्यते इति साभिलाषदृष्ट इत्यर्थः ॥ अत्र देवस्यानुकूलनायकत्वं देव्याः स्वाधीनपतिकात्वं चावसेयम् ॥ २७ ॥

इतीति ॥ इति इत्थं शङ्करः वनितासखः सन् । भूमौ भवं भौमम् । न भौमम् अभौमं दिव्यं पृथिव्यां भवं पार्थिवं च सुखम् अनुभूय कदाचित् आतपे लोहितायति लोहितवर्णे भवति । अस्तङ्गते सवितरीत्यर्थः ॥ "लोहितादिडाजभ्यः क्यष्" इति क्यष्प्रत्ययः ॥ गन्धमादनगिरिं व्यगाहत । पर्वतमुद्दिश्य निवृत्त इत्यर्थः ॥ उद्देशक्रियां प्रति गिरेः कर्मत्वम् । यथाह भाष्यकारः — — — — — ॥ २८ ॥

तत्रेति ॥ तत्र गन्धमादने काञ्चनविकारः काञ्चनं सौवर्णं यच्च तत् शिलातलं तत् आश्रयः यस्य स भगवान् नेत्रगम्यं चायन्तनम् । अर्थात् दर्शनयोग्यम् । भास्करं सूर्यम् ॥ "दिवाविभा—" इत्यादिना टप्रत्ययः ॥ अवलोक्य दक्षिणेतरभुजः सव्यबाहुः व्यपाश्रयः यस्याः ताम् । निजवामभुजमवष्टभ्योपविष्टामित्यर्थः । सह धर्मं चरतीति सहधर्मचारिणीं पत्नीं व्याजहार जगाद ॥ २९ ॥

---

(८) दयितासखः । (९) गन्धमादनवनम् ।

(१)पद्मकान्तिमरुणान्त्रिभागयो:
(२)संक्रमय्य तव नेत्रयोरिव।
संचये जगदिव प्रजेश्वर:
संहरत्यहरसावहर्पति: ॥ ३० ॥

सीकरव्यतिकरं मरीचिभि:
(३)दूरयत्यवनते विवस्वति।
इन्द्रचापपरिवेषशून्यतां
(४)निर्झरास्तव पितुर्व्रजन्त्यमी ॥ ३१ ॥

पद्मकान्तिमिति॥ असौ अह्नां पति: अहर्पति: सूर्य:॥ अहरादीनाम् "पत्यादिषूपसंख्यानम्" इति रेफादेश:॥ पद्मकान्तिं पद्मशोभाम्। तृतीयो भाग: त्रिभाग:॥ वृत्तिविषये पूरणार्थत्वं संख्याया इत्युक्तम्॥ अरुण: त्रिभाग: ययो: तयो:। अरुणोपान्तयोरिति भाग्यलक्षणोक्ति:। तव नेत्रयो: संक्रमय्येव। तदानीं पद्मानामविकासान्नेत्रयोस्तु विकासाच्चेयमुत्प्रेक्षा। संचये प्रलयकाले प्रजेश्वर: प्रजापति: जगदिव अह: दिवसं संहरति। अस्तं गच्छतीत्यर्थ:॥ ३०॥

सीकरेति॥ विवस्तेजोऽस्यास्तीति विवस्वान् तस्मिन् विवस्वति सूर्ये मरीचिभि:॥ सहार्थविवक्षायां तृतीयात एव विनापि सहशब्देन तृतीया॥ सीकरव्यतिकरं पय:किरणसम्पर्कं दूरयति दूरीकुर्वति सति। हे अवनते पार्वति। अमी तव पितु: भर्वात्पितु: हिमवत: निर्झरा: प्रवाहा:॥ "प्रवाहो निर्झरो झर:" इत्यमर:॥ इन्द्रचापं नानावर्णप्रभासमूह: तस्य परिवेषेण परिवेष्टनेन शून्यतां व्रजन्ति। अर्ककिरणसम्पर्कजातत्वादैन्द्रचापस्य तन्निवृत्त्या निवृत्तिरित्यर्थ:॥ ३१॥

---

(१) पद्मकान्तिमरुणान्तभागयो:। (२) सङ्क्रमय्य।
(३) धूनयति। (४) निर्झरा: प्रसवितुर्व्रजन्ति तं।

(५)दष्टतामरसकेसरत्यजोः
(६)क्रन्दतोर्विपरिवृत्तकण्ठयोः।
(७)निघ्नयोः सरसि चक्रवाकयोः
अल्पमन्तरमनल्पतां गतम् ॥ ३२ ॥

स्थानमाह्निकमपास्य दन्तिनः
सल्लकीविटपभङ्गवासितम्।
आविभातचरणाय गृह्णते
वारि वारिरुहबद्धषट्पदम् ॥ ३३ ॥

दष्टेति ॥ दष्टम् अर्धजग्धं तामरसकेसरं पद्मकिञ्जल्कम्। मुखद्वयेनैकमिति भावः। तत् त्यजतः इति तयोस्तयोः क्रन्दतोः कूजतोः विपरिवृत्तकण्ठयोः। परस्परालोकनार्थं वक्रीकृतग्रीवयोरित्यर्थः। निघ्नयोः दैवाधीनयोः ॥ "अधीनो निघ्न आयत्ते" इत्यमरः ॥ चक्रवाकी च चक्रवाकश्च तयोः ॥ "पुमान् स्त्रिया" इत्येकशेषः ॥ सरसि अल्पम् अन्तरं व्यवधानम् अनल्पताम् आधिक्यं गतम्। सरसि वियुज्यमानयोर्महद्व्यवधानमभूदित्यर्थः ॥ ३२ ॥

स्थानमिति ॥ दन्तिनः गजाः। अह्नि भवम् आह्निकम् ॥ "कालाट्ठञ्" ॥ स्थानम् अपास्य विहाय सल्लकी गजप्रिया काचिल्लता ॥ "सल्लकी स्याद्गजप्रिया" इति हलायुधः ॥ तस्याः विटपभङ्गैः पल्लवखण्डैः वासितं सुरभितं वारिरुहेषु बद्धाः सङ्गताः षट्पदाः यस्मिन् तत् वारि जलम् आविभातं प्रभातमारभ्य यत् चरणं तस्मै। तत्पर्याप्तमित्यर्थः। गृह्णते उपाददते। गजा हि भुक्तिपर्याप्तजलं सकृदेव सायं पिबन्तीति प्रसिद्धम् ॥ ३३ ॥

---

(५) दष्टतामरसकेसरस्रजोः। (६) क्रन्दतोर्विरहदीनकण्ठयोः।
(७) भिन्नयोः।

पश्य पश्चिमदिगन्तलम्बिना
निर्मितं (८)मितकथे विवस्वता ।
(९)दीर्घया प्रतिमया सरोम्भसां
तापनीयमिव सेतुबन्धनम् ॥ ३४ ॥

उत्तरन्ति विनिकीर्य पल्वलं
गाढपङ्कमतिवाहितातपाः ।
दंष्ट्रिणो वनवराहयूथपा
दष्टभङ्गुरविसाङ्कुरा इव ॥ ३५ ॥

पश्येति ॥ हे मितकथे हे मितभाषिणि । एतेन स्वस्य तत्संलापने लौल्यं सूचयति । पश्चिमदिगन्तलम्बिना विवस्वता ॥ कर्त्रा ॥ दीर्घया दिगन्तलम्बित्वादायतया प्रतिमया निजप्रतिबिम्बेन ॥ "प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्" इत्यमरः ॥ सरोऽम्भसां तपनीयविकारः तापनीयं हिरण्मयम् ॥ "तपनीयं शातकुम्भम्" इत्यमरः ॥ सेतुबन्धनं निर्मितम् ॥ इवेत्युत्प्रेक्षा ॥ अस्तमयसमये सरःपारावारिणामरुणमायतमर्कप्रतिबिम्बं हिरण्मयसेतुरिव दृश्यते इत्यर्थः । पश्येति वाक्यार्थः कर्म ॥ ३४ ॥

उत्तरन्तीति ॥ दंष्ट्रिणः दंष्ट्रावन्तः ॥ व्रीह्यादित्वादिनिः । अतएव दष्टाः भङ्गुराः कुटिलाः विसाङ्कुराः मृणालाङ्कुराः यैः ते ते इव स्थिताः वनवराहाणां यूथपाः ॥ "यूथनाथस्तु यूथपः" इत्यमरः ॥ गाढपङ्कम् अतिपङ्किलं पल्वलम् अल्पसरः । "वेशन्तः पल्वलं चाल्पसरः" इत्यमरः ॥ विनिकीर्य विक्षिप्य अतिवाहितातपाः उत्तरन्ति पल्वलात् निर्गच्छन्ति ॥ ३५ ॥

---

(८) कथमिदम् । (९) लम्बया ।

एष वृक्षशिखरे कृतास्पदः
(१)जातरूपरसगौरमण्डलः।
ह्रीयमानमहरत्ययातपं
पीवरोरु पिबतीव बर्हिणः॥ ३६॥
पूर्वभागतिमिरप्रवृत्तिभिः
(२)व्यक्तपङ्कमिव जातमेकतः।
खं हृतातपजलं विवस्वता
भाति किञ्चिदिव शेषवत्सरः॥ ३७॥
(३)आविशद्भिरुटजाङ्गणं मृगैः
मूलसेकसरसैश्च वृक्षकैः।

एष इति॥ हे पीवरोरु। एष वृक्षशिखरे वृक्षाग्रे कृतास्पदः कृतस्थितिः जातरूपरसगौरमण्डलः आतपरूपत्वात्काञ्चनद्रववत् अरुणबर्हमण्डलः॥ "चामीकरं जातरूपं महारजतकाञ्चने" इत्यमरः॥ बर्हमस्यास्तीति बर्हिणः मयूरः॥ "फलबर्हाभ्यामिनज्वक्तव्यः"॥ ह्रीयमानं क्षीयमाणम् अहरत्ययातपं दिनान्तातपं पिबतीव। कथमन्यथा क्षीयमाणत्वमिति भावः॥ ३६॥

पूर्वभागेति॥ पूर्वभागे प्राचीमूले तिमिरप्रवृत्तिभिर्ध्वान्तप्रसरैरेकतः व्यक्तपङ्कं स्फुटपङ्कमिव जातं तथा विवस्वता हृतम् आतपः एव जलं यस्य तत्तथोक्तं खम् आकाशं किञ्चित् ईषत् शेषोऽस्यास्तीति शेषवत् शुष्कं सरः इव भाति॥ ३७॥

आविशद्भिरिति॥ उटजाङ्गणं पर्णशालाङ्गणम् आविशद्भिः। प्रविशद्भिरित्यर्थः॥ "पर्णशालोटजोऽस्त्रियाम्" इत्य-

(१) जातरूपरसगौरमण्डलम्। (२) लग्नपङ्कमिव।
(३) आविशद्भिरुटजाङ्गणे।

आश्रमाः (४)प्रविशदग्निधेनवः
बिभ्रति श्रियमुदीरिताग्नयः ॥ ३८ ॥

बद्धकोशमपि तिष्ठति क्षणं
सावशेषविवरं कुशेशयम् ।
षट्पदाय वसतिं ग्रहीष्यते
प्रीतिपूर्वमिव (५)दातुमन्तरम् ॥ ३९ ॥

(६)दूरलग्नपरिमेयरश्मिना
(७)वारुणी दिगरुणेन भानुना ।
भाति केसरवतेव मण्डिता
(८)बन्धुजीवतिलकेन कन्यका ॥ ४० ॥

मरः ॥ उपान्वध्याङ्वसः" इति कर्मत्वम् ॥ मृगैः । तथा मूलान सेकेन सेचनेन सरसैः सद्रवैः वृक्षकैः च उपलक्षिताः ॥ अल्पा कप्रत्ययः ॥ प्रविशन्त्यः वनादागच्छन्त्यः अग्निधेनवः अग्निहो त्रार्था धेनवः उदीरिताग्नयश्च आश्रमाः श्रियं बिभ्रति ॥३८॥

बद्धकोशमिति ॥ बद्धकोशमपि । मुकुलितमपीत्यर्थः कुशेशयम् ॥ कर्त्त ॥ "शतपत्रं कुशेशयम्" इत्यमरः ॥ वसति ग्रहीष्यते । स्थितिं करिष्यते इत्यर्थः ॥ "लृटः सद्वा" इति शत प्रत्ययः ॥ षट्पदाय प्रीतिपूर्वम् अन्तरम् अवकाशं दातुमि क्षणं सावशेषविवरं तिष्ठति ॥ ३९ ॥॥

दूरलग्नेति ॥ वारुणी दिक् प्रतीची दूरं लग्नाः अतएव परिमेयाः अल्पावशिष्टाः रश्मयः यस्य तेन तथोक्तेन अरुणे लोहितवर्णेन भानुना केसरवता किञ्जल्कवता बन्धुजीवं बन्धु

(४) प्रविशदग्रधेनवः । (५) दातुमुत्तरम् ।
(६) दूरमग्नपरिमेयरश्मिना । (७) वारुणा ।
(८) बन्धुजीवकुसुमेन ।

सामभिः सहचराः सहस्रशः
(८)स्यन्दनाश्वहृदयङ्गम(१)स्वनैः।
भानुमग्निपरिकीर्णतेजसं
संस्तुवन्ति किरणोष्मपायिनः॥ ४१॥

(२)सोऽयमानतशिरोधरैर्हयैः
कर्णचामरविघट्टितेक्षणैः।
अस्तमेति युगभुग्नकेसरैः
सन्निधाय दिवसं महोदधौ॥ ४२॥

जीवककुसुमम्॥ "बन्धूको बन्धुजीवकः" इत्यमरः॥ तदेव तिलकं तेन मण्डिता अलङ्कृता कन्यकेव भाति॥ ४०॥

सामभिरिति॥ किरणोष्मपायिनः किरणोष्माणं पिबन्तीति तथोक्ताः। तथाहारा इत्यर्थः। चरन्तीति चराः॥ पचाद्यच्॥ सहभूताः चराः सहचराः वालखिल्यप्रभृतयो महर्षयः अग्नौ परिकीर्णं तेजः यस्य तत्तथोक्तम्॥ "अग्निर्वादित्यः सायं प्रसवति" इति श्रुतेः॥ भानुम्॥ हृदयं गच्छन्तीति हृदयङ्गमाः मनोरमाः॥ गमेः सुपीति वक्तव्यात् खच्॥ स्यन्दनाश्वानां हृदयङ्गमाः स्वनाः येषां तैः सामभिः सामवेदैः सहस्रशः संस्तुवन्ति॥ "सामवेदेनास्तमये गीयते" इति श्रुतेः॥ ४१॥

स इति॥ सोऽयं भानुः दिवसं महोदधौ सन्निधाय। निधायेत्यर्थः। दिवसस्यादर्शनादियमुत्प्रेक्षा। आनतशिरोधरैः गगनावतरणात् नम्रकन्धरैः अतएव कर्णचामरविघट्टितेक्षणैः युगभुग्नकेसरैः कुटिलितस्कन्धरोमभिः हयैः अस्तम् एति॥ "अस्तस्तु चरमक्ष्माभृत्" इत्यमरः॥ ४२॥

---

(८) वन्दनैव, स्यन्दनस्य। (१) स्वरैः।
(२) सोऽयमानतशिरोधरैः।

खं प्रसुप्तमिव संस्थिते रवौ
तेजसो महत ईदृशी गतिः।
तत् प्रकाशयति (३)यावदुत्थितं
मीलनाय खलु (४)तावता च्युतम् ॥ ४३ ॥
सन्ध्ययाप्यनुगतं (५)रवेर्वपुः
(६)वन्द्यमस्तशिखरे समर्पितम्।
(७)प्राक् तथेयमुदये पुरस्कृता
नानुयास्यति कथं तमापदि ॥ ४४ ॥

खमिति ॥ रवौ संस्थिते अस्तमिते सति खं व्योम प्रसुप्तमिव निःप्रकाशत्वात् निद्रितमिव। स्थितमित्यर्थः। युज्यते चैतदित्याह—महतः तेजसः ईदृशी वक्ष्यमाणप्रकारा गतिः। स्वभाव इत्यर्थः ॥ तां गतिमेवाह—तदिति ॥ तत् महत्तेजः उत्थितं सत् यावत्। स्थानमिति शेषः। प्रकाशयति। तावता अधश्च्युतं सत्। तत्स्थानादिति शेषः। मीलनाय सङ्कोचाय खलु भवति। यत्र स्थाने तेजस्तिष्ठति तत्प्रकाशते इति स्थितिः। यतो गच्छति न तत्प्रकाशते। अतः सूर्यापाये खं प्रसुप्तमिवेति युक्तोक्तिश्चेति भावः। अस्यार्थस्य तेजोमात्रसाधारण्येऽपि महति स्फुटमिति महद्ग्रहणं कृतम् ॥ ४३ ॥

सन्ध्ययेति ॥ सन्ध्ययापि अस्तशिखरे अस्ताद्रिशृङ्गे समर्पितं निक्षिप्तं वन्द्यं रवेर्वपुः अनुगतम् अन्वगामि। असंयुतं रविमन्वगादिति भावः। युक्तं चैतदित्याह—प्राक् पूर्वम् उदये तथा तेन प्रकारेण पुरस्कृता अग्रतः कृता। पूजिता चेति गम्यते। प्रातः सूर्योदयात्प्रागेव सन्ध्यागम इति हि प्रसिद्धम्।

---

(३) यावदुद्गतम्। (४) तावतश्च्युतम्। (५) रवेः पदम्। (६) धर्ममस्तशिखरे। (७) येन पूर्वमुदये।

रक्तपीतकपिशाः पयोमुचां
कोटयः कुटिलकेशि भान्त्यमूः।
द्रक्ष्यसि त्वमिति (८)सान्ध्यवेलया
(९)वर्तिकाभिरिव साधुवर्तिताः॥ ४५॥

सिंहकेसरसटासु भूभृता
पल्लवप्रसविषु द्रुमेषु च।
पश्य (२)धातुशिखरेषु चात्मना
संविभक्तमिव सान्ध्यमातपम्॥ ४६॥

इयं सन्ध्या तं रविम् आपदि अस्तसमये कथं नानुयास्यति।
अनुयास्यत्येवेत्यर्थः॥ सम्पदसम्पदोस्तुल्यरूपमेव साधूनामिति
भावः॥ ४४॥

रक्तेति॥ हे कुटिलकेशि॥ "स्वाङ्गाच्चोपसर्जनादसंयोगो-
पधात्" इति ङीप्॥ अमूः पुरोगताः रक्ताः पीताः कपिशाश्च
रक्तपीतकपिशाः। नानावर्णा इत्यर्थः॥ चार्थे द्वन्द्वः। न तु
"वर्णो वर्णेन" इति तत्पुरुषः सामानाधिकरण्याभावात्॥
पयोमुचां कोटयः अग्रयः॥ "स्यात्कोटिरश्री चापाग्रे संख्या-
भेदप्रकर्षयोः" इति विश्वः॥ त्वं द्रक्ष्यसि इति हेतोः अनया
सान्ध्यवेलया। सन्ध्ययेत्यर्थः॥ "सन्धिवेलया" इति क्वचित्पाठः॥
वर्तिकाभिः चित्रशलाकाभिः साधुवर्तिताः उत्पादिताश्च भान्ति
॥ ४५॥

सिंहेति॥ सिंहानां केसराणि स्कन्धरोमाणि तान्येव सटाः
सटाः तासु॥ "सटा जटा केसरयोः" इति विश्वः॥ अथवा सटा-

(८) सन्ध्यमानया। (९) वर्णिकाभिरिव साधुमण्डिताः।
(२) धातुशिखरेषु चात्मनः, चास्तशिखरे विवस्वता, धातु-
शिखरेषु भानुना।

(३)पार्ष्णिमुक्तवसुधास्तपस्विनः
(४)पावनाम्बुरचिताञ्जलिक्रियाः ।
ब्रह्म (५)गूढमभिसन्ध्यमादृताः
(६)शुद्धये विधिविदो गृणन्त्यमी ॥ ४७ ॥

तन्मुहूर्तमनुमन्तुमर्हसि
प्रस्तुताय नियमाय मामपि ।
त्वां विनोदनिपुणः सखीजनः
वल्गुवादिनि विनोदयिष्यति ॥ ४८ ॥

शब्देन समूहो लक्ष्यतेऽन्यथा पौनरुक्त्यात् ॥ पल्लवप्रसवि पल्लवमत्सु द्रुमेषु च तथा धातुशिखरेषु च भूभृता अस्ताद्रिणा आत्मना स्वयमेव संविभक्तमिव स्थितं सन्ध्यायां भवं सान्ध्यम् आतपं यस्य तथा पश्य । आरुण्यमरुणद्रव्येषु भूयिष्ठमुपलभ्यते इति भावः ॥ ४६ ॥

पार्ष्णीति ॥ पार्ष्णयः गुल्फाधोभागाः तैः मुक्तवसुधाः त्यक्तभूतलाः । पादाग्रस्थिता इत्यर्थः ॥ "गोशृङ्गमात्रमुद्धृत्य मुक्तपार्ष्णिः क्षिपेज्जलम्" इति स्मरणात् ॥ पावनैः अम्बुभिः रचिताञ्जलिक्रियाः । विहितार्घ्यप्रक्षेपा इत्यर्थः । विधिविदः शास्त्रज्ञा इत्यर्थः । अमी तपस्विनः आदृताः आदरवन्तः । श्रद्दधाना इत्यर्थः ॥ कर्तरि क्तः ॥ अभिसन्ध्यं सन्ध्यामभि । "लक्षणेनाभिप्रती आभिमुख्ये" इत्यव्ययीभावः ॥ शुद्धये शुद्ध्यर्थं ब्रह्म गायत्रीं गूढम् उपांशु गृणन्ति जपन्ति । "प्रत्यगा तारकोदयात्" इति स्मरणात् ॥ ४७ ॥

तदिति ॥ तत्तस्मात्कारणात् मामपि प्रस्तुताय नियम

---

(३) अद्रिराजतनये तपस्विनः ।
(४) पावनाम्बुविहिताञ्जलिक्रियाः ।
(५) गूढमभिसान्ध्यम् । (६) सिद्धये ।

निर्विभुज्य दशनच्छदं ततः
वाचि भर्तुरवधीरणापरा ।
शैलराजतनया समीपगा-
माललाप (७)विजयामहेतुकम् ॥ ४९ ॥

ईश्वरोऽपि दिवसात्ययोचितं
मन्त्रपूर्व(८)मनुतस्थिवान् विधिम् ।
पार्वतीमवचनामसूयया
(९)प्रत्युपेत्य पुनराह सस्मितम् ॥ ५० ॥

प्रकृतसन्ध्याविधये मुहूर्तम् अनुमन्तुम् अर्हसि । हे वल्गुवादिनि मञ्जुभाषिणि । विनोदनिपुणः कालाक्षेपचतुरः सखीजनः त्वां विनोदयिष्यति ॥ विनोदशब्दात्तत्करोतीति णिच् ॥ ४८ ॥

निर्विभुज्येति ॥ ततः भर्तुर्वाचि वचने अवधीरणापरा अवज्ञापरा शैलराजतनया पार्वती । छाद्यते अनेनेति छदः ॥ "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्ययः ॥ दशनच्छदं निर्विभुज्य कुटिलीकृत्य समीपगां विजयां विजयाख्यां सखीम् अहेतुकं निर्निमित्तम् आललाप । न तु रोषाद्भर्तुरुत्तरं ददावित्यर्थः ॥ ४९ ॥

ईश्वर इति ॥ ईश्वरोऽपि दिवसात्ययोचितं सायंकालोचितं विधिं सन्ध्यावन्दनकृत्यं मन्त्रपूर्वम् अनुतस्थिवान् अनुष्ठितवान् ॥ तिष्ठतेः क्वसुप्रत्ययः ॥ असूयया सन्ध्यावन्दनजनितासूयया अवचनाम् अभाषमाणां पार्वतीं पुनः प्रत्युपेत्य सस्मितम् आह ॥ ५० ॥

---

(७) विजयां सहेतुकम् । (८) अनुतिष्ठवान् । (९) सोऽभ्युपेत्य ।

मुञ्च कोपमनिमित्तकोपने
सन्ध्यया (६)प्रणमितोऽस्मि नान्यथा ।
किं न वेत्सि सहधर्मचारिणं
चक्रवाकसमवृत्तिमात्मनः ॥ ५१ ॥
निर्मितेषु पितृषु स्वयम्भुवा
या तनुः सुतनु (१)पूर्वमुज्झिता ।
सेयमस्तमुदयं च (२)सेव्यते
तेन मानिनि ममात्र गौरवम् ॥ ५२ ॥

मुञ्चेति ॥ हे अनिमित्तकोपने अकारणकोपिनि ॥ नन्द्यादित्वात् कर्तरि ल्युः ॥ कोपं मानं मुञ्च । सन्ध्यया प्रणमितोऽस्मि प्रणामं कारितोऽस्मि । अन्यथा प्रकारान्तरं न । धर्माभिसन्धायिनं मां कामाभिसन्धायिनं मा मन्यस्वेत्यर्थः । आत्मनः तव सह धर्मं चरतीति सहधर्मचारिणं मां चक्रवाकेन समवृत्तिं तुल्यव्यवहारं न वेत्सि किम् । अनन्यसङ्गिनं वेत्स्येवेत्यर्थः ॥ ५१ ॥

प्रणामकारणमाह—

निर्मितेष्विति ॥ हे सुतनु सुगात्रि । पूर्वं स्वयं भवतीति स्वयम्भूः चतुराननः ॥ "भुवः संज्ञान्तरयोः" इति क्विप् । मयूरव्यंसकादित्वात्समासः ॥ तेन पितृषु अग्निष्वात्तादिषु निर्मितेषु सत्सु या तनुः उज्झिता सेयं तनुः अस्तम् अस्तमयकाले उदयम् उदयकाले ॥ अव्ययमेतत् ॥ सेव्यते पूज्यते च । सन्ध्यारूपेणेति शेषः । हे मानिनि । अविमृश्यकारिणीति भावः । तेन ब्रह्मतनुत्वेन हेतुना ममात्र सन्ध्यायां गौरवम् आदरः । तदेतदुक्तं भविष्यपुराणे—"पितामहः पितॄन् सृष्ट्वा

---

(६) प्रणमितोऽस्मि नान्यथा । (१) पूर्वमुज्झिता । (२) सेवते ।

तामिमां (३)तिमिरवृत्तिपीडितां
भूमिलग्नमिव सम्प्रति स्थिताम्।
एकतस्तटतमालमालिनीं
पश्य धातुरसनिम्नगामिव ॥ ५३ ॥

सान्ध्यमस्तमितशेषमातपं
रक्तलेखमपरा बिभर्ति दिक्।
संपरायवसुधा सशोणितं
मण्डलाग्रमिव (४)तिर्यगुत्थितम् ॥ ५४ ॥

मूर्तिं तामुत्ससर्ज ह। प्रातः सायं समागत्य सन्ध्यारूपेण पूज्यते ॥ एतां सन्ध्यां यतात्मानो ये तु दीर्घामुपासते। दीर्घायुषो भविष्यन्ति नीरुजः पाण्डुनन्दन" इति ॥ ५२ ॥

इत्थं देव्याः कोपमपनीय धातुसन्ध्यादिवर्णनं करोति—

तामिति ॥ सम्प्रति तिमिरवृत्तिपीड़ितां तमोवस्तुपहताम् अतएव भूमौ लग्नामिव स्थितां ताम् इमां सन्ध्याम् एकतः एकत्र तटतमालमालिनीं तीरतमालतरुपङ्क्तिमतीम्। व्रीह्यादित्वादिनिः ॥ धातुरसनिम्नगां धातुद्रवनदीमिव पश्य ॥ ५३ ॥

सान्ध्यमिति ॥ अपरा दिक् प्रतीची ॥ अस्तमिति मकारान्तमव्ययम्। तस्येतशब्देन समासः ॥ अस्तमितशेषम् अस्तङ्गतावशिष्टम् अतएव रक्ता रेखाकृतिर्यस्य तं सन्ध्यायां भवं सान्ध्यम् आतपं संपरायवसुधा युद्धभूमिः ॥ "समरे संपरायः स्यात्" इति विश्वः ॥ तिर्यगुत्थितं तिर्यक् फलितं सशोणितं मण्डलाग्रं कृपाणमिव बिभर्ति ॥ "कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः ॥ ५४ ॥

---

(३) तिमिरवृद्धिपीड़ितां शैलराजतनयेऽधुना स्थिताम्।
(४) तिर्यगुज्झितम्।

यामिनीदिवससन्धिसम्भवे
तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं (५)निरर्गलं
दिक्षु दीर्घनयने विजृम्भते ॥ ५५ ॥

नोर्ध्वमीक्षणगतिर्न चाप्यधो
नाभितो न पुरतो न पृष्ठतः ।
लोक एष (६)तिमिरोल्ववेष्टितः
गर्भवास इव वर्तते निशि ॥ ५६ ॥

शुद्धमाविलमवस्थितं चलं
वक्रमार्जवगुणान्वितं च यत् ।

यामिनीति ॥ यामिनीदिवसयोः सन्धिः सन्ध्या तत्र सम्भवे तेजसि सन्ध्यारागे सुमेरुणा व्यवहिते सति हे दीर्घनयने एतत् अन्धतमसम् ॥ "अवसमन्धेभ्यस्तमसः" इति समासान्तः ॥ दिक्षु निरर्गलं विजृम्भते ॥ ५५ ॥

नेति ॥ ऊर्ध्वम् उपरि ईक्षणगतिः दृष्टिप्रसारो नास्ति। अधोऽपि च न। अभितः पार्श्वयोश्च न। पुरतः अग्रे च न। पृष्ठतः पश्चादपि न। ईक्षणगतिरिति सर्वत्र संबध्यते। तथापि एष लोकः निशि तिमिरमेव उल्वं जरायुः "गर्भाशयो जरायुः स्यात्" इत्यमरः ॥ तेन वेष्टितः आवृतः सन्। गर्भः एव वासः वसतिः तत्र गर्भवासे वर्तते। इवेत्युत्प्रेक्षा ॥ ५६ ॥

शुद्धमिति॥ शुद्धं स्वच्छम् आविलं मलिनम् अवस्थितं स्थावरं चलं जङ्गमं वक्रं कुटिलम् ऋजोर्भावः आर्जवं तदेव गुणः तेन अन्वितं च यत् वस्तुजातम्। तदिति यत्तदोर्नित्य-

---

(५) निरङ्कुशम् । (६) तिमिरौघवेष्टितः ।

सर्वमेव तमसा समीकृतं
धिङ्महत्त्वमसतां (७)हतान्तरम् ॥ ५७ ॥
(८)नूनमुन्नमति यज्वनां पतिः
शार्वरस्य तमसो निषिद्धये।
पुण्डरीकमुखि (९)पूर्वदिङ्मुखं
कैतकैरिव (१)रजोभिरावृतम् ॥ ५८ ॥
मन्दरान्तरितमूर्तिना निशा
लक्ष्यते शशभृता सतारका।

सम्बन्धाल्लभ्यते। तत्सर्वमेव तमसा समीकृतं दुर्लक्ष्यविशेषं कृतम्। तथाहि। हृतम् अन्तरं विशेषो येन तत् हृतान्तम् असताम् असाधूनां महत्त्वं वृद्धिं धिक्॥ धिक्शब्दयोगाद्द्वितीया॥ समत्वेन परगतिविशेषतिरस्करणमसतां स्वभाव इति सुप्रसिद्धम्। तमसोऽपि तथा महत्त्वं धिगित्यर्थः॥ ५७॥

नूनमिति॥ यज्वानः विधिनेष्टवन्तः॥ "यज्वा तु विधिनेष्टवान्" इत्यमरः॥ "सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः॥ तेषां पतिः प्रियः। दर्शपूर्णमासादियागप्रवृत्तिहेतुत्वादिति भावः। शार्वरस्य शर्वर्यां भवस्य तमसो निषिद्धये निरासाय नूनम् उन्नमति उदेति। कुतः। हे पुण्डरीकमुखि। पूर्वस्याः दिशो मुखं पुरोभागः पूर्वदिङ्मुखं केतक्या इमानि कैतकानि तैः रजोभिः परागैः आवृतमिव। दृश्यते इति शेषः। अतो नूनमुदेति चन्द्र इति सम्बन्धः॥ ५८॥

मन्दरेति॥ सतारका निशा मन्दरान्तरितमूर्तिना

---

(७) हृतान्तरम्, धनन्तरम्। (८) नूनमुन्नयति।
(९) पश्य दिङ्मुखम्, दिङ्मुखं यथा। (१) रजोभिरावृतम्।

त्वं मया प्रियसखीसमागता
श्रोष्यतीव वचनानि पृष्ठतः ॥ ५९ ॥

रुद्धनिर्गमनमा दिनक्षयात्
पूर्वदृष्टतनुचन्द्रिकास्मितम् ।
एतदुद्गिरति (१)रात्रिचोदिता
दिग्रहस्यमिव (२)चन्द्रमण्डलम् ॥ ६० ॥

पश्य पक्वफलिनीफलत्विषा
बिम्बलाञ्छितवियत्सरोऽम्भसा ।

मन्दराद्रिव्यवहितमण्डलेन शशभृता चन्द्रेण पृष्ठतः पश्चाद्भागे वचनानि श्रोष्यता । श्रोतुं स्थितेनेत्यर्थः । मया प्रियसखीसमागता प्रियसखीभिः आवृता त्वमिव लक्ष्यते ॥ ५९ ॥

रुद्धेति ॥ दिक् पूर्वदिक् । नायिका ध्वन्यते । आ दिनक्षयादा सायं रुद्धं निर्गमनं निःसरणं यस्य तत्तथोक्तम् । अन्यत्र बहिरप्रकाशितमित्यर्थः । तनुचन्द्रिकास्मितमिव तनुचन्द्रिकास्मितं पूर्वदृष्टं यस्मात्तत्तथोक्तम् । एतत् चन्द्रमण्डलं नर्म रहस्यं गोप्यार्थमिव रात्रिचोदिता । रात्र्या सख्येव प्रेरिता सतीत्यर्थः । उद्गिरति प्रकाशयति । यथा काचिदा सायं मनस्विनी गूहितमभिलाषं प्रदोषे सख्या मह्यं ब्रूहीति निर्बन्धात् पृष्टा सती प्रकटयति तद्वदित्यर्थः ॥ ६० ॥

पश्येति ॥ पक्वफलिनीफलत्विषा उदयरागात् बिम्बाभ्यां प्रतिबिम्बाभ्यां लाञ्छिते चिह्निते वियत्सरोऽम्भसि येन तथोक्तेन हिमांशुना विप्रकृष्टं विवरम् अन्तरालं यस्य तत्तथोक्तम् । अतिदूरस्थमित्यर्थः । चक्रवाकमिथुनं विडम्बयते अनुक्रियते

(१) चन्द्रमण्डलम् ।    (२) रात्रिनोदितम् ।

(३)विप्रकृष्टविवरं हिमांशुना
चक्रवाकमिथुनं विडम्ब्यते ॥ ६१ ॥
(४)शक्यमोषधिपतेर्नवोदयाः
कर्णपूररचनाकृते (५)तव।
अप्रगल्भयवसूचि(६)कोमला-
श्छेत्तुमग्रनखसंपुटैः कराः ॥ ६२ ॥
अङ्गुलीभिरिव केशसञ्चयं
सन्निगृह्य तिमिरं मरीचिभिः।

पश्य। रात्रौ वियति सरोजले चेन्दोर्बिम्बप्रतिबिम्बौ विरहाद् दूरवर्तिनौ चक्रवाकाविव दृश्येते इत्यर्थः ॥ ६१ ॥

शक्यमिति ॥ नवोदयाः सद्य उत्पादिताः अप्रगल्भयवसूचिकोमलाः अकठोरयवाङ्कुरसुकुमाराः ओषधिपतेः इन्दोः कराः तव कर्णपूररचनाकृते कर्णावतंसनिर्माणक्रियायै। सम्पदादित्वाद्भावे क्विप् ॥ अग्रनखसंपुटैः नखाग्रसन्दंशैः छेत्तुं शक्यम्। शक्या इत्यर्थः ॥ "शकिसहोश्च" इति कर्मणि यत्प्रत्ययः ॥ शक्यमिति विपरीतलिङ्गवचनस्यापि सामान्योपक्रमात् कर्माभिधायकत्वम्। पश्चात्कर्मविशेषाकाङ्क्षायां करा इति निर्देशो न विरुध्यते। यथाह वामनः—"शक्यमिति रूपं लिङ्गवचनस्यापि सामान्योपक्रमत्वादिति। अत्र प्रमाणम्—"शक्यं श्वमांसेनापि क्षुत्प्रतिहन्तुमिति भाष्यकारप्रयोगः" इति ॥६२॥

अङ्गुलीभिरिति ॥ शशी चन्द्रमाः। नायकस्तु प्रतीयते। अङ्गुलीभिः केशसञ्चयमिव मरीचिभिः तिमिरं सन्निगृह्य

---

(३) विप्रकृष्टविधुरम्, विप्रकृष्टविरहम्, विप्रकृत्तविवरम्।
(४) शक्य ओषधिपतेर्नवोदयः। (५) नवाः।
(६) कोमलश्छेत्तुमग्रनखसंपुटैः करः।

कुड्मलीकृतसरोजलोचनं
चुम्बतीव रजनीमुखं शशी ॥ ६३ ॥

पश्य पार्वति नवेन्दुरश्मिभिः
(७)सामिभिन्नतिमिरं नभस्तलम् ।
लक्ष्यते द्विरदभोगदूषितं
(८)संप्रसीददिव मानसं सरः ॥ ६४ ॥

रक्तभावमपहाय चन्द्रमा
जात (९)एष परिशुद्धमण्डलः ।

गृहीत्वा ॥ सरोजे लोचने इवेत्युपमितसमासोऽङ्गुलीभिरिवे-त्युपमायास्तद्बाधकत्वात् ॥ कुड्मलीकृते सरोजलोचने यस्य तत्तथोक्तं रजन्याः मुखं प्रारम्भः । वदनं चेति गम्यते । चुम्ब-तीव । अत्रार्थापत्त्यतिशयोक्तिरलङ्कार उत्प्रेक्षासङ्करश्चेति ॥६३॥

पश्येति ॥ हे पार्वति । नवेन्दुरश्मिभिः सामिभिन्नतिमिरम् अर्धनिरस्तध्वान्तं नभस्तलं द्विरदभोगदूषितं गजक्रीड़ाकलु-षितं संप्रसीदत् प्रसादं गच्छत् मानसं मानसाख्यं सरः इव लक्ष्यते पश्य ॥ ६४ ॥

रक्तभावमिति ॥ एष चन्द्रमाः रक्तभावं रक्तत्वं उदयराग अपहाय परिशुद्धमण्डलः शुभ्रबिम्बो निष्कण्टको जातः तथाहि । निर्मलप्रकृतिषु स्वच्छभावेषु शुद्धसचिवसम्पन्नेषु च कालदोषेण जाता कालदोषजा विक्रिया विकारः स्थिरोदय स्थायिनी न भवति खलु । चन्द्रोऽपि स्वभावनिर्मल इति यथा कश्चिद्राजा कुतश्चिन्निमित्ताद्विरक्तमण्डलः पश्चात्प्रतिकृत

(७) भिन्नसान्द्रतिमिरम्, संविभिन्नतिमिरम् ।
(८) सम्प्रसादमिव । (९) एव ।

विक्रिया न खलु कालदोषजा
निर्मलप्रकृतिषु स्थिरोदया ॥ ६५ ॥

उन्नतेषु शशिनः प्रभा स्थिता
निम्नसंश्रयपरं निशातमः।
नूनमात्मसदृशी प्रकल्पिता
(१)वेधसैव गुणदोषयोर्गतिः ॥ ६६ ॥

चन्द्रपादजनितप्रवृत्तिभिः
चन्द्रकान्तजलबिन्दुभिर्गिरिः।
मेखलातरुषु (२)निद्रितानमून्
बोधयत्यसमये शिखण्डिनः ॥ ६७ ॥

शुद्धा स्वच्छमण्डलो भवति तद्वदिति भावः ॥ तत्र प्रथमार्थे समासोक्तिरलङ्कारस्तस्यार्थान्तरन्यासेनाङ्गाङ्गिभावेन सङ्करः॥६५

उन्नतेष्विति ॥ शशिनः प्रभा चन्द्रिका उन्नतेषु अद्रिशृङ्गादिषु स्थिता। निशातमस्तु निम्नसंश्रयपरं गर्तादिनीचस्थानप्रवणम्। तथाहि। वेधसा गुणदोषयोः आत्मसदृशी स्वभावानुरूपा गतिः प्रवृत्तिः प्रकल्पितैव ननु। तेजांस्युन्नमन्ति मलिनास्तु नीचन्तीति भावः। ॥ ६६ ॥

चन्द्रपादेति ॥ गिरिः हिमाद्रिः चन्द्रपादैः इन्दुकिरणैः जनितप्रवृत्तिभिः जनितप्रसरैः चन्द्रकान्तमणीनां जलबिन्दुभिः॥ करणैः ॥ मेखलातरुषु निद्रितान् सञ्जातनिद्रान् ॥ तारकादित्वादितच् ॥ अमून् शिखण्डिनः मयूरान् असमये अकाले बोधयति। इन्दुकिरणसम्पर्कादुपरिचन्द्रमणिस्यन्देष्वधोवृष्टिभ्रमाः शिखण्डिनो वृष्टिभयाज्जाग्रतीत्यर्थः। शिखण्डिग्रहणमितरपक्षिणां कुलायनिलयत्वादिति भावः ॥ ६७ ॥

---

(१) वेधसा हि, वेधसेव। (२) निद्रितानिमान्।

कल्पवृक्षशिखरेषु सम्प्रति
(३)प्रस्फुरद्भिरविकल्पसुन्दरि ।
(४)हारयष्टिगणनामिवांशुभिः
(५)कर्तुमुद्यतकुतूहलः शशी ॥ ६८ ॥

उन्नतावनत(६)भागवत्तया
चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिता
भाति भूतिरिव (७)मत्तदन्तिनः ॥ ६९

नामे।

गेज ·रि अि

कल्पवृक्षेति ॥ हे अविकल्पेनाविवादेन सुन्दर्यत्वमेषु सुन्दरि । शशी सम्प्रति कल्पवृक्षाणां शिखरेषु स्वेशिष्टि रद्भिः अंशुभिः । करस्थानीयैरिति भावः । हारयष्टि कल्पतरुलम्बिहारपरिगणनां कर्तुम् उद्यतकुतूहलः इवड़ा कौतुकः किम् । इत्युत्प्रेक्षा ॥ ६८ ॥

उन्नतेति ॥ गिरेः उन्नतावनतभागवत्तया निम्नोन्नता शवत्त्वेन हेतुना सतिमिरा तिमिरमिश्रा । समोन्नतेषु तस्य ऽनवकाशादिति भावः । इयं चन्द्रिका बहुविधाभिः भक्ति रचनाभिः अर्पिताः विन्यस्ताः मत्तदन्तिनो भूतिः भसितवत् आभाति ॥ "भूतिर्मातङ्गशृङ्गारे" इति विश्वः ॥ तत्र स्रो संहितानि गजाङ्गान्येव तिमिरभागोपमानमित्यनुसन्

॥ ६९ ॥

---

(३) प्रस्फुरद्भिरिव पश्य सुन्दरि, प्रस्फुरद्भिरिव शम्भुसुन्दरि
(४) हारयष्टिरचनाम् । (५) कर्तुमागतकुतूहलः श
(६) भाववत्तया । (७) मत्तहस्तिनः ।

(८)एतदुच्छ्वसितपीतमैन्दवं
(९)सोढुमक्षममिव प्रभारसम्।
मुक्तषट्पदविरावमञ्जसा
भिद्यते कुमुदमा निबन्धनात्॥ ७० ॥

पश्य कल्पतरुलम्बि शुद्धया
ज्योत्स्नया जनितरूपसंशयम्।
मारुते चलति (१)चण्डि केवलं
व्यज्यते विपरिवृत्तमंशुकम्॥ ७१ ॥

तदिति॥ एतत् कुमुदं कैरवम्॥ कर्तृ॥ उच्छ्वसितेन
। उच्छ्वसितपीतम्। अतिलक्षणायोच्छ्वासोच्छ्वस्य पीत-
र्थः। इन्दोरिदम् ऐन्दवं प्रभा चन्द्रिका सैव रसः द्रवः तं
मक्षममिव अञ्जसा मुक्तषट्पदविरावं प्रवर्तितभृङ्गनादं
तथा निबन्धनादा वृन्तात् भिद्यते विकसति॥ कर्म-
लट्॥ यथा लोके कस्यचिदतिपानान्निःसहात्मन उच्चैः
त उदरं भिद्यते तथैतदिति भावः॥ ७०॥
पश्येति॥ शुद्धया ज्योत्स्नया जनिता रूपसंशया अंशुकं
स्ना वेति स्वरूपसन्देहो यस्य तत्तथोक्तं कल्पतरुलम्बि
हे चण्डि अत्यन्तकोपने। गौरादित्वात् ङीष्॥ केवलं
ते चलति सति विपरिवृत्तं चलं सत् व्यज्यते पश्य।
त्स्नासच्छायत्वान्न रूपतो विविच्यते परन्तु क्रियये-
॥ ७१ ॥

---

(८) एतदुच्चसितपीतम्।　　　　(९) वोढुम्।
(१) चण्डिके बलात्, चण्डिके चलम्।

शक्यमङ्गुलिभि(२)रुद्धृतैरधः
शाखिनां पतितपुष्प(३)पेशलैः ।
पत्त्रजर्जरशशिप्रभालवै-
रेभिरुत्कचयितुं (४)तवालकान् ॥ ७२ ॥

एष (५)चारुमुखि (६)योगतारया
युज्यते तरलबिम्बया शशी ।
साध्वसादुपगतप्रकम्पया
कन्ययेव नवदीक्षया वरः ॥ ७३ ॥

शक्यमिति ॥ अङ्गुलिभिः उद्धृतैः उच्चितैः शाखिनाम् अधः पतितपुष्पवत् पेशलैः कोमलैः । तथा भ्रमकरैरित्यर्थः । एभिः पत्त्रैः जर्जरा शकलिता शशिप्रभा चन्द्रिका तस्याः लवैः खण्डैः । तरुतलेषु पत्त्रान्तरालतच्च्यज्योत्स्नाखण्डैरित्यर्थः । तवालकान् उत्कचयितुं बद्धुम् ॥ "कच दीप्तिबन्धनयोः" इति धातोस्तुमुन्प्रत्ययः ॥ शक्यम् । शक्या इत्यर्थः । शक्यमिति लिङ्गवचनस्य सामान्योपक्रमादित्याद्यनुपदमेवोक्तम् ॥७२॥

एष इति । हे चारुमुखि हे उज्ज्वलानने ॥ "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इति ङीप् ॥ एष शशी तरलबिम्बया स्फुरन्मण्डलया योगतारया । प्रत्यहं यया युज्यते सा योगतारा । नित्यनक्षत्रेणेत्यर्थः । साध्वसात् नवसङ्गमभयात् उपगतप्रकम्पया वेपथुमत्या नवदीक्षया नवोढाख्यया कन्यया वरो वोढेव युज्यते संगच्छते ॥ युजेर्देवादिकत्वात्कर्तरि लट् ॥ ७३ ॥

---

(२) उच्चितैः । (३) कोमलैः । (४) तवालकम्, तवालकाः ।
(५) चन्द्र । (६) योग्यतारया, पक्ष्म तारया ।

(७)पाकभिन्नशरकाण्डगौरयो-
रुल्लसत्प्रतिकृतिप्रदीप्तयोः।
रोहतीव तव गण्डलेखयो-
श्चन्द्रबिम्बनिहिताक्षि चन्द्रिका ॥ ७४ ॥

लोहितार्कमणिभाजनार्पितं
कल्पवृक्षमधु बिभ्रती स्वयम्।
त्वामियं स्थितिमतीमुपस्थिता
गन्धमादनवनाधिदेवता ॥ ७५ ॥

आर्द्रकेसरसुगन्धि ते मुखं
(१)रक्तमेव नयनं स्वभावतः।

पाकेति ॥ हे चन्द्रबिम्बनिहिताक्षि चन्द्रबिम्बनिहितेक्षणे। पाकभिन्नः पाकविकसितः यः शरकाण्डः अद्वत् गौरयोः सितयोः ॥ "अवदातः सितो गौरः" इत्यमरः ॥ उल्लसन्त्या प्रतिकृत्या चन्द्रिकाप्रतिबिम्बेन प्रदीप्तयोः प्रोज्ज्वलयोः तव गण्डलेखयोः चन्द्रिका रोहतीव। गण्डस्थलप्रतिबिम्बसंक्रमणमूर्च्छिता चन्द्रिका तयोरेव प्ररूढेति प्रतीयते इत्यर्थः॥७४॥

अत्रान्तरे काञ्चिदवलोक्याह—

लोहितेति ॥ लोहिते अरुणे अर्कमणिभाजने सूर्यकान्तपात्रे अर्पितं कल्पवृक्षमधु कल्पतरुप्रसूतं मद्यं स्वयं बिभ्रती गन्धमादनवनाधिदेवता स्थितिमतीम् अवस्थानवतीम्। इह स्वने तिष्ठन्तीमित्यर्थः। त्वाम् इयं प्रत्यक्षोपस्थिता प्राप्ता। स्वगृहागतां त्वां सम्भावयितुमागतेत्यर्थः ॥ ७५ ॥

आर्द्रेति ॥ हे पार्वति। इदं ते स्वभावतः आर्द्रकेसरसुगन्धि

---

(७) पाकपाण्डु। (१) मत्तरक्त, प्रान्तरक्त, मत्तमेव।

अत्र लब्धवसतिर्गुणान्तरं
(२)किं विलासिनि (३)मधुः करिष्यति ॥७६॥
मान्यभक्तिरथवा सखीजनः
सेव्यतामिदमनङ्ग(४)दीपकम् ।
इत्युदारमभिधाय शङ्कर-
स्तामपाययत पानमम्बिकाम् ॥ ७७ ॥

सरसकेसरसुगन्धि ॥ "गन्धस्येत्—" इत्यादिनेकारः ॥ मुखम् । रक्तमेव नयनम् । हे विलासिनि विलसनशीले । अत्र त्वन्मुखे लब्धवसतिः लब्धानुप्रवेशो मधुः मद्यं किं गुणान्तरं गुणविशेषं करिष्यति । न किञ्चिदित्यर्थः । केसरसौगन्ध्यादिगुणानां त्वन्मुखे स्वभावसिद्धत्वान्मधुनः फलं न पश्यामीत्यर्थः ॥ "अर्धर्चाः पुंसि च" इति पुंलिङ्गत्वम् । यदाहुः—"मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः । अर्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधु" इति ॥ ७६ ॥

मान्यभक्तिरिति ॥ अथवा सखीजनः मान्या भक्तिर्यस्य स तथोक्तः । सखीजनः स्त्रीकार्य इत्यर्थः । ततः अनङ्गदीपकम् इदं वक्ष्यमाणं पानं सेव्यतामिति उदारं चतुरम् अभिधाय शङ्करः ताम् अम्बिकां पीयते इति पानं मद्यम् अपाययत पाययामास ॥ पिबतेर्ण्यन्ताल्लुङि तङ् ॥ पिबतेः प्रत्यवसानार्थादणि कर्तुः कर्मत्वम् । पिबतेर्निगरणार्थत्वेऽपि "न पादम्य—" इति परस्मैपदप्रतिषेधः ॥ ननु मान्यभक्तिरित्यत्र कथं पुंवद्भावः । "अप्रियादिषु" इति निषेधाद्भक्तिशब्दस्य प्रियादिपाठान्नैष दोषो नपुंसकपूर्वपदत्वात् । यथाह वृत्तिकारः—"दृढ़भक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात्सिद्धम्" इति । भोजराजस्तु—"भज्यत इति कर्मसाधनस्यैव प्रियादिपाठतया

---

(२) किम् । (३) मदः । (४) दीपनम् ।

पार्वती (५)तदुपयोगसम्भवां
विक्रियामपि सतां मनोहराम्।
अप्रतर्क्यविधियोगनिर्मिता-
माम्रतेव सहकारतां ययौ॥ ७८॥

(६)तत्क्षणं (७)विपरिवर्तितह्रियो-
(८)र्नेष्यतोः शयनमिद्धरागयोः।
सा बभूव (९)वशवर्तिनी द्वयोः
शूलिनः सुवदना मदस्य च॥ ७९॥

द्वढ़भक्तिरिति न तु भजनं भक्तिरिति भावसाधनस्य। अतोऽत्र स्त्रीपूर्वपदत्वेऽपि न दोषः” इत्याह॥ ७७॥

पार्वतीति॥ पार्वती॥ कर्त्री॥ तस्य मधुनः उपयोगेन पानेन सम्भवः उत्पत्तिः यस्याः तां मद्यपानजनितामित्यर्थः। विक्रियां विकारमपि आम्रता रसालत्वं अप्रतर्क्येण अचिन्त्य-वीर्येण विधियोगेन दैवगत्या निर्मितां उत्पादितां सतां साधूनां सर्वेषामित्यर्थः। मनोहरां चित्तचमत्कारिणीं सहकारतामिव अतिसौरभत्वमिव ययौ प्राप॥ आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः” इत्यमरः॥ यथा आम्रः स्वभावमनोहरोऽपि विधियोगवशात् सहकारत्वं लब्ध्वा अतिमनोहरो भवति तथा पार्वत्या विकृतिरपि अतिमनोहारिणी बभूवेति भावः॥७८॥

तदिति॥ सुवदना पार्वती तत्क्षणं तथैव विपरिवर्तित-ह्रियोर्निवर्तितलज्जयोः शयनं तल्पं नेष्यतोः प्रापयिष्यतोः इद्धं प्रवृद्धो रागः अनुरागः आरुण्यं च ययोः इद्धरागयोः शूलिनः

---

(५) तदुपभोग। (६) तत्क्षणे। (७) विपरिवृत्तलज्जयोः।
(८) वाञ्छतोः। (९) वशवर्तिका।

घूर्णमाननयनं (१)स्खलत्कथं
स्वेदविन्दुमदकारणस्मितम् ।
आननेन न तु तावदीश्वरः
चक्षुषा चिरमुमामुखं पपौ ॥ ८० ॥

तां विलम्बितपनीयमेखला-
मुद्वहञ्जघनभारदुर्वहाम् ।
(२)ध्यानसंभृतविभूतिसंभृतं
प्राविशन्मणिशिलागृहं हरः ॥ ८१ ॥

प्रियतमस्य मदस्य चेति द्वयोर्वशे वर्तत इति वशवर्तिनी अधीना बभूव ॥ ७९ ॥

मदपारवश्यं तावदाह—

घूर्णमानेति ॥ ईश्वरो घूर्णमाननयनं भ्राम्यन्नेत्रं स्खलत्कथं स्खलद्वचनं स्वेदविन्दुमत् स्वेदयुक्तम् अकारणस्मितम् आस्मिकहासयुक्तम् उमामुखं तावत् । आ तृष्णापगममित्यर्थः । आननेन मुखेन न पपौ । न चुचुम्बेत्यर्थः । किन्तु चिरं चक्षुषा पपौ । तृष्णया अद्राक्षीदित्यर्थः । तस्या मदपारवश्यं दृष्ट्वा मुदं तावदन्वभूदित्यर्थः ॥ ८० ॥

संप्रति प्रियवशंवदत्वमाह—

तामिति ॥ हरः विलम्बितपनीयमखेलां विस्रंसिहैमरसनां जघनभारेण दुर्वहां तां पार्वतीम् उद्वहन् ध्यानसंभृतया सङ्कल्पमात्रसिद्धया विभूत्या भोगसाधनेन संभृतं सम्पूर्णं मणिशिलागृहं प्राविशत् । रिरंसुरिति भावः ॥ ८१ ॥

---

(१) स्खलद्वचः, स्खलत्वचम । (२) ध्यानसंभृतविभूतिरीश्वरः, ध्यानसंभृतिविभूतिशोभितम्, ध्यानसंभृतिविभूतिमोचरम् ।

तत्र हंसधवलोत्तरच्छदं
जाह्नवीपुलिनचारुदर्शनम्।
अध्यशेत शयनं प्रियासखः
शारदाभ्रमिव रोहिणीपतिः॥ ८२॥

(३)क्लिष्टचन्द्रमदयैः कचग्रहैः
(४)उत्पथार्पितनखं समत्सरम्।
तस्य तच्छिदुरमेखलागुणं
(५)पार्वतीरतमभूदतृप्तये॥ ८३॥

तत्रेति॥ तत्र मणिभवने हंसवत् धवलः उत्तरच्छदः प्रच्छदपटो यस्य तत्तथोक्तं जाह्नवीपुलिनमिव चारुदर्शनं शयनं शय्यां रोहिणीपतिः चन्द्रः शरदि भवं शारदम् अभ्रं मेघमिव। शरद्ग्रहणं धावल्यार्थम्। प्रियासखः सन्। प्रियया सहेत्यर्थः। अध्यशेत शयितवान्॥ "अधिशीङ्स्थासां कर्म" इति कर्मत्वम्॥ रोहिणीग्रहणसामर्थ्यादिन्दोरप्यभ्रारोहणे रोहिणीसाहित्यमनुसन्धेयम्॥ ८२॥

क्लिष्टेति॥ अदयैः निर्दयैः कचग्रहैः केशकर्षणैः क्लिष्टचन्द्रं पीडितहरचन्द्रम् उत्पथम् उन्मर्यादम् अर्पिता नखा यस्मिन् तत् समत्सरम् अन्योन्यविजिगीषापूर्वकं छिदुराः स्वयमेव छिद्यमाना मेखलागुणा यस्मिन् तत्तथोक्तम्॥ "विदिभिदिच्छिदेः कुरच्" इति कुरच्प्रत्ययः। "कर्मकर्तरि" इति काशिका॥ पार्वतीरतं तस्य ईश्वरस्य अतृप्तये अभूत्। तृप्तये नाभूदिति भावः॥ ८३॥

---

(३) क्लिष्टकेशमवलुप्तचन्दनम्। (४) व्यत्ययार्पित, व्युत्पथार्पित।
(५) पार्वतीरतमभूच तृप्तये।

केवलं प्रियतमादयालुना
ज्योतिषामवनतासु पङ्क्तिषु ।
तेन (६)तत्परिगृहीतवचसा
नेत्रमीलनकुतूहलं कृतम् ॥ ८४ ॥

स व्यबुध्यत (७)बुधस्तवोचितः
शातकुम्भकमलाकरैः समम् ।
मूर्च्छनापरिगृहीत(८)कैशिकैः
(९)किन्नरैरुषसि गीतमङ्गलः ॥ ८५ ॥

केवलमिति ॥ प्रियतमादयालुना केवलम् । प्रियतमाया दययैव तस्य ईश्वरस्य सौकुमार्यादनवरतं सुरतासहिष्णुत्वात् । नतु स्वयं तृप्येत्यर्थः । तत्परिगृहीतवचसा तया पार्वत्याश्लिष्टवचसा तेन ईश्वरेण ज्योतिषां नक्षत्राणां पङ्क्तिषु अवनतासु नतीषु । पश्चिमायामित्यर्थः । नेत्रमीलनकुतूहलं कृतम् । निद्रा स्वीकृतेत्यर्थः ॥ ८४ ॥

स इति ॥ बुधस्तवोचितः विद्वत्स्तोत्रार्हः स हरः उषसि प्रभाते । स्वराणाम् आरोहक्रमो मूर्च्छना ॥ "क्रमयुक्ताः स्वरास्तत्र मूर्च्छना परिकीर्तिता" इति भरतः ॥ तया मूर्च्छनया परिगृहीतकैशिकैः स्वीकृतरागविशेषैः किन्नरैः गीतमङ्गलः सन् । शातकुम्भकमलाकरैः समं कनकपद्माकरैः सह ॥ "तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम्" इत्यमरः । व्यबुध्यत विबुद्धवान् ॥ बुध्यतेर्दैवादिकात् कर्तरि लङ् ॥ अत्र बुध्यतेर्जागरविकासयोर्बोधयोः श्लेषनिमित्तकाभेदाध्यवसायमूला सहोक्तिरलङ्कारः ॥ ८५ ॥

---

(६) तत्प्रतिगृहीत । (७) तया निशात्यये । (८) वंशिकैः
(९) किन्नरैः समुपगीतमङ्गलः ।

तौ क्षणं शिथिलितोपगूहनौ
दम्पती (१)रचितमानसोर्मयः।
(२)पद्मभेदनिपुणाः सिषेविरे
गन्धमादनवनान्तमारुताः॥ ८६ ॥

ऊरुमूलनखमार्ग(३)राजिभि-
स्तत्क्षणं हृतविलोचनो हरः।
वाससः प्रशिथिलस्य (४)संयमं
कुर्वतीं प्रियतमामवारयत्॥ ८७ ॥

स प्रजागरकषायलोचनं
गाढदन्त(५)पदताडिताधरम्।

ताविति॥ शिथिलितोपगूहनौ शिथिलितालिङ्गनौ। जाया च पतिश्च दम्पती॥ जायाशब्दस्य दम्भावो निपातितः॥ तौ शिवौ रचितमानसोर्मयः। मानसे सरसि रचिततरङ्गा इत्यर्थः। पद्मभेदनिपुणाः पद्मभेदपिशुना इति यावत्। विकाससूचका इत्यर्थः। गन्धमादनवनान्तमारुताः क्षणं सिषेविरे॥ ८६॥

ऊर्विति॥ तत्क्षणं मारुतवीजनसमये ऊरुमूले नखमार्गराजिभिर्नखपादपङ्क्तिभिः। मरुता प्रसारितवस्त्रतया प्रकाशिताभिरित्यर्थः। हृतविलोचनः आकृष्टदृष्टिर्हरः प्रशिथिलस्य वाससः संयमं बन्धनं कुर्वतीं प्रियतमाम् अवारयत्॥ ८७॥

स इति॥ रागवान् रागी स हरः प्रजागरेण कषायलोचनं

---

(१) चलित। (२) पद्मभेदपिशुनाः। (३) पङ्क्तिभिः।
(४) सञ्चयम्। (५) परिताड़िताधरम्।

आकुलालक(६)मरंस्त रागवान्
प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ॥ ८८ ॥

तेन (७)भक्तिविषमोत्तरच्छदं
मध्यपिण्डितविसूत्रमेखलम् ।
निर्मलेऽपि शयनं निशात्यये
नोज्झितं चरणरागलाञ्छितम् ॥ ८९ ॥

स (८)प्रियामुखरसं दिवानिशं
हर्षवृद्धिजननं सिषेविषुः ।
दर्शनप्रणयिनामदृश्यता-
माजगाम (९)विजयानिवेदितः ॥ ९० ॥

रक्तानेवं गाढैः दन्तपदैः दन्तक्षतैः ताडिताधरम् आकुलालक भिन्नतिलकं प्रियामुखं प्रेक्ष्य अरंस्त अन्वरज्यत। तादृशमुख दर्शनमेव तस्योद्दीपकमित्यर्थः ॥ ८८ ॥

तेनेति ॥ तेन हरेण भक्तिभिर्भङ्गैर्विषमो निम्नोन्नतः उत्तर च्छदः प्रच्छदपटो यस्मिन् तत्। मध्ये पिण्डिता पुञ्जीकृता विसूत्रमेखला छिन्नरसना यस्मिन् तत्तथोक्तं चरणयोः रागेण लाक्षारागेण लाञ्छितं चिह्नितं शयनं निशात्यये प्रभाते निर्मलेऽपि। सूर्योदये सत्यपीत्यर्थः। न उज्झितं न त्यक्तम्। अत्र देव्याः सकलसुरतोपचारसम्पन्नत्वं पुरुषायितं सूच्यते॥८९॥

स इति॥ स हरो हर्षवृद्धिजननं सुखातिशयकारणं प्रियामुखरसं मदिरामृतं दिवा च निशि च दिवानिशम्।

(६) अपास्तचित्रकम्। (७) भिन्न। (८) प्रियामुखरसम्।
(९) विजयानिवेदनात्।

समदिवसनिशीथं सङ्गिनस्तत्र शम्भोः
शतमगमदृतूनां (१)सार्धमेका निशेव।
न (२)स सुरतसुखेभ्यश्छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गत(३)स्तज्जलौघैः ॥९१॥

इन्द्रैकवल्लभाव: ॥ सिषेविषुः सेवितुमिच्छुः सन्। विजयानाम्नी काचिद्देव्याः सखी तया निवेदितः। एतदर्थमागतेति ज्ञापितोऽपीत्यर्थः। दर्शनप्रणयिनाम् अदृश्यताम् आजगाम। दर्शनं न ददावित्यर्थः ॥ ९० ॥

समेति ॥ निशीथोऽत्र निशामात्रलक्षकः। समदिवसनिशीथं तुल्याहर्निशं यथा तथा तत्र तस्यां पार्वत्यां सङ्गिनः आसक्तस्य। रात्रिंदिवं रममाणस्येत्यर्थः। शम्भोः शिवस्य सार्धम् अर्धेन सहितम् ऋतूनां शतं पञ्चाशदुत्तरं मानुषमानेन पञ्चविंशतिवर्षाणि अगमन्। स शम्भुः समुद्रान्तर्गतः समुद्रस्य अन्तर्वृत्तिर्ज्वलनो वडवाग्निरिव तज्जलौघैः तस्य समुद्रस्य प्रवाहैरिव सुरतसुखेभ्यः छिन्नतृष्णो निवृत्ताभिलाषो न बभूव। किन्तु चिरमवर्धतेत्यर्थः ॥ ९१ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथ-सूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमासुरतवर्णनं नाम अष्टमः सर्गः।

---

(१) साग्र। (२) तु, च। (३) तज्जलेभ्यः, तज्जलेषु।

## नवमः सर्गः ।

तथाविधेऽनङ्गरसप्रसङ्गे
मुखारविन्दे मधुपः प्रियायाः ।
सम्भोगवेश्म प्रविशन्तमन्तः
ददर्श (१)पारावतमेकमीशः ॥ १ ॥

सुकान्तकान्तामणितानुकारं
कूजन्तमाघूर्णितरक्तनेत्रम् ।
प्रस्फारितोन्नम्रविनम्रकण्ठं
(२)मुहुर्मुहुर्न्यञ्चितचारुपुच्छम् ॥ २ ॥

तथेति ॥ प्रियायाः पत्न्याः हैमवत्याः मुखं आननमेव अरविन्दं पद्मं तस्मिन् । मधु पिबतीति मधुपः मधुपानासक्तः भृङ्गभूत इत्यर्थः । ईशः महादेवः तथाविधे पूर्वोक्तप्रकारे अष्टमसर्गवर्णिते इत्यर्थः । अनङ्गरसप्रसङ्गे कामरसावसरे कामरसप्रसक्तावित्यर्थः । सम्भोगस्य क्रीड़ायाः वेश्म गृहम् अन्तः मध्ये प्रविशन्तं धावन्तम् एकं पारावतं कपोतं कर्मभूतं ददर्श दृष्टवान् । सर्गेऽस्मिन्नुपजातिवृत्तम् । तदुक्तम् "स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति "उपेन्द्रवज्रा प्रथमे लघौ सा" इति "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति च ॥ १ ॥

श्लोकद्वयेन पारावतं वर्णयति ॥

सुकान्तेति ॥ पारावतं किंभूतम् । सुकान्तम् अतिमनोहारि यत् कान्तायाः रमण्याः मणितं रतिकूजितम् ॥ "मणितं रतिकूजितम्" इत्यमरः । तस्य अनुकारः अनुकरणं यत्र तत्

---

(१) पारापतम् । (२) मुहुर्मुहुर्नर्तित ।

विशृङ्खलं पञ्चतियुग्ममोष-
द्दधान(३)मानन्दगतिं मदेन।
शुभ्रांशुवर्णं जटिलाग्रपाद-
मितस्ततो मण्डलकैश्चरन्तम्॥ ३॥
रतिद्वितीयेन मनोभवेन
ह्रदात्सुधायाः प्रविगाह्यमानात्।

यथा तथा। क्रियाविशेषणमेतत्॥ कूजन्तं शब्दं कुर्वन्तम्। तथा आघूर्णिते रक्ते रक्तवर्णे नयने येन तथाभूतम्। तथा प्रस्फारितः विस्तारितः उन्नम्रः उन्नतः विनम्रः विनतश्च कण्ठः ग्रीवा यस्य तथोक्तम्। तथा मुहुर्मुहुः पुनःपुनः न्यञ्चितः सङ्कुचितः चारुः सुन्दरः पुच्छः पश्चात्प्रदेशः येन तथोक्तम्॥ २॥

विशृङ्खलमिति॥ पुनः किंविधम्। विशृङ्खलं शृङ्खलाहीनं निगड़बन्धनरहितमिति यावत्। स्वेच्छाविहारिणमित्यर्थः। "शृङ्खला पुंस्कटीवस्त्रबन्धेऽपि निगडेऽपि च" इति विश्वः॥ ईषत् पञ्चतेः पञ्चमूलस्य युग्मं द्वयं तथा मदेन उल्लासेन। द्वितीया। आनन्दगतिं हर्षगमनञ्च दधानं धारयन्तम्। पञ्चशब्दात् तिप्रत्ययः। "पञ्चतिः पञ्चमूलं स्यात्" इत्यमरः॥ तथा शुभ्राः श्वेताः अंशवः किरणाः यस्य तस्य चन्द्रस्य वर्णः इव वर्णः यस्य तथाभूतम्। धवलकान्तिमित्यर्थः। तथा जटिलौ जटाविशिष्टौ अग्रपादौ सम्मुखस्थचरणौ यस्य तथोक्तम्। तथा मण्डलकैः मण्डलाकारगमनविशेषैः इतस्ततः चरन्तं गच्छन्तम्। तं पारावतं ददर्शेति पूर्वेणान्वयः॥ "मण्डलके" इति पाठान्तरे सुरतभवने, इति व्याख्यातव्यम्। विशेषकं त्रिभिः श्लोकैः॥ ३॥

रतीति॥ इन्दुः चन्द्रः मौलौ मस्तके यस्य स तथोक्तः

(३) आनन्दगतम्, आमन्दगतिम्।

तं वीक्ष्य फेनस्य चयं नवोत्थ-
मिवाभ्यनन्दत् क्षणमिन्दुमौलिः ॥ ४ ॥

(४)तस्याकृतिं कामपि वीक्ष्य दिव्या-
मन्तर्भवश्छद्मविहङ्गमग्निम्।
विचिन्तयन् संविविदे स देवः
भ्रूभङ्गभीमश्च रुषा बभूव ॥ ५ ॥

स्वरूपमास्थाय ततो हुताशः
(५)त्रस(६)न्वलत्(७)कम्पकृताञ्जलिः सन्।

शिवः तं पारावतम्। रतिः स्वपत्नी द्वितीया यस्य तथोक्तेन। रतिसहचरेणेत्यर्थः। मनोभवेन कन्दर्पेण। कर्त्रा। प्रविगाह्यमानात् विलोड्यमानात् सुधायाः अमृतस्य सम्बन्धिनः ह्रदात् सरोवरात् नवोत्थम् अभिनवोत्पन्नं फेनस्य डिण्डीरस्य चयं पुञ्जमिव स्थितं वीक्ष्य अवलोक्य क्षणं अभ्यनन्दत् आनन्दितवान्। उत्प्रेक्षालङ्कारः ॥ ४ ॥

तस्याकृतिमिति ॥ अन्तः भवतीति अन्तर्भवः। सर्वान्तर्वर्तीत्यर्थः। स देवः महादेवः तस्य कपोतस्य सम्बन्धिनीं कामपि। अनिर्वाच्यामित्यर्थः। दिव्याम् उत्कृष्टाम् आकृतिम् आकारं वीक्ष्य अवलोक्य विचिन्तयन् ध्यायन्। वितर्कयन्नित्यर्थः। सन् छद्मना छलेन कैतवेनेति यावत् विहङ्गं पारावतरूपिणम् अग्निं संविविदे। अग्निरयं न कपोत इति बुद्ध्या ज्ञातवानित्यर्थः। "समो गम्यृच्छि—" इत्यादिना सूत्रेणात्मनेपदम्। रुषा क्रोधेन भ्रूभङ्गेन भ्रूकुट्या भीमः भयङ्करश्च बभूव जातः। असामयिकोपस्थितेरिति भावः ॥ ५ ॥

स्वरूपमिति ॥ ततः हरबोधनानन्तरम्। हुतं घृतादि

(४) तदाकृतिम्। (५) त्रास, ह्रास।
(६) स्खलत्। (७) कम्प, कण्ठ।

प्रवेपमानो (८)नितरां स्मरारि-
मिदं वचो व्यक्तमथा(९)ध्युवाच ॥ ६ ॥
असि त्वमेको जगतामधीशः
स्वर्गौकसां त्वं विपदो निहंसि।
(१) ततः सुरेन्द्रप्रमुखाः प्रभो त्वाम्
उपासते दैत्यवरैर्विधूताः ॥ ७ ॥
त्वया प्रियाप्रेमवशंवदेन
शतं व्यतीये (२)सुरतादृतूनाम्।

अश्नातीति हुताशः अग्निः स्वरूपं निजदेहम् आस्थाय प्रबलस्वरं श्वसन् बिभ्यत् सन्। वलन् उद्भवन् कम्पो यस्मिन् तत् यथा तथा कृतः रचितः अञ्जलिः येन तथोक्तः। तथा नितरां भृशं यथा तथा प्रवेपमानः कम्पमानश्च सन्। अथ स्मरस्य कामस्य अरिं शत्रुं शिवम् इदं वक्ष्यमाणं वचः व्यक्तं स्पष्टं यथा तथा अध्युवाच उक्तवान्। "दुह्याच्—" इत्यादिना सूत्रेण द्विकर्मकत्वम् ॥ ६ ॥

असीति ॥ हे प्रभो निग्रहानुग्रहसमर्थ देव। एकः केवलः त्वं जगतां पृथिव्यादीनां ईशः अधिपतिः असि। त्वत्सदृशोऽन्यो जगत्पालको नास्तीत्यर्थः। अतएव त्वं स्वर्गौकसां स्वर्गः ओकः स्थानं येषां देवानामित्यर्थः। विपदः उपद्रवानित्यर्थः। निहंसि विनाशयसि। ततः तस्मात् कारणात्। विपत्पतनादित्यर्थः। सुरेन्द्रप्रमुखाः सुरेन्द्रः देवेन्द्रः प्रमुखः अग्रवर्ती येषां ते तथोक्ताः देवाः दैत्यवरैः तारकप्रभृतिभिः विधूताः कम्पिताः तिरस्कृता इति यावत् जनितोपद्रवा इत्यर्थः। सन्तः त्वाम् उपासते। स्तवादिना सेवन्ते इत्यर्थः ॥ ७ ॥

---

(८) अतितराम्। (९) अभ्युवाच। (१) अतः। (२) अन्वभवन्।

(३)रहःस्थितेन (४)त्वदवीक्षणार्तो
दैन्यं परं प्राप सुरैः सुरेन्द्रः ॥ ८ ॥
त्वदीयसेवावसरप्रतीक्षैः
अभ्यर्थितः शक्रमुखैः सुरैस्त्वाम् ।
उपागतोऽन्वेष्टुमहं विहङ्ग-
रूपेण विद्वन् समयोचितेन ॥ ९ ॥
इति प्रभो चेतसि सम्प्रधार्य
(५)तन्नोऽपराधं भगवन् क्षमस्व ।

त्वयेति ॥ प्रियायाः कान्तायाः प्रेम्णा हेतुना वशंवदेन वशीभूतेन प्रेमासक्तेनेत्यर्थः । अतएव रहसि एकान्ते स्थितेन त्वया । कर्त्रा । सुरतात् हेतोः ऋतूनां वसन्तादीनां शतं व्यतीये व्यतीतम् । बहुकाला गता इत्यर्थः । अथच सुरेन्द्रः देवराजः सुरैः देवैः सह तदवीक्षणेन तव अदर्शनेन आर्तः पीड़ितः सन् परं भृशं दैन्यं विक्लवत्वं प्राप । तद्विरहासहिष्णुत्वादिति भावः ॥ ८ ॥

त्वदीयेति ॥ हे विद्वन् सर्वान्तर्यामिन्नित्यर्थः । तव इयं त्वदीया त्वत्सम्बन्धिनीत्यर्थः या सेवा तस्याः अवसरं समयं प्रतीक्षन्ते इति तथोक्तैः शक्रमुखैः इन्द्रादिभिः सुरैः देवैः अभ्यर्थितः प्रार्थितः अहं समयोचितेन विहङ्गरूपेण पारावतरूपेण पक्षिच्छद्मनेत्यर्थः । त्वां अन्वेष्टुं मृगयितुम् उपागतः प्राप्तः अस्मि ॥ ९ ॥

इतीति ॥ हे प्रभो हे भगवन् । तत् तस्मात् कारणात् हेतोः । इति चेतसि अन्तःकरणे सम्प्रधार्य सम्यक् विचार्य

---

(३) बहिःस्थितोऽपि । (४) त्वदनीक्षणेन । (५) मम ।

पराभिभूता वद किं क्षमन्ते
कालातिपातं शरणार्थिनोऽमी ॥ १० ॥

प्रभो (६)प्रसीदाशु (७)सृजात्मपुत्रं
यं प्राप्य सेनान्यमसौ सुरेन्द्रः।
(८)स्वर्लोकलक्ष्मीप्रभुता(९)मवाप्य
जगत्त्रयं पाति तव प्रसादात् ॥ ११ ॥

नः अस्माकम् अपराधं छलेन त्वद्विहारप्रदेशागमनरूपं क्षमस्व सहस्व। अकाले इन्द्रप्रेरितस्य तवापराधः कथं सोढव्य इत्याशङ्क्याह—परेति ॥ परैः अरिभिः अभिभूताः प्रपीड़िताः अतएव शरणार्थिनः त्राणार्थिनः। रक्षितारं याचमाना इत्यर्थः। अमी इन्द्रादयः कालस्य समयस्य सम्बन्धिनः अतिपातं विलम्बं किं कथं क्षमन्ते सहन्ते। वद कथय। न क्षमन्ते इत्यर्थः। पीड़ितैः कालातिपातो न सह्यते इति भावः ॥ १० ॥

प्रभो इति ॥ हे प्रभो निग्रहानुग्रहसमर्थ। आशु सत्वरं प्रसीद प्रसन्नो भव। आत्मनः स्वस्य पुत्रं तनयं सृज उत्पादय। यं भवत्पुत्रं सेनान्यं सैनिकं प्राप्य लब्ध्वा आश्रित्येत्यर्थः। असौ सुरेन्द्रः देवराजः तव प्रसादात् कृपाया हेतोः। स्वर्लोकस्य स्वर्गस्य या लक्ष्मीः श्रीः तस्याः। परहृताया इति भावः। प्रभुता आधिपत्यं तां अधिकारित्वमित्यर्थः। अवाप्य प्राप्य शत्रुजयेनेति भावः। जगत्त्रयं त्रिभुवनं पाति पालयिष्यति। वर्तमानसामीप्ये लट् ॥ ११ ॥

---

(६) प्रसीदाथ। (७) सृजाशु पुत्रम्, सृजस्व पुत्रम्।
(८) स्वर्गैकलक्ष्मी। (९) उपेत्य।

स शङ्करस्तामिति जातवेदो-
विज्ञापनामर्थवतीं निशम्य ।
अभूत्प्रसन्नः परितोषयन्ति
गीर्भिर्गिरीशा रुचिराभिरीशम् ॥ १२ ॥

प्रसन्नचेता (१)मदनान्तकारः
स तारकारेर्जयिनो भवाय ।
शक्रस्य सेनाधिपतेर्जयाय
व्यचिन्तयच्चेतसि भावि किञ्चित् ॥ १३ ॥

युगान्तकालाग्निमिवाविषह्यं
परिच्युतं मन्मथरङ्गभङ्गात् ।

स इति ॥ स शङ्करः इति पूर्वोक्ताम् अर्थवतीम् अर्थयुक्तां सत्यामित्यर्थः । जातवेदसः अग्नेः या विज्ञापना प्रार्थना तां निशम्य आकर्ण्य प्रसन्नः सन्तुष्टः अभूत् । तथाहि । गिरां वाचाम् ईशाः वाग्मिनः पुरुषाः । कर्तारः । रुचिराभिः मनोहारिणीभिः गीर्भिः वाक्यैः ईशं प्रभुं कर्मभूतं परितोषयन्ति सन्तोषयन्ति । अर्थान्तरन्यासोऽलङ्कारः ॥ १२ ॥

प्रसन्नेति ॥ प्रसन्नचेताः हृष्टचित्तः स मदनान्तकारः स्मरारिः शिवः जयिनः जयशीलस्य तथा जयाय शत्रुजयार्थं शक्रस्य इन्द्रस्य सेनाधिपतेः तारकारेः तारकासुरघातकस्य स्वापत्यस्येत्यर्थः । भवाय उत्पत्तये चेतसि चित्ते भावि भविष्यत् किञ्चित् व्यचिन्तयत् चिन्तयामास । विचचारेत्यर्थः ॥१३

युगान्तेति ॥ अथ चिन्तनानन्तरं स शिवः । युगान्तकाल

(१) मदनान्तकारी ।

रतान्तरेतः स हिरण्यरेत-
स्यथोर्ध्वरेतास्तदमोघमाधात् ॥ १४ ॥
(२)अथोष्णबाष्पानिलदूषितान्तं
विशुद्धमादर्शमिवात्मदेहम्।
बभार भूम्ना सहसा पुरारि-
(३)रेतःपरिक्षेपकुवर्णमग्निः ॥ १५ ॥
त्वं सर्वभक्षो भव भीमकर्मा
क्रुधाभिभूतोऽनल धूमगर्भः।

अग्निमिव अविषह्यं सोढुमशक्यं मन्मथरङ्गस्य कामक्रीड़ायाः भङ्गात् हेतोः परिच्युतं स्खलितं भ्रष्टमिति यावत्। तथा अमोघं सफलम् अव्यर्थमिति यावत्। तत् प्रसिद्धं रतान्तरेतः सुरतान्तवीर्यं हिरण्यरेतसि अग्नौ आधात् निक्षिप्तवान्। यतः ऊर्ध्वम् ऊर्ध्वगामि इत्यर्थः। नत्वधोगामि तेन पार्वतीयोनौ न पतितमिति भावः। रेतः वीर्यं यस्य तथाभूतः ॥ १४ ॥

अथेति ॥ अथ रेतोनिधानानन्तरमित्यर्थः। अग्निः हुताशनः। कर्ता। विशुद्धं पवित्रम् आत्मदेहं निजशरीरम्। उष्णः यः बाष्पानिलः तेन मुखमारुतेन दूषितं मलिनीकृतम् अन्तः मध्यं यस्य तथोक्तम् आदर्शं दर्पणमिव सहसा भूम्ना आधिक्येन पुरारेः शिवस्य सम्बन्धिनः रेतसः वीर्यस्य परिक्षेपः सेकः तेन कुवर्णं मलिनवर्णं बभार दधौ ॥ १५ ॥

त्वमिति ॥ अद्रेः सुता पार्वती। कर्त्री। रतस्य सुरतस्य यः आनन्दः हर्षः तत्र यत् सुखं तस्य भङ्गात् नाशात् हेतोः रेतःपातेनेति भावः। रुष्टा कुपिता सती। हे अनल अग्ने।

---

(२) अथोष्णबाष्पानलदूषितान्तर्, अत्युष्णबाष्पानिलदूषितान्तर्। (३) रेतःपरिक्षिप्तकुवर्णम्, रेतःपरिक्षेपविवर्णम्।

इत्थं शशापाक्षरिसुता हुताशं
(४)रुष्टा रतानन्दसुखस्य भङ्गात् ॥ १६ ॥
दक्षस्य शापेन शशी (५)क्षयीव
(६)प्लुष्टो हिमेनेव सरोजकोशः ।
वहन् विरूपं वपुरुग्ररेत-
श्चयेन वह्निः किल निर्जगाम ॥ १७ ॥
स (७)पावकालोकरुषा विलक्षां
स्मरत्रपास्मेरविनम्रवक्त्राम् ।

त्वं सर्वं खाद्यम् अखाद्यं वा भक्षतीति तथोक्तः । तथा भीमं भयोत्पादकं कर्म यस्य तथोक्तः । तथा कुष्ठेन अतिपातकप्रायश्चित्तार्हेण रोगविशेषेण अभिभूतः पराभूतः । तथा धूमः गर्भे मध्ये यस्य तथोक्तः भव । इत्थम् अनेन प्रकारेण हुताशम् अनलं शशाप अभिशप्तवती ॥ १६ ॥

दक्षस्येति ॥ वह्निः अग्निः दक्षस्य प्रजापतेः शापेन । हेतौ तृतीया । क्षयी क्षयरोगी शशी चन्द्र इव । तथा हिमेन शिशिरेण शीतेनेति यावत् प्लुष्टः दग्धः क्षयं गत इत्यर्थः । सरोजकोश इव कमलकोश इव । वपुः निजदेहम् उग्रस्य महादेवस्य । "उग्रः कपर्दी श्रीकण्ठः" इत्यमरः । रेतसः वीर्यस्य चयेन संघातेन हेतुना ॥ "शुक्रं तेजोरेतसी च" इत्यमरः । विगतं भ्रष्टं रूपं शोभा यस्य तथोक्तं वहन् निर्जगाम सम्भोगगृहात् निःसृतवान् । किलेति प्रसिद्धौ ॥ १७ ॥

स इति ॥ स शिवः । पावकस्य वह्नेः आलोकेन सम्भोगसमये दर्शनेनेत्यर्थः । या रुट् क्रोधः तया । हेतौ तृतीया ।

---

(४) तथा । (५) क्षयाय । (६) प्रुषः । (७) पावकालोकनतः

विनोदयामास (८)गिरीन्द्रपुत्रीं
शृङ्गारगर्भैर्मधुरैर्वचोभिः ॥ १८ ॥
हरो विकीर्णं घनघर्मतोयै-
र्नेत्राञ्जनाङ्कं (९)हृदयप्रियायाः।
द्वितीयकौपीनचलाञ्चलेना-
(१)हरन्मुखेन्दोरकलङ्किनो(२)ऽस्याः ॥१९॥
मन्देन (३)खिन्नाङ्गुलिना करेण
(४)कम्प्रेण तस्या वदनारविन्दात्।

विलक्षां विकृतः लक्षः लक्षणं चिह्नं शरीरकान्तिः यस्याः तथोक्ताम्। तथा स्मरत्रपाभ्यां कन्दर्पलज्जाभ्यां स्मेरम् ईषद्धास्ययुक्तं विनम्रं विनतञ्च वक्त्रम् आननं यस्याः तथाभूतां गिरीन्द्रस्य हिमाचलस्य पुत्रीं कन्यां पार्वतीं शृङ्गारगर्भैः। शृङ्गारसंक्रान्तैरित्यर्थः। मधुरैः मनोहरैः वचोभिः वाक्यैः विनोदयामास। प्रसादितवानित्यर्थः॥ १८॥

हर इति॥ हरः शिवः हृदयप्रियायाः प्राणप्रियायाः पार्वत्याः अकलङ्किनः कलङ्करहितस्य मुखेन्दोः मुखकमलस्य सम्बन्धिनं तथा घनानि निविडानि यानि घर्मतोयानि ग्रीष्मजनितस्वेदजलानि तैः विकीर्णं नेत्रयोः नयनयोः अञ्जनमेव अङ्कः कलङ्कः तं द्वितीयं यत् कौपीनं योगिनः स्कन्धलम्बि वस्त्रम्। "कौपीनं स्यादधोवस्त्रं योगिनः स्कन्धलम्बि च" इति मेदिनी॥ तस्य चलं चञ्चलं यत् अञ्चलं प्रान्तभागः तेन अहरत् हृतवान्। निष्कलङ्कस्य कलङ्कस्यानौचितत्वादिति भावः॥ १९॥

(८) नगेन्द्रपुत्रीम्। (९) सदयं प्रियायाः। (१) हरन्।
(२) अपि (३) खिन्नाङ्गुलिना। (४) कम्पेन, प्रेम्णा च।

परामृशन् घर्मजलं जहार
हरः सहेलं व्यजनानिलेन ॥ २० ॥
रतिस्रथं तत्कबरीकलाप-
मंसावसक्तं विगलत्प्रसूनम् ।
स पारिजातोद्भवपुष्पमय्या
स्रजा बबन्धामृतमूर्तिमौलिः ॥ २१ ॥
कपोलपाल्यां मृगनाभिचित्र-
पत्रावलीमिन्दुमुखः सुमुख्याः ।

मन्देनेति ॥ हरः शिवः मन्देन लघुप्रचारेण । तथा स्विन्नाः घर्मयुक्ताः अङ्गुलयः यस्य तथोक्तेन । तथा कम्पेण कम्पवता करेण हस्तेन करणेन तस्याः पार्वत्याः वदनारविन्दात् मुखपङ्कजात् घर्मजलं स्वेदवारि परामृशन् अपनयन् हेलया विलासेन सह वर्तमानं सहेलं यथा तथा व्यजनस्य तालवृन्तस्य अनिलेन वायुना जहार शोषयामास ॥ २० ॥

रतीति ॥ अमृतमूर्तिः इन्दुः मौलौ मस्तके यस्य स तथोक्तः हरः महादेवः । कर्ता । रत्या सुरतव्यापारेण स्रथं च्युतं शिथिलबन्धनमित्यर्थः । अतएव अंसयोः स्कन्धयोः अवसक्तं विलग्नं अतएव विगलन्ति अधःपतन्ति प्रसूनानि पुष्पाणि यस्मात् तथोक्तं तस्याः पत्न्याः कबरीकलापं केशसमूहं कर्मभूतं पारिजातात् कल्पवृक्षात् उद्भवन्तीति तथोक्तानि कल्पवृक्षोत्पन्नानि यानि पुष्पाणि कुसुमानि तन्मयी तत्प्रचुरा या स्रक् माला तया करणभूतया बबन्ध संयमितवान् ॥ २१ ॥

कपोलेति ॥ इन्दुः मुखे मस्तके । अत्र मुखशब्देन मस्तकं लक्ष्यते । यस्य तथाभूतः शिवः कर्तृभूतः । सु सुन्दरं मुख

स्मरस्य सिद्धस्य जगद्विमोह-
मन्त्राक्षरश्रेणिमिवोल्लिलेख ॥ २२ ॥
रथस्य (५)कर्णावभि तन्मुखस्य
ताटङ्कचक्रद्वितयं (६)न्यधात् सः ।
जगज्जिगीषुर्विषमेषुरेष
ध्रुवं यमारोहति पुष्पचापः ॥ २३ ॥
तस्याः स कण्ठे (७)पिहितस्तनाग्रां
न्यधत्त मुक्ताफलहारवल्लीम् ।

वदनं यस्याः तथोक्तायाः पार्वत्याः सम्बन्धिन्यां कपोलपाल्यां गण्डलेखायां मृगनाभ्याः कस्तूर्याः या चित्रा नानाविधा पत्रावली तां सिद्धस्य सिद्धिं गतस्य कृतकार्यस्येत्यर्थः । स्मरस्य कन्दर्पस्य जगन्ति विमुह्यन्ति यैः तथोक्तानां मन्त्राणां यानि अक्षराणि वर्णाः तेषां श्रेणिमिव पङ्क्तिमिव उल्लिलेख लिखितवान् ॥ अत्र वस्तूत्प्रेक्षालङ्कारः ॥ २२ ॥

रथस्येति ॥ स हरः कर्णौ अभि कर्णसम्मुखे कर्णयोरित्यर्थः । तस्याः पार्वत्याः मुखस्य तन्मुखस्य पार्वतीमुखरूपस्य रथस्य ताटङ्के कर्णालङ्कारविशेषौ एव चक्रे तयोर्द्वितयं न्यधात् अर्पितवान् । यतः विषमेषुः पञ्चशरः एष पुष्पचापः रथम् आरोहति । ध्रुवमुत्प्रेक्षायाम् । कामस्ताटङ्करमणीयेन पार्वतीमुखेन जगत् विजेतुमिच्छतीति भावः ॥ २३ ॥

तस्या इति ॥ स शिवः तस्याः पत्न्याः कण्ठे गलदेशे । पिहिते आच्छादिते स्तनाग्रे चूचुके यया तथाभूतां मुक्ता-

(५) कर्णावलितं मुखस्य । (६) न्यधात् ।
(७) अभिघनस्तनाग्रम् ।



(८)या प्राप मेरुद्वितयस्य मूर्ध्नि
स्थितस्य गङ्गौघयुगस्य लक्ष्मीम् ॥ २४ ॥
नखव्रण(९)श्रेणिवरे बबन्ध
नितम्बबिम्बे रशनाकलापम् ।
(१)चलस्वचेतोमृगबन्धनाय
मनोभुवः पाशमिव स्मरारिः ॥ २५ ॥
भालेक्षणाग्नौ स्वयमञ्जनं स
(२)भङ्क्त्वा दृशोः साधु निवेश्य तस्याः ।

फलानां मुक्तानां हारवल्लीं हारयष्टिं न्यधत्त दत्तवान् । या मुक्ताफलहारवल्ली । कर्त्री । मेरुद्वितयस्य सुमेरुपार्वतद्वयस्य मूर्ध्नि मस्तके स्थितस्य गङ्गौघयुगस्य गङ्गाप्रवाहद्वयस्य लक्ष्मीं शोभां प्राप । तद्वत् शुशुभे इत्यर्थः । अत्र निदर्शनालङ्कारः । तदुक्तम् "सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना" इति ॥ २४ ॥

नखेति ॥ स्मरारिः कामशत्रुः हरः । नखव्रणश्रेणिभिः नखक्षतपङ्क्तिभिः आत्मकृताभिः वरे रमणीये तस्याः नितम्बबिम्बे चलम् अस्थिरं यत् स्वस्य आत्मनः चेतः चित्तमेव मृगः तस्य बन्धनाय बन्धनार्थं मनोभुवः कामस्य पाशं बन्धनरज्जुमिव रसनाकलापं काञ्चीदाम बबन्ध निवेशितवान् । अत्र उत्प्रेक्षालङ्कारः ॥ २५ ॥

भालेक्षणेति ॥ स शिवः । भाले ललाटे यत् ईक्षणं नेत्रं तदेव अग्निः । प्रदीपरूप इत्यर्थः । तत्र अञ्जनं कज्जलं स्वयं भङ्क्त्वा पातयित्वा स्वाङ्गुल्यावर्तित शेषः । नवोत्पन्नलज्जायाः नव

(८) सा । (९) श्रेणिकरे । (१) चलत् । (२) त्यक्त्वा

नवोत्पलाक्ष्याः (३)पुलकोपगूढे
कण्ठे (४)विनीलेऽङ्गुलिमुज्जवर्ष ॥ २६ ॥

अलक्तकं पादसरोरुहाग्रे
सरोरुहाक्ष्याः किल सन्निवेश्य।
स्वमौलिगङ्गासलिलेन हस्ता-
रुणत्वमक्षालय(५)दिन्दुचूडः ॥ २७ ॥

भस्मानुलिप्ते वपुषि स्वकीये
सहेलमादर्शतलं विमृज्य।

पङ्कजनयनायाः तस्याः पार्वत्याः दृशोः नयनयोः साधु सम्यक् यथा तथा निवेश्य अञ्जयित्वा कज्जलेन नेत्रे रञ्जयित्वेत्यर्थः। पुलकैः रोमाञ्चैः उपगूढे व्याप्ते विशेषनीले श्यामवर्णे कण्ठे स्वस्येति शेषः। अङ्गुलिम् उज्जवर्ष उद्घृष्टवान्। यथा केनचिद्दोपोपरि कज्जलं पातयित्वा स्वप्रियाया नयने रञ्जयित्वा स्वाङ्गुली क्वचिदुद्घृष्यते तद्वदिति भावः। अत्र स्वभावोक्तिरलङ्कारः ॥ २६ ॥

अलक्तकमिति ॥ इन्दुचूडः चन्द्रमौलिः हरः। कर्त्ता। सरोरुहाक्ष्याः पङ्कजनेत्रायाः पार्वत्याः सम्बन्धिनि पादसरोरुहाग्रे चरणपद्मप्रान्ते अलक्तकं लाक्षारसं सन्निवेश्य अनुलिप्य रञ्जयित्वेत्यर्थः। स्वहस्तेनेति शेषः। स्वस्य मौलौ मस्तके यत् गङ्गायाः सलिलं जलं तेन करणभूतेन हस्तस्य करस्य अरुणत्वम् अलक्तकरसम् अक्षालयत् ममार्ज। अपनीतवानित्यर्थः ॥२७॥

भस्मेति ॥ स हरः। भस्मभिः विभूतिभिः अनुलिप्ते आहृते स्वकीये आत्मीये वपुषि देहे आदर्शतलं दर्पणान्तं विमृज्य

---

(३) पुलकोपगूढः। (४) विनीलाङ्गुलिम्। (५) इन्दुमौलिः।

नेपथ्य(६)लक्ष्म्याः परिभावनार्थम्
अदर्शयज्जीवितवल्लभां सः ॥ २८ ॥
प्रियेण दत्ते मणिदर्पणे (७)सा
(८)सम्भोगचिह्नं स्ववपुर्विभाव्य ।
त्रपावती तत्र घनानुरागं
रोमाञ्चदम्भेन बहिर्बभार ॥ २९ ॥
नेपथ्यलक्ष्मीं दयितोपक्लृप्तां
सस्मेरमादर्शतले विलोक्य ।

परिष्कृत्य । नेपथ्यस्य वेशस्य लक्ष्म्याः शोभायाः परिभावनार्थं दर्शनाय जीवितवल्लभां प्राणप्रियां पत्नीं हेलया विलासेन सह वर्तमानं यथा तथा अदर्शयत् अर्पयामासेत्यर्थः ॥ २८ ॥

प्रियेणेति ॥ सा पार्वती । कर्त्री । प्रियेण शिवेन । कर्त्रा । दत्ते अर्पिते मणिदर्पणे मणिमयादर्शे सम्भोगस्य सुरतजनितसुखस्येत्यर्थः । चिह्नानि नखव्रणादीनि यत्र तत्तथोक्तं स्वस्य आत्मनः वपुः देहं विभाव्य दृष्ट्वा त्रपावती लज्जावती सती तत्र प्रिये हरे घनः निबिड़ः यः अनुरागः प्रेम तं कर्मभूतम् । रोमाञ्चानां पुलकानां दम्भेन छलेन बहिः बाह्यदेशे बभार धृतवती । तस्या हृदयस्थितोऽनुरागो रोमाञ्चत्वेन बहिः परिणत इति भावः ॥ २९ ॥

नेपथ्येति ॥ सा पार्वती दयितेन प्रियेण हरेण उपक्लृप्तां विरचितां नेपथ्यस्य अलङ्करणस्य लक्ष्मीं शोभां आदर्शतले दर्पणतले स्मेरेण ईषद्धास्येन सह वर्त्तमानं यथा तथा विलोक्य दृष्ट्वा उद्भूतविलक्षभावा जातसलज्जभावा सती

---

(६) लक्ष्मी । (७) च । (८) संयोगचिह्नम् ।

अमंस्त सौभाग्यवतीषु धुर्य-
मात्मानमुद्भूत(८)विलक्षभावा ॥ ३० ॥
अन्तः प्रविश्यावसरेऽथ तत्र
स्निग्धे वयस्ये विजया जया च ।
(१)सुसम्पदोपाचरतां कलानाम्
(२)अङ्के स्थितां तां शशिखण्डमौलेः ॥३१॥
व्यधुर्बहिर्मङ्गलगानमुच्चैः
वैतालिका(३)श्चित्रचरित्रचारु ।

आत्मानं सौभाग्यवतीषु प्रियवाल्लभ्यवतीषु पतिप्रियतमा-स्वित्यर्थः मध्ये । निर्धारे सप्तमी । धुर्यं अग्रगण्यम् अमंस्त मेने । प्रियकृतनेपथ्यस्यान्यदुर्लभत्वादिति भावः ॥ ३० ॥

अन्तरिति ॥ अथ नेपथ्यरचनानन्तरम् अत्र अवसरे काले स्निग्धे प्रणययुक्ते वयस्ये सख्यौ सखीभावापन्ने विजया जया च । "आलिः सखी वयस्या च" इत्यमरः । कथंभूते । अन्तः गृहाभ्यन्तरं प्रविश्य गत्वा तत्र अन्तर्वेश्मनि । शशिनः खण्डं मौलौ शिरसि यस्य तथोक्तस्य हरस्य अङ्के क्रोडदेशे स्थिताम् उपविष्टां तां पार्वतीं कलानाम् अलङ्करणचातुर्यविशेषाणां कामोपकरणविशेषाणां वा सु शोभनया सम्पदा समृद्ध्या उपाचरतां सेवितवत्यौ । अलञ्चक्रतुरित्यर्थः ॥ ३१ ॥

व्यधुरिति ॥ बहिः बाह्यप्रदेशे वैतालिकाः स्तुतिपाठकाः । कर्तारः । पिनाकः पिनाकाभिधेयधनुः पाणौ हस्ते यस्य तथोक्तस्य हरस्य प्रमोदाय सन्तोषाय प्रमोदमुत्पादयितु-

---

(८) विलक्षता सा, विलक्षभावम् ।
(१) उमां सदोपाचरतां कलाभाम्, सुसम्पदोपाचरतां कलानाम् ।
(२) दूरे स्थिताम्, अङ्कस्थिताम् । (३) चित्रितचारुवेषाम् ।

जगुश्च गन्धर्वगणाः सशङ्ख-
(४)स्वनं प्रमोदाय पिनाकपाणेः ॥ ३२ ॥
ततः स्वसेवावसरे सुराणां
गणांस्तदालोकनतत्पराणाम् ।
द्वारि प्रविश्य प्रणतोऽथ नन्दी
निवेदयामास कृताञ्जलिः सन् ॥ ३३ ॥
महेश्वरो मानसराजहंसीं
करे दधानस्तनयां हिमाद्रेः ।

मित्यर्थः । निमित्तार्थे चतुर्थी । चित्रेण चरित्रेण चारु मनोहारि मङ्गलगानं मङ्गलरूपं गीतम् उच्चैः उच्चशब्देन व्यधुः कृतवन्तः । गन्धर्वाणां गायकविशेषाणां गणाः संघाश्च शङ्खस्य पाञ्चजन्यस्य स्वनेन वादेन सह वर्तमानं यथा तथा जगुः गीतवन्तश्च ॥ ३२ ॥

तत इति ॥ ततः तदनन्तरं नन्दी । कर्ता । द्वारि द्वारदेशे प्रविश्य गत्वा । नत्वभ्यन्तरं इत्यर्थः । प्रणतः कृतप्रणामः । अथ प्रणामानन्तरं कृताञ्जलिः रचिताञ्जलिः सन् स्वस्य आत्मनः हरस्येत्यर्थः । सेवायाः परिचर्यायाः अवसरे काले उपस्थितानिति शेषः । तस्य हरस्य आलोकने दर्शने तत्पराणाम् आसक्तानां सुराणां देवानां गणान् संघान् कर्मभूतान् निवेदयामास विज्ञापयामास । सुराणामागमनं हरं बोधयामासेत्यर्थः ॥ ३३ ॥

महेश्वर इति ॥ महान् ईश्वरः षडैश्वर्यवान् हरः । मानस चित्तरूपं यत् सरः सरोवरः तस्य राजहंसीं चित्तविहारिणीमित्यर्थः । हिमाद्रेः हिमालयस्य तनयां कन्यां पार्वतीं क

(४) ध्वनिम् ।

सम्भोगलीलालयतः सहेलं
(५)हरो बहिस्तानभि निर्जगाम ॥ ३४ ॥
क्रमान्महेन्द्रप्रमुखाः प्रणेमुः
शिरोनिबद्धाञ्जलयो (६)महेशम्।
प्रालेयशैलाधिपतेस्तनूजां
देवीं च लोकत्रयमातरं (७)ते ॥ ३५ ॥
यथागतं तान् विबुधान् विसृज्य
(८)प्रसाद्य मानक्रियया प्रतस्थे।

से दधानः धारयन् सन्। सम्भोगलीलायाः सुरतक्रीड़ायाः लयतः मन्दिरात्। पञ्चम्यां तसप्रत्ययः। हेलया लीलया ह वर्तमानं यथा तथा तान् सुरान् अभि वहिः निर्जगाम। शानां समीपमाजगामित्यर्थः ॥ ३४ ॥

क्रमादिति ॥ महेन्द्रप्रमुखाः देवराजप्रभृतयः ते देवाः। शिरःसु स्तकेषु निबद्धाः रचिताः अञ्जलयः यैः तथोक्ताः सन्तः महेशं रम्। तथा प्रालेयस्य हिमानीरूपस्य शैलस्य अधिपतिः र्वतराजः हिमालयः तस्य सम्बन्धिनीं तनूजां तनयां लोकयस्य भुवनत्रयस्य मातरं जननीं देवीं पार्वतीञ्च क्रमात् णेमुः। प्रणामं चक्रुरित्यर्थः ॥ ३५ ॥

यथागतमिति ॥ स वृषाङ्कः वृषवाहनः हरः तान् विबुधान् वान् मानक्रियया सम्मानदानेन प्रसाद्य सन्तोष्य तथा गतम् आगतम् आगमनम् अनतिक्रम्य विसृज्य प्रस्थाप्य

---

(५) हसन्। (६) गिरीशम्। (७) ताम्।
(८) प्रसादमानक्रियया. प्रसाद्यमानः प्रियया।

स नन्दिना दत्तभुजोऽधिरुह्य
वृषं वृषाङ्कः सह शैलपुत्र्या ॥ ३६ ॥

मनोऽतिवेगेन ककुद्मता स
प्रतिष्ठमानो (१)गगनाध्वनोऽन्तः ।
वैमानिकैः साञ्जलिभिर्ववन्दे
विहारहेलागतिभिर्गिरीशः ॥ ३७ ॥

स्वर्वाहिनीवारिविहारचारी
रतान्तनारीश्रमशान्तिकारी ।

च । नन्दिना भृत्येन दत्तः भुजः हस्तावलम्बः यस्मै तथाभूत सन् शैलस्य पुत्र्या कन्यया पार्वत्या सह वृषम् अधिरु आस्थाय प्रतस्थे जगाम ॥ ३६ ॥

मन इति ॥ मनसोऽपि चित्तादपि अति अत्यन्तं वेग गतिः यस्य तथोक्तेन ककुद्मता वृषभेण गगनमेव अध्वा पन्था तस्य अन्तः मध्ये प्रतिष्ठतं गच्छतीति प्रतिष्ठमानः गच्छ स गिरीशः हरः विहारे क्रीडायां हेलया विलासेन गति गमनं येषां तथोक्तैः विमानैश्चरन्तीति तथोक्तैः खेचरैरित्यर्थः अञ्जलिभिः सह वर्तमानैः कृताञ्जलिभिः सद्भिः कर्तृभिः ववन्दे वन्दितः नमस्कृत इति यावत् । कर्मणि लिट् ॥ ३७ ॥

स्वरिति ॥ स्वर्वाहिन्याः स्वर्गगङ्गाया मन्दाकिन्याः स म्बिभिः वारिभिः जलैः यो विहारः सञ्चारः तं चरती तथोक्तः मन्दाकिनीशीकरयुक्त इत्यर्थः । अनेन विशेषणप मास्य शैत्योक्तिः । रतान्ते सुरतावसाने नारीणां रमणीनां श्रमः खेदः तस्य शान्तिं नाशं करोतीति तथोक्तः । अनेना

(१) गगनाध्वनीनः ।

तौ पारिजातप्रसवप्रसङ्गः

मरुत्सिषेवे गिरिजागिरीशौ ॥ ३८ ॥

पिनाकिनापि स्फटिकाचलेन्द्रः

कैलासनामा कलिताम्बरांशः।

धृतार्धसोमो(१)ऽद्भुतभोगिभोगः

विभूतिधारी स इव प्रपेदे ॥ ३९ ॥

मान्द्योक्तिः। तथा पारिजातस्य कल्पतरोः सम्बन्धिनां प्रसवानां पुष्पाणां प्रसङ्गः सम्बन्धो यस्य तथाभूतः। एतेनास्य सौगन्ध्योक्तिः। मरुत् पवनः। कर्ता। तौ गिरिजागिरीशौ पार्वतीपरमेश्वरौ कर्मभूतौ सिषेवे परिचचार। आराधयामासेत्यर्थः ॥ ३८ ॥

पिनाकिनेति॥ पिनाकोऽस्यास्तीति पिनाकी तेन हरेणापि कर्त्रा। कलितः स्पृष्टः अम्बरांशः आकाशस्कन्धदेशः येन तथोक्तः। अनेनास्य अभ्रङ्कषत्वं गम्यते। अन्यत्र कलितः व्याप्तः अम्बरांशः आकाशभागः येन तथोक्तः। आकाशमयैकमूर्तित्वादिति भावः। अर्धः यः सोमः चन्द्रः सोऽस्यास्तीति अर्धसोमः हरः स धृतः येन। गिरीशः कैलासवासीति भावः। अन्यच धृतः गृहीतः अर्धसोमः शशिखण्डः येन तथोक्तः। गिरीशस्य चन्द्रशेखरत्वादिति भावः। अद्भुतः विचित्रः भोगिनां सुखभोगनिरतानां भोगः भोग्यवस्तु यत्र तथाभूतः। देवनिलयत्वादिति भावः। अन्यत्र अद्भुताः भोगिनां सर्पाणां भोगाः देहाः यत्र। सर्पभूषणो महादेव इति भावः। विभूतिं धरतीति विभूतिधारी। समृद्धिमानित्यर्थः। अन्यत्र विभूतिं भस्म धरतीति विभूतिधारी भस्माङ्कितशरीरः। "भूतिर्भस्मनि सम्पदि" इत्यमरः। तथा कैलासनामा स्फटिकानां रजतानां

(१) भृतभोगिभोगः।

विलोक्य यत्र स्फटिकस्य भित्तौ
सिद्धाङ्गनाः (२)स्वं प्रतिबिम्बमारात्।
भ्रान्त्या (३)परस्या विमुखीभवन्ति
प्रियेषु मानग्रहिला (४)नमत्सु ॥ ४० ॥

सुबिम्बितस्य स्फटिकांशुगुप्तेः
चन्द्रस्य चिह्नप्रकरः करोति।
गौर्यार्पितस्येव रसेन यत्र
(५)कस्तूरिकायाः शकलस्य लीलाम् ॥४१॥

अचलेन्द्रः गिरीन्द्रः कर्मभूतः। स्व इव आत्मा इव प्रपेदे प्राप्तः। कर्मणि लिट् ॥ ३९ ॥

विलोक्येति॥ यत्र कैलासगिरौ सिद्धानां देवयोनिविशेषाणां अङ्गनाः स्त्रियः स्फटिकस्य भित्तौ कुड्ये आरात् समीपे। "आराद् दूरसमीपयोः" इत्यमरः। पतितं स्वम् आत्मीयं प्रतिबिम्बं विलोक्य दृष्ट्वा परस्याः परकीयायाः सपत्न्याः भ्रान्त्या भ्रमेण इयं सपत्नी वा अन्येति भ्रमबुद्ध्येत्यर्थः। प्रियेषु पतिषु नमत्सु नाहमन्यासक्त इति प्रणतेष्वपि मानग्रहिलाः मानिन्यः सत्यः विमुखीभवन्ति पराङ्मुखीभवन्ति कुप्यन्तीत्यर्थः ॥४०॥

सुबिम्बितस्येति॥ यत्र स्फटिकाद्रौ सुबिम्बितस्य प्रतिबिम्बितस्य अतएव स्फटिकानां अंशुभिः किरणजालैः गुप्तिः गोपनं यस्य तथोक्तस्य उभयोस्तुल्यवर्णत्वात् पृथग्रूपेणाप्रतीयमानस्येति भावः। चन्द्रस्य इन्दोः सम्बन्धी चिह्नप्रकरः कलङ्कसञ्चयः गौर्या पार्वत्या कबर्यां अर्पितस्य कुत्रचित् निहितस्य

(२) स्वप्रतिबिम्बम्। (३) परस्याभिमुखीभवन्ति।
(४) मनःसु। (५) कस्तूरिकायाःसकलस्य।

यदीयभित्तौ प्रतिविम्बिताङ्गम्
आत्मानमालोक्य रुषा करीन्द्राः।
मत्तान्य(६)कुम्भिभ्रमतोऽतिभीम-
दन्ताभिघातव्यसनं वहन्ति ॥ ४२ ॥
निशासु यत्र प्रतिविम्बितानि
ताराकुलानि स्फटिकालयेषु।
दृष्ट्वा (७)रतान्तच्युततारहार-
मुक्ताभ्रमं बिभ्रति सिद्धबध्वः ॥ ४३ ॥

कस्तूरिकायाः मृगनाभेः शकलस्य खण्डस्य रसेन रागेण लीलां शोभां करोतीवेत्युत्प्रेक्षालङ्कारः ॥ ४१ ॥

यदीयेति ॥ करीन्द्राः गजश्रेष्ठाः। कर्त्तारः। यदीयभित्तौ यस्य कैलासस्य कुड्ये आत्मानं निजशरीरं प्रतिविम्बिताङ्गं प्रतिविम्बितावयवम् आलोक्य दृष्ट्वा मत्ताः अन्ये ये कुम्भिनः दन्तिनः तेषां भ्रमात् जनितया रुषा कोपेन अतिभीमः अतिभयङ्करः दन्तैर्योऽभिघातः भित्तिषु ताड़नं तेन व्यसनं दुःखं दन्तभग्नादिजनितां व्यथामित्यर्थः। वहन्ति प्राप्नुवन्ति। भ्रमजनितज्ञानं दुःखोत्पादकमिति भावः। अत्र भ्रान्तिमानलङ्कारः। तदुक्तम् "साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता" इति ॥ ४२ ॥

निशास्विति ॥ यत्र स्फटिकपर्वते सिद्धानां देवयोनिविशेषाणां बध्वः स्त्रियः। कर्त्र्यः। स्फटिकालयेषु स्फटिकनिर्मितग्रहेषु प्रतिविम्बितानि प्रतिफलितानि ताराकुलानि नक्षत्रपुञ्जानि निशासु रजनीषु दृष्ट्वा अवलोक्य रतान्ते सुरतावसाने च्युतानां भ्रष्टानां तारहाराणां समुज्ज्वलहाराणां याः

(६) नाग। (७) रतान्ते।

नभश्चरीमण्डनदर्पणश्रीः
सुधानिधिर्मूर्धनि यस्य तिष्ठन् ।
अनर्घ्यचूडामणितामुपैति
(८)शैलाधिनाथस्य शिवालयस्य ॥ ४४ ॥

समीयिवांसो रहसि स्मरार्ता
रिरंसवो यत्र सुराः प्रियाभिः ।
एकाकिनोऽपि प्रतिबिम्बभाजः
विभान्ति भूयोभिरिवान्विताः स्वैः ॥४५॥

मुक्ताः मौक्तिकानि तासां भ्रमं नैतानि लक्षत्राणि प्रतिबिम्बितानि किन्त्वस्माकं हारग्रथितमुक्ताफलान्येवैतानीति भ्रान्तिं बिभ्रति धारयन्ति । अत्रापि भ्रान्तिमानलङ्कारः ॥ ४३ ॥

नभश्चरीति ॥ नभश्चरीणां आकाशचरीणां मण्डनस्य अलङ्करणस्य विलासस्य वा यः दर्पणः आदर्शः तस्येव श्रीः कान्तिर्यस्य तथोक्तः सुधानिधिः इन्दुः । कर्ता । यस्य कैलासाद्रेः मूर्धनि शृङ्गे तिष्ठन् उद्यन्नित्यर्थः शैलाधिनाथस्य हरस्य शिवः सुशोभनः यः आलयः मन्दिरं तस्य अनर्घ्यः अमूल्यः यः चूडामणिः शिरोरत्नं तस्य भावः तत्ताम् उपैति प्राप्नोति । अत्र रूपकोपमयोः सङ्करः ॥ ४४ ॥

समीयिवांस इति ॥ यत्र कैलासे सुराः देवाः स्मरार्ताः कामपीडिताः अतएव प्रियाभिः कान्ताभिः सह रहसि निर्जने रिरंसवः रन्तुमिच्छन्तः । रमतेः सन्नन्तादुप्रत्ययः । अतएव समीयिवांसः सङ्गताः सन्तः एकाकिनोऽपि प्रतिबिम्बं भजन्ते इति प्रतिबिम्बभाजः । स्फाटिककुड्ये प्रतिफलितदेहाः सन्त

(८) शैलाधिराजस्य ।

(८)देवोऽपि गौर्या सह चन्द्रमौलिः
यदृच्छया स्फाटिकशैलशृङ्गे ।
शृङ्गारचेष्टाभिरनारताभिः
मनोहराभिर्व्यहरच्चिराय ॥ ४६ ॥

देवस्य तस्य स्मरसूदनस्य
हस्तं (१)समालिङ्ग्य सुविभ्रमश्रीः ।
सा नन्दिना (२)वेत्रभृतोपदिष्ट-
मार्गा पुरोगेण कलं चचाल ॥ ४७ ॥

इत्यर्थः। अतएव भूयोभिः अनेकैः स्वैः निजदेहैः अन्विताः युक्ता इव विभान्ति शोभन्ते। अत्र उत्प्रेक्षालङ्कारः ॥ ४५ ॥

देव इति ॥ चन्द्रमौलिः चन्द्रशेखरः देवः हरोऽपि स्फाटिकशैलस्य स्फटिकमयपर्वतस्य कैलासस्य शृङ्गे शिखरे गौर्या स्वपत्न्या सह सार्धम्। सहशब्दयोगे तृतीया। यदृच्छया स्वेच्छाक्रमेण यथाभिलाषमित्यर्थः। मनोहराभिः चित्तहारिभिः अतएव अनारताभिः अविच्छिन्नाभिः शृङ्गारचेष्टाभिः सुरतव्यापारैः चिराय बहुकालं व्याप्य व्यहरत् क्रीड़ितवान् ॥४६॥

देवस्येति ॥ सुविभ्रमश्रीः शोभनविलासकान्तिः सा गौरी। कर्त्री। स्मरसूदनस्य कामारेः तस्य देवस्य हरस्य हस्तं करं समालिङ्ग्य अवलम्ब्य पुरोगेण अग्रवर्तिना वेत्रं यष्टिं बिभर्तीति वेत्रभृत् तेन। भृधातोः क्विप्प्रत्ययः। नन्दिना गणेन। कर्त्रा। उपदिष्टः इतो गन्तव्यमिति प्रदर्शितः मार्गः पन्था कर्मभूतः यस्याः सा तथोक्ता सती कलं मधुरं यथा स्यात् तथा चचाल बभ्राम ॥ ४७ ॥

---

(८) दिष्टः। (१) समालम्ब्य। (२) वेत्रभृतोपदिष्टं मार्गम्।

(३)चलच्छिखाग्रो विकटाङ्गभङ्गः
(४)सुदन्तुरः (५)शुक्लसुतीक्ष्णतुण्डः ।
भ्रुवोपदिष्टः स (६)तु शङ्करेण
तस्या विनोदाय ननर्त भृङ्गी ॥ ४८ ॥

कण्ठस्थलीलोलकपालमाला
दंष्ट्राकरालाननमभ्यनृत्यत् ।
प्रीतेन तेन प्रभुणा (७)नियुक्ता
काली कलत्रस्य मुदे प्रियस्य ॥ ४९ ॥

चलदिति ॥ तस्याः पार्वत्याः विनोदाय सन्तोषहेतवे शङ्करेण महादेवेन । कर्त्रा । भ्रुवा भ्रूभङ्ग्या उपदिष्टः त्वया नृत्यं कर्त्तव्यमिति प्रदर्शितः सुदन्तुरः उन्नतदन्तयुक्तः । दन्तशब्दादुरच्प्रत्ययः । शुक्लं शुभ्रं सुतीक्ष्णं अतितिग्मञ्च तुण्डं मुखं यस्य तथोक्तः भृङ्गी गणभेदः । कर्त्ता । चलन्ति चञ्चलानि शिखायाः चूडायाः अग्राणि अग्रभागाः यस्य तथाभूतः तथा विकटाः भयङ्कराः अङ्गभङ्गाः शरीरावयवचेष्टाविशेषाः यस्य तथोक्तः सन् ननर्त नृत्यं कृतवान् ॥ ४८ ॥

कण्ठेति ॥ प्रियस्य दयितस्य कलत्रस्य पत्न्याः पार्वत्याः मुदे सन्तोषाय । निमित्तार्थे चतुर्थी । प्रीतेन हृष्टचित्तेन तेन प्रभुणा निग्रहानुग्रहसमर्थेन हरेण । कर्त्रा । नियुक्ता नृत्यं कुर्विति उपदिष्टा काली । कर्त्री । कण्ठस्थल्यां गलदेशे लोला चला कपालानां मुण्डानां माला यस्याः तथोक्ता सती दंष्ट्राभिः दन्तैः करालं भयजनकम् आननं मुखं यत्र तत् यथा तथा

(३) चलच्छिखाग्रः । (४) सदन्तुरः । (५) शुष्क ।
(६) हि । (७) प्रणुन्ना ।

भयङ्करौ तौ विकटं (८)नदन्तौ
विलोक्य बाला भयविह्वलाङ्गी ।
(६)सरागमुत्सङ्गमनङ्गशत्रो:
गाढं प्रसह्य स्वयमालिलिङ्ग ॥ ५० ॥

उत्तुङ्गपीनस्तन(१)पिण्डपीडं
ससंभ्रमं तत्परिरम्भमीशः ।
प्रपद्य सद्यः पुलकोपगूढः
स्मरेण रूढप्रमदो ममाद ॥ ५१ ॥

पश्यनृत्यत् समन्तात् ननर्त । दैवादिकात् नृतधातोः कर्तरि लङ् ॥ ४६ ॥

भयङ्कराविति ॥ बाला । अनेनास्या मुग्धात्वं सूच्यते । पार्वती । कर्त्री । विकटं उत्कटं यथा तथा नदन्तौ शब्दायमानौ अतएव भयङ्करौ भीतिजनकौ तौ पूर्वोक्तौ कालीभृङ्गिणौ विलोक्य दृष्ट्वा भयेन भीत्या विह्वलं विवशं अङ्गं शरीरं यस्याः तथोक्ता सती प्रसह्य बलेन अनङ्गशत्रोः कामारेः हरस्य उत्सङ्गं क्रोड़देशं गाढ़ं निविड़ं सरागं सानुरागञ्च यथा स्यात् तथा आलिलिङ्ग आलिङ्गितवती । यथा कश्चित् भयविह्वलः सन् कञ्चिदालिङ्गति तद्वदिति भावः ॥ ५० ॥

उत्तुङ्गेति ॥ रूढ़ा उपरिस्थिता प्रमदा जाया यस्य तथोक्तः । अतएव उत्तुङ्गम् उन्नतं पीनं स्थूलं यत् स्तनयोः पिण्डं तेन पीड़ा यत्र तथोक्तम् । स्तनयोरतिपीनतया परस्परमिलितत्वात् पिण्डीभूतत्वं सूच्यते । संभ्रमेण भयेन सह वर्तमानं ससंभ्रमं तस्याः पार्वत्याः परिरम्भम् आलिङ्गनं प्रपद्य लब्ध्वा ईशः हरः । कर्ता । सद्यः तत्क्षणमेव स्मरेण कामेन । हेतौ

(८) नटन्तौ । (६) सुरङ्गम् । (१) पीठ ।

इति गिरि(२)तनुजाविलासलीला-
विविधविभङ्गिभिरेष तोषितः सन् ।
अमृतकरशिरोमणिर्गिरीन्द्रे
कृतवसतिर्वशिभिर्गणैर्ननन्द ॥ ५२ ॥

---

## दशमः सर्गः ।

आससाद सुनासीरं सदसि त्रिदशैः सह ।
(१)एष त्रैयम्बकं तीव्रं वहन्वह्निर्महन्महः ॥ १ ।

तृतीया। पुलकैः रोमाञ्चैः उपगूढः प्राप्तः । जातरोमाञ्च इत्यर्थः सन् ममाद मत्तो बभूव ॥ ५१ ॥

इतीति ॥ गिरीन्द्रे पर्वतराजे कैलासे कृतवसतिः कृताव स्थितिः । तथा अमृतकरः इन्दुः शिरोमणिः चूडारत्नम् यस्य तथाभूतः एष हरः इति एवंप्रकारैः गिरितनुजाया गौर्याः विलासेन या लीला विहारः तस्याः विविधाभि अनेकप्रकारैः भङ्गिभिः रचनाभिः तोषितः प्रीणितः स वशिभिः संयमवद्भिः गणैः नन्दिप्रभृतिभिः प्रमथैः सह सार्धम् सहार्थे तृतीया । ननन्द आनन्दितवान् । पुष्पिताग्रावृत्तम्- "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पि ताग्रा" इति तल्लक्षणात् ॥ ५२ ॥

इति श्रीचित्रमोहनकृतया मोहिनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महा-
काव्ये कैलासगमनो नाम नवमः सर्गः ।

---

आससादेति ॥ एष वह्निः अग्निः । कर्ता । महत् प्रब तीव्रं तीक्ष्णं दुःसहमित्यर्थः । त्रैयम्बकं त्र्यम्बकसम्बन्धि मः

---

(२) सुतया । (१) तत्र, मत्वा ।

सहस्रेण दृशामीशः (२)कुत्सिताङ्गं च सादरम् ।
दुर्दर्शनं ददर्शाग्निं धूम्र(३)धूमितमण्डलम् ॥२॥
दृष्ट्वा तथाविधं वह्निमिन्द्रः (४)क्षुब्धेन चेतसा ।
अचिन्तयच्चिरं किञ्चित्कन्दर्पद्वेषिरोषजम् ॥३॥
(५)स विलक्ष्यमुखैर्देवैर्वीक्ष्यमाणः क्षणं क्षणम् ।
उपाविशत् सुरेन्द्रेणादिष्टं सादरमासनम् ॥ ४ ॥

तेजः वीर्यमिति यावत् । वहन् धारयन् सन् सदसि सभायां त्रिदशैः सुरैः सह सार्धम् । सहार्थे तृतीया । उपविष्टमिति शेषः । सुनासीरं देवेन्द्रं कर्मभूतम् आससाद प्राप्तवान् ॥ १ ॥

सहस्रेणेति ॥ ईशः महेन्द्रः । कर्त्ता । दृशां नयनानां सहस्रेण सहस्रसंख्याभिर्दृग्भिरित्यर्थः । कुत्सितानि अङ्गानि अवयवाः यस्य तथोक्तम् । अतएव दुर्दर्शनम् अप्रियदर्शनमित्यर्थः । तथा धूम्रं धूम्रवर्णं कृष्णलोहितवर्णमिति यावत् धूमितं धूमोऽस्य जातः तथोक्तम् । तारकादित्वादितच्प्रत्ययः । मण्डलं देहो यस्य तं तथोक्तम् अग्निम् अनलम् आदरेण स्नेहेन सह वर्तमानं सादरं यथा तथा ददर्श दृष्टवान् ॥ २ ॥

दृष्ट्वेति ॥ इन्द्रः देवेन्द्रः । कर्त्ता । अग्निं वह्निं तथाविधं कुरूपिणमित्यर्थः । दृष्ट्वा अवलोक्य क्षुब्धेन विचलितेन चेतसा चित्तेन कन्दर्पद्वेषिणः कामशत्रोः हरस्य रोषात् कोपात् जातं किञ्चित् एतत् वैरूप्यमिति शेषः । चिरम् । नत्वल्पक्षणमिति भावः । अचिन्तयत् चिन्तितवान् ॥ ३ ॥

स इति ॥ सः अग्निः वह्निः । कर्ता । विलक्ष्यमुखैः वैरूप्यतदर्शनेन म्लानमुखैः देवैः सुरैः । कर्तृभिः । क्षणं क्षणं प्रतिक्षणम् ।

---

(२) द्युसदां सोऽतिसादरम्, द्युसदां सदि सादरम् ।
(३) धूमिल । (४) क्रुद्धेन ।
(५) सवज्जलमुखैः, सविलक्षमुखैः ।

हव्यवाह त्वयासादि (६)दुर्दशेयं दशा कुतः।
इति पृष्टः सुरेन्द्रेण स निःश्वस्य वचोऽवदत् ॥५॥
अनतिक्रमणीयात्ते शासनात् सुरनायक।
पारावतं वपुः प्राप्य वेपमानोऽतिसाध्वसात् ॥६॥
(७)अभिगौरीरतासक्तं जगामाहं महेश्वरम्।
कालस्येव स्मरारातेः (८)स्वं रूपमहमासदम् ॥७

वीप्सार्थेऽव्ययीभावः। वीक्ष्यमाणः अवलोक्यमानः सन्। सुरेन्द्रेण देवेन्द्रेण। कर्त्रा। सादरं सम्भाषणपूर्वकम्। क्रियाविशेषणमेतत्। आदिष्टं निर्दिष्टम् उपदिष्टमित्यर्थः। आसनम् उपाविशत् उपविष्टवान् ॥ ४ ॥

हव्यवाहेति ॥ सः अग्निः। हे हव्यवाह अग्ने। त्वया। कर्त्रा। इयं दुर्दशा शोचनीया दशा अवस्था। कर्मभूता। कुतः कस्मात् हेतोः आसादि प्राप्ता। कर्मणि लुङ्। इति सुरेन्द्रेण देवेन्द्रेण। कर्त्रा। पृष्टः जिज्ञासितः सन् निःश्वस्य निःश्वास त्यक्त्वा वचः वक्ष्यमाणं वाक्यम् अवदत् उक्तवान् ॥५॥

अनतीति ॥ अभीति ॥ हे सुरनायक देवराज। अनतिक्रमणीयात् अनुल्लङ्घनीयात् अतिक्रमितुमशक्यादित्यर्थः। ते तव शासनात् आज्ञायाः हेतोः अहं पारावतं कपोतसम्बन्धि वपुः शरीरं प्राप्य आसाद्य अतिसाध्वसात् अतिभयात् हेतोः वेपमानः कम्पमानः सन् अभिगौरि गौर्यामित्यर्थः। विभक्त्यर्थेऽव्ययीभावः। रतासक्तं सुरतासक्तं रममाणमित्यर्थः। महेश्वरं परमेश्वरं हरं जगाम गतवान्। अहं स्मरस्य कामस्य अरातिः शत्रुः तस्य हरस्य कालस्येव यमस्येव अतिभयङ्करत्वा-

(६) सुमहादुर्दशा, सुदुर्दर्शा दशा। (७) अतिगौरी।
(८) उपान्तम्।

दृष्ट्वा छद्मविहङ्गं मां सुज्ञो विज्ञाय (६)जम्भभित्।
ज्वलद्भालानले होतुं (१)कोपनो (२)माममन्यत ८
वचोभिर्मधुरैः (३)सार्थैर्विनम्रेण मया स्तुतः।
प्रीतिमानभवद्देवः स्तोत्रं कस्य न तुष्टये ॥ ९ ॥
शरण्यः सकलत्राता मामत्रायत शङ्करः।
क्रोधाग्नेर्ज्वलतो (४)ग्रासात्त्रासतो दुर्निवारतः ॥१०

दिति भावः। स्वं स्वकीयं रूपं आसदम् अपश्यम्। जगमेति लिटः तथा आसदमिति लुङ उत्तमपुरुषैकवचनम्। युग्मकम् ॥ ६ ॥ ७ ॥

दृष्ट्वेति ॥ जम्भं जम्भासुरं भिनत्ति विनाशयतीति जम्भभित्। भिदधातोः क्विप्प्रत्ययः। तत्सम्बोधनम्। हे इन्द्र। सुज्ञः सर्वज्ञः सर्वान्तर्यामीत्यर्थः। स हरः मां दृष्ट्वा अवलोक्य अथच छद्मविहङ्गं कपटपारावतं विज्ञाय ज्ञात्वा कोपनः क्रोधान्वितः। युच्प्रत्ययः। मां ज्वलति प्रज्वलिते भालस्थे ललाटस्थे अनले अग्नौ होतुं दग्धुं अमन्यत मेने ॥ ८ ॥

वचोभिरिति ॥ मया विनम्रेण प्रणतेन सता। कर्त्रा। सार्थैः अभिप्राययुक्तैः यथार्थैरिति यावत्। अतएव मधुरैः मनोहारिभिः रचोभिः वाक्यैः। करणे तृतीया। स्तुतः कृतस्तवः देवः हरः प्रीतिमान् प्रसन्नः अभवत् अभूत्। अत्र सामान्येन विशेषसमर्थनरूपमर्थान्तरं न्यस्यति—स्तोत्रमिति। तथाहि। स्तोत्रं स्तवः कस्य जनस्य तुष्टये तृप्तये न भवति अपितु सर्वस्यापि तुष्टये भवतीत्यर्थः ॥ ९ ॥

शरण्य इति ॥ शरणे रक्षणे साधुः शरण्यः। यत्प्रत्ययः। शरणागतवत्सल इत्यर्थः। अतएव सकलानां जगतां त्राता

(६) ज्ञानवृत्, यज्ञभित् ।(१) कोपनः। (२) भयममन्यत, मामलोकयत्। (३) सान्त्वैः (४) ग्रासत्रासतः।

परिहृत्य (५)परीरम्भरभसं दुहितुर्गिरेः।
कामकेलिरसोत्सेकाद् व्रीड़या विरराम सः॥११॥
रङ्गभङ्गच्युतं रेत(६)स्तदामोघं (७)सुदुर्वहम्।
त्रिजगद्दाहकं सद्यो मद्विग्रह(८)मधि न्यधात्॥१२॥
दुर्विषह्येण तेनाहं तेजसा दहनात्मना।
निर्दग्धमात्मनो देहं दुर्वहं वोढुमक्षमः॥१३॥

रक्षकः शङ्करः हरः ज्वलतः दीप्यमानस्य क्रोधाग्नेः कोपानलस्य दुर्निवारतः निवारयितुमशक्यात् शापात् जातः यः त्रासः भयं तस्मात् मां अत्रायत ररक्ष॥१०॥

परीति॥ स हरः। कर्ता। गिरेः हिमवतः दुहितुः कन्यायाः पार्वत्याः सम्बन्धिनं परीरम्भस्य आलिङ्गनस्य रभसं आवेगं परिहृत्य त्यक्त्वा व्रीड़या लज्जया। इत्यर्थे तृतीया। परपुरुषागमनजनितयेति भावः। कामस्य सुरतस्य केलौ व्यापारे यः रसः रागः तस्य उत्सेकात् आविर्भावात् विरराम विरतवान् ॥११॥

रङ्गेति॥ तदा तत्काले रङ्गस्य सुरतकार्यस्य भङ्गात् विघ्नात् च्युतं भ्रष्टं अमोघं अव्यर्थं सफलमिति यावत् त्रिजगतां त्रिभुवनानां दाहकं त्रिभुवनदहनसमर्थमित्यर्थः। अतएव सुदुर्वहं वोढुमशक्यं रेतः वीर्यं मम विग्रहस्य अधि मम शरीरे इत्यर्थः। सद्यः तत्क्षणमेव न्यधात् अर्पितवान्॥१२॥

दुर्विषह्येणेति॥ अहं। कर्ता। तेन दहनात्मना अग्निरूपेण अतएव दुर्विषह्येण वोढुमशक्येन। सहधातोर्यत्प्रत्ययः तेजसा वीर्येण निर्दग्धं अतएव दुर्वहं वोढुमशक्यं आत्मनः स्वकीयस्य देहं शरीरं वोढुं धारयितुम् अक्षमः जातः॥१३

---

(५) परीरम्भं रभसात्। (६) तदमोघम्।
(७) सुदुर्धरम्। (८) अभिन्यधात्।

रौद्रेण दह्यमानस्य महसातिमहीयसा।
मम प्राणपरित्राणप्रगुणो भव वासव ॥ १४ ॥
इति श्रुत्वा वचो वह्नेः परितापोपशान्तये।
हेतुं विचिन्तयामास मनसा विबुधेश्वरः ॥१५॥
तेजोदग्धानि गात्राणि पाणिनास्य परामृशन्।
किञ्चित् कृपीटयोनिं तं दिवस्पतिरभाषत ॥१६॥
प्रीतः स्वाहास्वधाहन्तकारैः प्रीणयसे स्वयम्।

रौद्रेणेति॥ हे वासव वृत्रहन्। रौद्रेण रुद्रसम्बन्धिना अतिमहीयसा अतिगरीयसा महसा तेजसा दह्यमानस्य दग्धस्येत्यर्थः मम प्राणानां परित्राणेन परिरक्षणेन प्रगुणः विख्यातः भव। शरणागतरक्षणेन महापुण्यं ते भविष्यतीति भावः ॥ १४ ॥

इतीति॥ इति पूर्वोक्तं वचः वह्निवाक्यं श्रुत्वा आकर्ण्य विबुधेश्वरः देवराजः। कर्त्ता। मनसा वह्नेः अग्नेः परितापस्य देहदाहजनितदुःखस्येत्यर्थः उपशान्तये उपशमनार्थं हेतुं कारणं विचिन्तयामास चिन्तितवान् ॥ १५ ॥

तेजोदग्धानीति॥ दिवस्पतिः महेन्द्रः कर्तृभूतः। "शतमन्युर्दिवस्पतिः" इत्यमरः। तेजसा हरसम्बन्धिनेति शेषः। दग्धानि प्लुष्टानि अस्य वह्नेः सम्बन्धीनि गात्राणि अवयवान् पाणिना करेण परामृशन् स्पृशन् सन्। एतेनास्य देवेन्द्रस्यानुगतजने स्नेहातिशयः सूच्यते। तं पूर्वोक्तं कृपीटयोनिं वह्निम्। "कृपीटयोनिर्ज्वलनः" इत्यमरः। किञ्चित् वक्ष्यमाणं वाक्यं अभाषत उवाच। ब्रुवर्थत्वाद्भाषधातोर्द्विकर्मकत्वम् ॥ १६ ॥

प्रीत इति। हे वह्ने। त्वं स्वयं प्रीतः तुष्टः सन् स्वाहा-

देवान् पितॄन् मनुष्यांस्त्वमेकस्तेषां मुखं यतः ॥१७

त्वयि जुह्वति होतारो हवींषि ध्वस्तकल्मषाः ।
(८)भुञ्जन्ति स्वर्गमेकस्त्वं स्वर्गप्राप्तौ हि कारणम् १८

हवींषि मन्त्रपूतानि हुताश त्वयि जुह्वतः ।
तपस्विनस्तपःसिद्धिं यान्ति त्वं (१)तपसां प्रभुः १९

स्वधाहन्तकारैः स्वाहाकारस्वधाकारहन्तकारनामकैः मन्त्रविशेषैः करणैः होतृप्रदत्तहविषेत्यर्थः । देवान् सुरान् पितॄन् अग्निष्वात्तादीन् मनुष्यान् मानवांश्च कर्मभूतान् प्रीणयसि सन्तोषयसि । तत्प्रसन्नताकारणमाह—यतः यस्मात् हेतोः एकः अद्वितीयः त्वं तेषां देवादीनां मुखं भवसीति शेषः । "अग्निमुखा हि देवाः" इत्यादिश्रुतेरिति भावः ॥ १७ ॥

त्वयीति ॥ होतारः यज्ञकर्त्तारः त्वयि हवींषि हुतानि जुह्वति होमं कुर्वन्ति । अतएव येन ध्वस्तं नस्तं कल्मषं पापं येषां तथोक्ताः सन्तः स्वर्गं नाकं भुञ्जन्ति प्राप्नुवन्तीत्यर्थः । हि यतः त्वं एकः केवल एव स्वर्गस्य प्राप्तौ लाभे कारणं उपायः । यागस्य स्वर्गप्राप्तिफलकतया कारणत्वेनोक्तत्वादिति भावः ॥ १८ ॥

हवींषीति ॥ हुतमश्नातीति हुताशः । तत्सम्बोधने हे हुताश अग्ने । तपोऽस्ति येषां ते तपस्विनः तपोनिरताः जनाः । कर्तारः । त्वयि । अधिकरणविवक्षया सप्तमी । मन्त्रैः स्वाहाकारप्रभृतिभिः पूतानि पवित्रीकृतानि हवींषि हव्यानि जुह्वतः प्रक्षिपन्तः सन्तः तपःसिद्धिं तपस्यासाफल्यं यान्ति लभन्ते । येन त्वं तपसां प्रभुः अधिपतिः । वह्नौ होममकुर्वत स्तपःसिद्धिर्न स्यादिति भावः ॥ १९ ॥

(८) भुञ्जते ।

(१) तपसः ।

(२)निधत्से हुतमर्काय स पर्जन्योऽभिवर्षति।
ततोऽन्नानि (३)प्रजास्तेभ्यस्तेनासि जगतः पिता॥२०
(४)अन्तश्चरोऽसि भूतानां तानि (५)त्वत्तो भवन्ति च
(६)ततो जीवितभूतस्त्वं जगतः प्राणदोऽसि च॥२१
जगतः सकलस्यास्य त्वमेकोऽस्युपकारकृत्।
कार्योपपादने तत्र त्वत्तोऽन्यः कः प्रगल्भते॥२२॥

निधत्से इति॥ हे वत्से। त्वं अर्काय देवान्तर्गताय सूर्याय सूर्यमुद्दिश्येति भावः। हुतं हविः निधत्से ददासि। अनेन सोऽर्कः पर्जन्यः मेघः भूत्वेति शेषः। अभिवर्षति वृष्टिरूपेण भूतले पततीत्यर्थः। ततः तस्मात् वृष्टेः अन्नानि शस्यानि जायन्ते। तेभ्यः अन्नेभ्यः प्रजाः जनाः उत्पद्यन्ते अन्नभक्षणेनेति भावः। तेन कारणेन। हेतौ तृतीया। त्वं जगतः जगत्स्थ-लोकानामित्यर्थः। पिता रक्षकः असि। अत्र रक्षकत्वेनास्य पितृत्वं न तु जनकत्वेनेति भावः। उक्तञ्च—"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इति॥ २०॥

अन्तरिति॥ त्वं भूतानां जनानां अन्तश्चरतीति अन्तः-करणगामी असि भवसि। तानि भूतानि त्वत्तः भवन्ति जायन्ते च। ततः कारणद्वयात् हेतोः त्वं जगतः जगत्स्थ-जनानामित्यर्थः। जीवितभूतः प्राणभूतः प्राणदः जीवनदाता च भवसीति शेषः। प्राणिनामन्तःस्थितत्वादग्नेर्जीवितभूतत्वं जगदुत्पादकतया भूतानां प्राणदत्वञ्च सिद्धमिति भावः॥२१॥

जगत इति॥ हे वत्से। त्वं एकः मुख्यः अद्वितीय इत्यर्थः। "एके मुख्यान्यकेवलाः" इत्यमरः। अस्य सकलस्य समस्तस्य

---

(२) नयसि। (३) प्रजायन्ते। (४) अन्तश्चरसि।
(५) त्वद्भवन्ति। (६) त्वत्तो जीवितभूयः।

अमीषां (८)सुरसंघानां त्वमेकोऽर्थसमर्थने ।
(९)विपत्तिरपि संश्लाघ्योपकारव्रतिनोऽनल ॥२३॥

देवी भागीरथी पूर्वं भक्त्यास्माभिः प्रतोषिता ।
निमज्जतस्त्वदोदीर्णं तापं निर्वापयिष्यति ॥२४॥

जगतः जगत्स्थितभूतानामित्यर्थः । उपकारं हितं करोतीति उपकारकृत् । उपकारोपपदात् कृधातोः क्विप्प्रत्ययः । असि भवसि । अग्निसाहाय्येन लोकानां विविधोपकाराः सम्भवन्तीति भावः । अतएव तव जगति त्वत्तः अन्यः । अन्यशब्दयोगात् त्वत्त इत्यत्र पञ्चमी । भिन्नः को जनः कार्याणां उपपादने सम्पादने प्रगल्भते समर्थो भवति । त्वया विना जगति न कोऽपि कार्यसाधकोऽस्तीति भावः ॥ २२ ॥

अमीषामिति ॥ हे अनल वह्ने । अमीषां सुराणां देवानां सङ्घाः समूहाः तेषां अस्मदादीनामित्यर्थः । अर्थानां कार्याणां समर्थने सम्पादने विषये त्वं एकः नत्वन्य इति भावः । समर्थोऽसीति शेषः । तथापि विपद्ग्रस्तोऽहं किं करोमीत्यत आह—विपत्तिरिति ॥ उपकाराः परहितान्येव व्रतानि नियमाः सन्त्यस्य उपकारव्रतिनः जनस्य विपत्तिः विपदपि संश्लाघ्या सम्यक् प्रशंसनीया भवतीति शेषः । परोपकारनिरतस्य विपदपि शुभकरीति भावः ॥ २३ ॥

सम्प्रति भाविकार्यं निर्दिशति ।

देवीति ॥ पूर्वम् अस्माभिः । कर्तृभिः । भक्त्या भक्तिपूर्वकं प्रतोषिता सन्तोषिता भगीरथेन आनीता भागीरथी देवी गङ्गा । कर्त्री । निमज्जतः स्नानं कुर्वतः तव सम्बन्धिनम् उदीर्णम् अत्युल्बणम् अत्युत्कटमिति यावत् तापं सन्तापं

---

(८) सुरसैन्यानाम् । (९) विपदोऽपि पदं श्लाघ्योऽपकार-
यति नो हि सः, विपदोऽपि पदं श्लाघ्योपकारव्रतिनो हि सा

गङ्गां तद्गच्छ मा कार्षीः(२)विलम्बं हव्यवाहन ॥
(३)कार्येष्ववश्यकार्येषु सिद्धये चिप्रकारिता ॥२५॥
शम्भोरम्भोमयी मूर्तिः सैव देवी सुरापगा ।
त्वत्तः स्मरद्विषो वीजं दुर्धरं धारयिष्यति ॥२६॥
इत्युदीर्य सुनासीरो विरराम स चानलः ।

निर्वापयिष्यति अपनेष्यति प्रशमयिष्यतीत्यर्थः । गङ्गास्नानेन तव तापो यास्यतीति भावः ॥ २४ ॥

गङ्गामिति ॥ हे हव्यवाहन वह्ने । तत् तस्मात् कारणात् हेतोः गङ्गां भागीरथीं देवीं गच्छ याहि । विलम्बं कालातिपातं मा कार्षीः न कुरु । माङ्योगेनामागमप्रतिषेधः । शुभकार्यसाधने विलम्बेनालमिति भावः । हीतिपदमूह्यम् । तथाहि । अवश्यकार्येषु अवश्यकरणीयेषु कार्येषु क्रियासु विषयेषु । चिप्रं शीघ्रं यथा तथा करोतीति तथोक्तस्य भावः तत्ता चिप्रकारिता शीघ्रकारित्वम् अनलसित्वमिति यावत् । सिद्धये सिद्ध्यर्थं भवतीति शेषः ॥ २५ ॥

शम्भोरिति । हे वह्ने । सा देवी सुरापगैव गङ्गैव शम्भोः हरस्य सम्बन्धिनी अम्भोमयी जलमयी मूर्तिः । अतएव स्मरं कामं द्वेष्टीति स्मरद्विट् । स्मरोपपदाद् द्विषधातोः क्विप् । तथोक्तस्य कामारेः दुर्धरं दुर्वहं वीजं शुक्रं कामभूतम् । "शुक्रं तेजोरेतसी च वीजवीर्येन्द्रियाणि च" इत्यमरः । त्वत्तः आदायेति शेषः । धारयिष्यति ॥ २६ ॥

इतीति ॥ सुनासीरः देवेन्द्रः । कर्ता । "वृद्धश्रवाः सुनासीरः" इत्यमरः । इति पूर्वोक्तं वचः वाक्यम् उदीर्य उक्त्वा विरराम

---

(२) विषादम् । (३) कार्येष्ववश्यकार्येषु सिद्धये चिप्रकारिता,
तद्ध गत्वा च तद्वीजममोघं मुञ्च सुस्थिरम् ।

तद्विसृष्टस्त(४)मापृच्छ्य प्रतस्थे स्वधुनीमभि ॥२७॥

हिरण्यरेतसा तेन देवी स्वर्गतरङ्गिणी।
तीर्थाध्वना प्रपेदे सा निःशेष(५)क्लेशनाशिनी २८

स्वर्गारोहणनिःश्रेणि(६)र्मोक्षमार्गाधिदेवता।
उदारदुरितोद्गारहारिणी दुर्गतारणी ॥ २९ ॥

विरतो बभूवेत्यर्थः। विररामेति विपूर्वत्वात् परस्मैपदम्। सः अनलः अग्निश्च तद्विसृष्टः तेन सुनासीरेण विसृष्टः विमुक्तः सन् अनुज्ञात इत्यर्थः। सन् तं सुनासीरम् आपृच्छ्य आमन्त्र्य यास्यहमिति तदाज्ञां लब्ध्वेत्यर्थः। स्वधुनीं भागीरथीम् अभि प्रतस्थे ययौ ॥ २७ ॥

हिरण्येति॥ तेन हिरण्यरेतसा अग्निना तीर्थाध्वना अवगाहितमार्गेण सता। कर्त्रा। निःशेषाणां क्लेशानां पञ्चविधानामित्यर्थः। नाशिनी निःशेषक्लेशनाशिनी मुक्तिदायिनीत्यर्थः। सा प्रसिद्धा स्वर्गतरङ्गिणी स्वर्णदी देवी प्रपेदे प्राप्ता। कर्मणि लिट् ॥ २८ ॥

त्रिभिर्गङ्गां वर्णयति—

स्वर्गेति॥ स्वर्गस्य यत् आरोहणं गमनं तस्य निश्रेणिः सोपानपरम्परा। गङ्गास्नायिनां स्वर्गलाभो भवतीति भावः। पुनश्च मोक्षस्य मुक्तेः मार्गः पन्था तस्य अधिदेवता अधिष्ठात्री देवी। गङ्गास्नायिनां मोक्षलाभो भवतीति भावः। पुनः किंभूता। उदाराणि उच्चैस्तराणि यानि दुरितानि पापानि तेषाम् उद्गारस्य समूहस्य हारिणी नाशिनी। गङ्गास्नायिनो ध्वस्तकल्मषा भवन्तीति भावः। पुनः किंभूता। दुर्गस्य संसाररूपस्य तारिणी। गङ्गास्नायिनां संसारनिवृत्तिरिति भावः ॥२९

(४) आमन्त्र्य। (५) अघविनाशिनी। (६) स्वर्गं।

महेश्वरजटाजूटवासिनी पापनाशिनी।
(७)सरागान्वयनिर्वाणकारिणी धर्मधारिणी ॥३०
विष्णुपादोदकोद्भूता ब्रह्मलोकादुपागता।
त्रिभिः स्रोतोभिरश्रान्तं(८)पुनाना भुवनत्रयम् ३१
जातवेदसमायान्तमूर्मिहस्तैः (९)समुत्थितैः।
(१)आजुहावार्थसिद्ध्यै तं सुप्रसादधरेव सा ॥३२॥

महेश्वरेति॥ पुनश्च महेश्वरस्य हरस्य जटाजूटे कपर्दे वासिनी वासकारिणी पुनश्च पापनाशिनी पापक्षयकारिणी। पुनश्च रागेण सह वर्तमानस्य सरागस्य विषयासक्तस्य अन्वयस्य वंशस्यापि निर्वाणकारिणी मोक्षविधायिनी। मुक्तानां किमु वक्तव्यमिति भावः। पुनश्च धर्मं धारयतीति धर्मधारिणी। इयं स्वधर्मेण गङ्गास्नायिनो धार्मिकान् करोतीति भावः॥३०॥

विष्णुति॥ पुनश्च विष्णोर्नारायणस्य पादोदकात् चरणसलिलात् उद्भूता जाता। विष्णुपादोद्भवा गङ्गेति भावः। पुनश्च ब्रह्मलोकात् उपागता इह पतिता। पुनश्च त्रिभिः स्रोतोभिः स्वर्गमर्त्यपातालगामिभिरित्यर्थः। प्रवाहैः भुवनत्रयं त्रिभुवनम् अश्रान्तं निरन्तरं यथा तथा पुनाना पवित्रीकुर्वाणेत्यर्थः॥३१

जातेति॥ सा गङ्गा। कर्त्री। सुप्रसादस्य सुप्रसन्नतायाः धरा धारिणीव सा गङ्गा। कर्त्री। समुत्थितैः उच्चलितैः ऊर्मय एव हस्ताः ऊर्मयो हस्ता इव वा तैः ऊर्मिहस्तैः करणैः आयान्तम् आगच्छन्तं तं जातवेदसं वह्निम् अर्थसिद्ध्यै कार्यसम्पादनाय आजुहाव आहूतवती। हस्तसङ्केतेनाह्वानं लोके प्रसिद्धमिति भावः॥३२॥

---

(७) सागरान्वय। (८) पुनाति। (९) समुच्छ्रितैः।
(१) आजुहावास्य संसिद्ध्यै सुप्रसादादिव सा।

संमिलद्भिर्मरालैः सा कलं कूजद्भिरुन्मदैः ।
ददे श्रेयांसि दुःखानि निहन्मीति तमभ्यधात् ३३

कल्लोलैरुद्गतैरर्वाचीनं तट(२)मभिद्रुतैः ।
(३)प्रीतेव तमभीयाय स्वर्धुनी जातवेदसम् ॥३४॥

(४)अथाभ्युपेतस्तापार्तो निममज्जानलः किल ।
विपदा(५)परिभूताः किं व्यवस्यन्ति विलम्बितुं ३५

संमिलद्भिरिति ॥ संमिलद्भिः सङ्गच्छद्भिः तथा उन्मदैः उन्मत्तैः जातोन्मादैरिति यावत् । अतएव कलं मधुरं यथा तथा कूजद्भिः निनदद्भिः शब्दायमानैरिति यावत् । मरालैः हंसैः उपलक्षिता । उपलक्षणे तृतीया । सा देवी गङ्गा तम् अग्निम् इति अभ्यधात् उक्तवती । हंसरुतव्याजेनेति भावः । किमिति तत् । हे अग्ने । श्रेयांसि मङ्गलानि ददे तुभ्यमिति शेषः । दुःखानि तवेति शेषः । निहन्मि नाशयामि ॥ ३३ ॥

कल्लोलैरिति ॥ स्वर्धुनी गङ्गा प्रीता प्रसन्ना सती । उद्गतैः उत्थितैः आनन्दादुद्वेलैरिति यावत् । तटं तीरं अभिद्रुतैः गतैः कल्लोलैः तरङ्गैः तम् अर्वाचीनं जडं रौद्रतेजसा विमूढमित्यर्थः जातवेदसम् अभीयायेव उपाजगामेव ॥ ३४ ॥

अथेति ॥ अथ अनन्तरं तापेन रुद्रतेजोभवेन आर्तः अतएव अभ्युपेतः संमुखमागतः अनलः वह्निः । कर्ता । निममज्ज निमग्नो बभूव । किलेति प्रसिद्धौ । तथाहि । विपदा आपदा परिभूताः जिताः पुरुषाः विलम्बितुम् अपेक्षां कर्तुं किं व्यवस्यन्ति पारयन्ति समर्था भवन्तीत्यर्थः । अपितु नेत्यर्थः विपदापन्नानां विपदुद्धारे कालप्रतीक्षा नास्तीति भावः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ ३५ ॥

---

(२) उपागतैः । (३) प्रीत्येव ।
(४) अथाभ्युपेत्य । (५) परिभूतः किं व्यवस्यति ।

गङ्गावारिणि कल्याणकारिणि श्रमहारिणि।
स मग्नो निर्वृतिं प्राप (७)पुण्यभारिणि तारिणि ३६
तत्र माहेश्वरं धाम सञ्चक्राम हविर्भुजः।
गङ्गाया(८)मुत्तरङ्गाया(९)मन्तस्तापविपद्धृति ३७॥
कृशानुरेतसो रेत(१)श्चाहृते सरिता तया।
निश्चक्राम ततः सौख्यं हव्यवाहो वहन् बहु ॥३८॥

गङ्गेति॥ सोऽनलः। कर्त्ता। कल्याणानि अनेकमङ्गलानि करोति विदधातीति। तथोक्ते, श्रमं परिश्रमं हरति नाशयतीति तथोक्ते, पुण्यं भारयति लोकैः संग्राहयतीति तथाभूते। येन लोकाः पुण्यभारवन्तो भवन्तीति भावः। तारिणि संसारार्णवतारके, गङ्गायाः वारिणि जले मग्नः अवगाढः सन् निर्वृतिं सुखं क्लेशाभावमित्यर्थः प्राप प्राप्तवान्। सन्तप्तानां जलमज्जनमेव सुखकारणमिति भावः॥ ३६॥

तत्रेति॥ हविर्भुजः अनलः तत्र उत्तरङ्गायां कल्लोलवत्यां अन्तस्तापः मनःपीड़ा एव विपत् तां हरति विनाशयतीति अन्तस्तापविपद्धृत् तथोक्तायाम्। अन्तस्तापविपदुपपदात् [illegible]रतेः क्विप्। गङ्गायां माहेश्वरं शैवं धाम तेजः सञ्चक्राम [illegible]निदधे॥ ३७॥

कृशान्विति॥ तया उक्तया सरिता भागीरथ्या। कर्त्र्या। [illegible]शानुरेतसः शिवस्य रेतसि तेजसि आहृते आदरपूर्वकं [illegible]गृहीते सतीत्यर्थः। हव्यवाहः अनलः बहु सौख्यं हर्षं वहन् [illegible]रयन् सन् ततः तस्याः गङ्गायाः निश्चक्राम निर्जगाम [illegible]३८॥

---

(७) पुण्यकारिणि। (८) दृढभङ्गायाम्।
(९) अन्तस्तापविपद्धृतः, अन्तस्तापभिदाश्रुति। (१) आहूते।

सुधा(२)सारैरिवाम्भोभि(३)रभिषिक्तो हुताशनः।
यथागतं जगामाथ परां निर्वृतिमादधत् ॥३९॥
सा सुदुर्विषहं(४)गङ्गा धाम कामजितो महत्।
आदधाना परीतापमवाप व्योमवाहिनी ॥४०॥
बहिरार्ता युगान्ताग्नेस्तप्तानीव शिखाशतैः।
हित्वोष्णानि(५)जलान्यस्या निर्जग्मुर्जलजन्तवः॥
तेजसा तेन रौद्रेण तप्तानि सलिलान्यपि।

सुधेति ॥ अथ अनन्तरं हुताशनः अग्निः सुधासारैः अमृतधाराभिरिव अम्भोभिः वारिभिः अभिषिक्तः कृतावगाहन अतएव पराम् उत्कृष्टां निर्वृतिं सुखम् आदधत् वहन् सन् यथागतं प्रदेशं जगाम गतः ॥ ३९ ॥

सेति ॥ व्योमवाहः आकाशप्रवाहोऽस्त्यस्याः व्योमवाहिनी आकाशसञ्चारिणी सा गङ्गा मन्दाकिनीत्यर्थः। कर्त्री। कामं जयतीति कामजित्। कामोपपदात् जयतेः क्विप्। कामारेः हरस्य सम्बन्धि महत् प्रबलम् अतएव सुदुर्विषहम् अत्यन्तदुःखेनापि सोढुमशक्यम्। सुदुर्विपूर्वसहधातोः कृच्छ्रार्थे खल्प्रत्ययः। धाम तेजः आदधाना वहन्ती सती परीतापं दुःखम् अवाप प्राप ॥ ४० ॥

बहिरिति ॥ जलानां जन्तवः जीवाः आर्ताः पीड़िताः सन्तः गङ्गानिहितरौद्रतेजसेति भावः। युगान्तस्य कल्पान्तस्य अग्नेः वह्नेः शिखाशतैः शतसंख्यकशिखाभिः तप्तानीव इत्युत्प्रेक्षा। उष्णानि अस्याः भागीरथ्याः जलानि सलिलानि हित्वा त्यक्त्वा बहिः स्थानान्तरमित्यर्थः निर्जग्मुः गतवन्तः ॥४१॥

तेजसेति ॥ सा भागीरथी रौद्रेण शैवेन तेजसा वीर्येण

(२) उदारैः। (३) परिषिक्तः। (४) कामम्। (५) पयांसि

समुदञ्चन्ति चण्डानि (६)दुर्धराणि बभार सा ४२

जगच्चक्षुषि चण्डांशौ किञ्चिदभ्युदयोन्मुखे।
जग्मुः षट्कृत्तिका माघे मासि स्नातुं सुरापगां ४३

शुभ्रैरभ्रंकषैरूर्मिशतैः (७)स्वर्गनिवासिनाम्।
कथयन्तीमिवालोकावगाहा(८)चमनादिकम् ॥४४

तप्तानि उष्णानि अतएव समुदञ्चन्ति समुच्छलन्ति चण्डानि उग्राणि अतएव दुर्धराणि धारणासमर्थान्यपि सलिलानि वारीणि बभार दधार। रुद्रतेजसो दुर्वहत्वादिति भावः ॥४२॥

जगदिति॥ माघे माघाभिधेये मासि समये। कालाधिकरणमत्र। जगच्चक्षुषि जगन्नयनभूते। सूर्यस्य जगत्स्थवस्तुप्रदर्शकत्वादिति भावः। चण्डाः तिग्माः अंशवः किरणानि यस्य तथोक्ते अर्के किञ्चित् ईषत् अभ्युदये उदये यः उन्मुखः उद्यतः तथाभूते सति। प्रातःकाले इति भावः। भावाधिकरणमत्र। यदुक्तम्—"यस्य क्रिया क्रियान्तरं लक्ष्यते स भावः" इति। षट् कृत्तिकाः कृत्तिकाभिधेयनक्षत्राधिष्ठात्रीदेव्यः। कर्त्र्यः। स्नातुम् अवगाहनार्थं सुरापगां देवनदीं मन्दाकिनीं जग्मुः प्राप्तवत्यः॥ ४३॥

अथ शुभ्रैरित्यादिभिश्चतुर्भिः श्लोकैः सुरापगां विशिनष्टि—

शुभ्रैरिति॥ शुभ्रैः शुक्लवर्णैः। अभ्रम् आकाशं कषन्ति स्पृशन्ति ये तथोक्तैः। अभ्रोपपदात् कषधातोः खश्प्रत्ययः। ऊर्मीणां शतैः शतसंख्यकतरङ्गैरित्यर्थः। करणैः। स्वर्गे निवसन्ति ये तथोक्तानां देवानामित्यर्थः। आलोकः अवलोकनम् अवगाहः निमज्जनम् आचमनं पानञ्च एतानि आदीनि यस्य तथोक्तं सर्वं कर्मेत्यर्थः कथयन्तीमिव। हे मदालोकनादि सर्वं कर्म कुरुतेति तरङ्गहस्तसङ्केतेन वदन्तीमिवेत्यर्थः। उत्प्रेक्षालङ्कारः॥ ४४॥

---

(६) दुर्भराणि। (७) स्वर्गमनं सताम्। (८) आचममर्दना।

सुस्नातानां मुनीन्द्राणां बलिकर्मोचितैरलम् ।
बहिः पुष्पोत्करैः कीर्णतीरां दूर्वाक्षतान्वितैः ॥४५॥
(६)ब्रह्मध्यानपरै(१)र्योगपरैर्ब्रह्मा(२)सनस्थितैः ।
योगनिद्रागतै(३)र्योगपट्टबन्धैरुपाश्रिताम् ॥४६॥
पादाङ्गुष्ठाग्र(४)भूमिस्थैः सूर्य(५)सम्बद्धदृष्टिभिः ।
ब्रह्मर्षिभिः परं ब्रह्म गृणाद्भिरुपसेविताम् ॥४७॥

सुस्नातानामिति ॥ सुस्नातानां सुखेन स्नानं कृतवतामित्यर्थः । मुनीन्द्राणां सप्तर्षीणां बलिरेव कर्म तस्मिन् पूजाव्यापारे उचितानि उपयुक्तानि तथोक्तैः । दूर्वाः अक्षतानि आतपतण्डुलानि च तैः अन्वितैः सहितैः पुष्पाणां कुसुमानाम् उत्कराः समूहाः तथाभूतैः बहिः अलम् अत्यर्थं कीर्णं व्याप्तं तीरं सैकतं यस्याः तथोक्ताम् ॥ ४५ ॥

ब्रह्मेति ॥ ब्रह्मणः परमात्मनः सम्बन्धि यत् ध्यानं चिन्तनं तत् परं मुख्यं येषां तथोक्तैः परमात्मध्यानतत्परैरित्यर्थः । योगपरैः योगनिरतैः । ब्रह्मासने आसनभेदे स्थिताः उपविष्टाः तैः । योगः जीवब्रह्मैक्यचिन्तनमेव निद्रा अभिनिवेशभेदः तां गतैः प्राप्तैः । तथा योगपट्टस्य बन्धो बन्धनं येषां तथोक्तैः । पुरुषैरित्यध्याहार्यम् । कर्तृभिः । उपाश्रिताम् उपसेविताम् ॥४६॥

पादेति ॥ पादाङ्गुष्ठस्य अग्रेण अग्रभागेन । समस्तचरणेनेत्यर्थः । भूमिस्थैः पृथिवीस्थितैरित्यर्थः । सूर्ये अर्के निबद्धाः अर्पिताः दृष्टयः विलोचनानि यैः तथोक्तैः । परं ब्रह्म परमात्मानं कर्मभूतं गृणद्भिः चिन्तयद्भिः जपद्भिरित्यर्थः । ब्रह्मर्षिभिः सप्तर्षिभिः । कर्तृभिः । उपसेविताम् उपाश्रिताम् ॥ ४७ ॥

---

(६) ब्रह्मा । (१) योगिवरैः । (२) पद्मासन ।
(३) भोगिभोगवद्भिः, भोगिभोगयुक्तैः ।
(४) भूमिष्ठैः, भूयिष्ठैः । (५) संविष्ट ।

अथ (६)दिव्यां नदीं देवीमभ्यनन्दन्विलोक्य ताः।
कं नाभिनन्दयत्येषा (७)दृष्टा पीयूषवाहिनी॥४८
चन्द्रचूड़ामणिर्देवो यामुद्वहति मूर्धनि।
(८)यस्या विलोकनं पुण्यं श्रद्दधुस्ता मुदा हृदि॥४९
(९)दिव्यां विष्णुपदीं देवीं निर्वाणपद(१)देशिनीम्।
(२)निर्धूतकल्मषां मूर्ध्ना सुप्रह्वास्ता ववन्दिरे॥५०॥

अथेति॥ अथ अनन्तरं ताः पूर्वोक्ताः कृत्तिकाः। कर्त्र्यः। दिव्यां स्वर्गीयां नदीं देवीं मन्दाकिनीं विलोक्य निरीक्ष्य अभ्यनन्दन् सन्तुष्टा अभूवन्नित्यर्थः। इतीति अध्याहार्यम्। तथाहि। एषा पीयूषं वहतीति पीयूषवाहिनी अमृतनिष्यन्दिनी मन्दाकिनी दृष्टा अवलोकिता सती कं नरं न अभिनन्दति। सर्वमेवेत्यर्थः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः॥ ४८॥

चन्द्रेति॥ चन्द्रः इन्दुः चूड़ामणिस्वरूपो यस्य तथोक्तः देवः शिवः मूर्धनि मस्तके याम् उद्वहति धत्ते। यस्याः सम्बन्धि विलोकनं दर्शनं पुण्यं पवित्रं पुण्यजनकमित्यर्थः। तां मन्दाकिनीम्। कर्मभूताम्। ताः कृत्तिकाः। कर्त्र्यः। हृदि चित्ते मुदा हर्षेण श्रद्दधुः श्रद्धावत्यो बभूवुः। सिषेविषामिति विश्वासं चक्रुरित्यर्थः॥ ४९॥

दिव्यामिति॥ ताः कृत्तिकाः सुप्रह्वाः विनताः सत्यः। मूर्ध्ना मस्तकेन। करणेन। दिव्यां दिवि स्वर्गे भवां निर्धूतं दूरीकृतं कल्मषं पापं पापिनामिति भावः। यया तथाभूताम्

---

(६) देवीं धुनीम्, दिव्यनदीम्। (७) देवी।
(८) तस्या विलोकनम्, तस्यावलोकनम। (९) दिव्या।
(१) दर्शिनीम्। (२) निर्धूतकल्मषाः।

सौभाग्यैः खलु सुप्रापां मोक्षप्रतिभुवं (३)सतीम् ।
भक्त्याव तुष्टुवुस्तां ताः श्रद्दधाना दिवो धुनीम् ५१

मुक्तिस्त्रीसङ्ग(४)दूत्यङ्गैस्तत्र (५)ता विमलैर्जलैः ।
प्रक्षालितमलाः सस्नुः सुस्नातास्तपसान्विताः ।५२

स्नात्वा तत्र (६)सुलभ्यायां भाग्यैः परिपचेलिमैः ।

अतएव निर्वाणपदस्य मोक्षस्य देशिनीं दायिनीं देवीं विष्णुपदीं विष्णुपादसमुद्भूतां गङ्गाम् । कर्मभूताम् । वर्वान्दरं वन्दितवत्यः प्रणेमुरिति यावत् ॥ ५० ॥

सौभाग्यैरिति ॥ अत्र गङ्गातीरे स्थिता इति शेषः । ताः कृत्तिकाः । कर्त्र्यः । सौभाग्यैः खलु शोभनभाग्यैरेव सुप्रापां सुखेन प्राप्तुं शक्यां मोक्षप्रतिभुवं लग्नकां सतीं पतिव्रतां तां दिवो स्वर्गस्य धुनीं मन्दाकिनीं श्रद्दधानाः श्रद्धावत्यः सत्यः भक्त्या भक्तिपूर्वकं तुष्टुवुः स्तुतवत्यः ॥ ५१ ॥

मुक्तीति ॥ शोभनं विध्युक्तप्रकारं स्नातं स्नानं यासां तथोक्ताः । भावे क्तप्रत्ययः । विधिपूर्वकस्नानं कृतवत्य इत्यर्थः । तपसान्विताः तपोयुक्ताः ताः कृत्तिकाः तत्र गङ्गायाम् । मुक्तिः मोक्षः सैव स्त्री तस्याः सङ्गः सम्बन्धः समागम इति यावत् । तत्र यत् दूत्यं दूतीभावः तस्य अङ्गैः उपायभूतैः । मोक्षप्रदैरिति भावः । विगतं मलं येभ्यः तथोक्तैः जलैः वारिभिः प्रक्षालितं निवर्त्तितं कल्मषं पापं यासां तथोक्ताः सत्यः सस्नुः स्नानं कृतवत्य इत्यर्थः ॥ ५२ ॥

स्नात्वेति ॥ ताः उर्वोक्ताः कृत्तिकाः । कर्त्र्यः । परिपचेलिमैः परिपक्वैः भाग्यैः दिष्टैः । हेतौ तृतीया । सुखेन लभ्यायां

(३) सताम् । (४) दौत्यङ्गैः ।
(५) भाविमलैः । (६) सुरम्यायाम् ।

चरितार्थं स्वमात्मानं बहु ता मेनिरे मुदा ॥ ५३ ॥
कृशानुरेतसो रेतस्तासामभिकलेवरम्।
अमोघं सञ्चचाराथ सद्यो गङ्गावगाहनात् ॥५४॥
रौद्रं सुदुर्धरं धाम दधाना दहनात्मकम्।
परितापमवापुस्ता मग्ना इव विषाम्बुधौ ॥५५॥
अक्षमा (७)दुर्वहं वोढुमम्बुनो बहिरातुराः।
(८)अग्निं ज्वलन्तमन्तस्ता दधाना इव निर्ययुः ५६

गम्यायां सुखेन लब्धुं शक्यायां तत्र गङ्गायां मन्दाकिन्यां
स्नात्वा अवगाह्य स्वं निजम् आत्मानं मुदा हर्षेण बहु यथा
तथा चरितार्थं कृतकृत्यं मेनिरे ज्ञातवत्य इत्यर्थः ॥ ५३ ॥

कृशानुरेतस इति ॥ अथ अनन्तरं गङ्गायाः अवगाहनात्
स्नानात् इतः अमोघं सफलं कृशानुरेतसः हरस्य रेतः वीर्यम्।
कर्तृ। तासाम् उक्तानां षसां कृत्तिकानाम् अभिकलेवरं कले-
वरेषु देहेषु। विभक्त्यर्थेऽव्ययीभावः। सद्यः तत्क्षणमेव
सञ्चचार संलग्नम्। प्रविवेशेत्यर्थः ॥ ५४ ॥

रौद्रमिति ॥ दहनात्मकम् अग्निमयम् अतएव सुदुर्धरं
दुर्वहं रौद्रं रुद्रसम्बन्धि धाम तेजः दधानाः वहन्त्य. ताः
कृत्तिकाः विषस्य हलाहलस्य अम्बुधौ सागरे मग्नाः पतिता
इव। इत्युत्प्रेक्षा। परितापं सन्तापम् अवापुः प्राप्तवत्यः।
शरीरान्तर्गतरौद्रतेजसो प्रबलक्लेशजनकत्वादिति भावः ॥ ५५ ॥

अक्षमा इति ॥ दुर्वहं वोढुमशक्यं तत् पूर्वोक्तं धाम तेजः
वोढुं धर्तुम् अक्षमाः असमर्थाः अतएव आतुराः पीड़िताः।

(७) दुर्धरम्।

(८) अग्निं ज्वलन्तमन्तःस्थं दधाना इव निर्ययुः, निर्ययुः
बहिताः शीघ्रं कृत्तिका विस्मयान्विताः।

अमोघं शाम्भवं बीजं सद्यो (६)नद्योज्झितं महत्।
तासामभ्युदरं दीप्तं स्थितं गर्भत्वमागमत् ॥५७॥
सुज्ञा विज्ञाय ता (१)गर्भभूतं तद्वोढुमक्षमाः।
विषादमदधुः सद्यो गाढं भर्तृभिया ह्रिया ॥५८॥
ततः शरवणे (२)सार्धं भयेन व्रीडया च ताः।

ताः कृत्तिकाः अन्तः मध्ये ज्वलन्तं प्रदीप्तम अग्निम् अनलमिव दधानाः धारयन्त्य इव। अम्बुनः जलात्। गङ्गाया इति भावः। बहिः निर्ययुः निर्जग्मुः। अत्रोत्प्रेक्षालङ्कारः अन्तर्गम स्वरूपत्वेनोत्प्रेक्षणात् ॥ ५६ ॥

अमोघमिति ॥ नद्या गङ्गया। कर्त्री। सद्यः अवगाहन क्षणमेव उज्झितं परित्यक्तं अतएव तासां कृत्तिकानां अभ्युद उदरेषु। विभक्त्यर्थेऽव्ययीभावः। दीप्तं प्रज्वलितं सत् स्थि अमोघं अव्यर्थं सफलमिति यावत्। महत् बलवत् शाम्भवं शै बीजं वीर्यम्। कर्तृ। गर्भं कांचिज्जीवत्वं आगमत् प्राप्तव ॥ ५७ ॥

सुज्ञा इति॥ सुष्ठु जानन्तीति सुज्ञाः सुष्ठुज्ञानवत विचारक्षमा इति भावः। ताः कृत्तिकाः तत् शाम्भवं तेजः वी वोढुं धारयितुं अक्षमाः असमर्थाः सत्यः सद्यः तत्क्षणमेव भर्तृभिया पतिकृतभयेन, ह्रिया पतिवीर्यमपि वोढुमक्षमाणा अस्माकं लोके महानपवादो भविष्यतीति लज्जयेत्यर्थः। उभय हेतौ तृतीया। गाढं भृशं विषादं दुःखं अदधुः धृतवत्य गर्भधारणाक्षमाणां नारीणां महान् मानसः शोको भवती भावः ॥ ५८ ॥

तत इति॥ अतः अनन्तरं ताः कृत्तिकाः शरवणे तव

(६) नद्या स्थितम्। (१) गर्भीभूतम्। (२) शापभये

तद्गर्भजातमुत्सृज्य स्वान् गृहानभिनिर्ययुः ॥५८॥

ताभिस्त्यक्ताममृतकरकलाकोमलं भासमानं
तद्दिक्प्राप्तं वपुषमभिनभोगर्भमभ्युज्जिहानैः।
(३)स्वैस्तेजोभिर्दिनपतिशतस्पर्धमानैरमानैः
(४)वक्त्रैः षड्भिः स्मरहरगुरुस्पर्धयेवाजनीव ॥६०॥

शराणां तृणविशेषाणां कानने भयेन भर्तृकृतमित्येत्यर्थः। व्रीड़या च लोकापवादजनितया लज्जयेत्यर्थः। सार्धं सह। उभयत्र सार्धशब्दयोगे तृतीया। तत् उक्तं गर्भजातं कुक्षिस्थप्राणिनमित्यर्थः। उत्सृज्य परित्यज्य स्वान् स्वकीयान् गृहान् भवनानि अभिनिर्ययुः निर्जग्मुः॥ ५८॥

ताभिरिति॥ ताभिः पूर्वोक्ताभिः कृत्तिकाभिः। कर्त्रीभिः। तत्र शरवणे विशिष्टं परित्यक्तं अमृतकरः इन्दुः तस्य कलेव कोमलं मृदु यथा तथा वपुः भासमानं जलोपरिस्थितमित्यर्थः। तत् गर्भजातम्। कर्तृ। अभिनभोगर्भं आकाशाभ्यन्तरे। विभक्त्यर्थेऽव्ययीभावसमासः। अभ्युज्जिहानैः समुद्गच्छद्भिः उदयमानैः। हाधातोर्गत्यर्थे शानच्प्रत्ययः। तथा दिनपतिशतं सूर्यशतं स्पर्धन्ते तथोक्तैः सूर्यशतातिशायिभिरित्यर्थः। तथा नास्ति मानं संख्या येषां तथोक्तैः अपरिमितैरिति यावत्। स्वैः स्वकीयैः तेजोभिः धामभिः। तथा षड्भिः षट्संख्यकैः वक्त्रैः युक्तम् उपलक्षितमिति यावत्। उभयत्र उपलक्षणे तृतीया। सत् स्मरहरगुरोः ब्रह्मणः स्पर्धया ईर्ष्ययेव जिगीषयेवेत्यर्थः। ब्रह्मणश्चतुर्मुखत्वादिति भावः। अजनीव उदपद्यतेव। अत्र तेजसां षण्णां वक्त्राणाञ्च उत्पादने हेतुत्वाभावेऽपि तद्धेतुतया निर्देशाद्धेतूत्प्रेक्षालङ्कारः। मन्दाक्रान्ता-

(३) तैः। (४) वक्त्रम्।

## एकादशः सर्गः ।

(१)अभ्यर्थ्यमाना विबुधैः समग्रैः
प्रह्वैः सुरेन्द्रप्रमुखैरुपेत्य ।
तं पाययामास (२)सुधातिपूर्णं
(३)सुरापगा (४)स्वं स्तनमाशु (५)मूर्ता ॥१॥

वृत्तम्—"मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति तल्लक्षणात् ॥ ६० ॥

इति श्रीदेवमोहनकृतया मोहिनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महा-काव्ये कुमारोत्पत्तिर्नाम दशमः सर्गः।

---

अभ्यर्थ्यमानेति ॥ सुरेन्द्रप्रमुखैः इन्द्रप्रभृतिभिः समग्रैः समस्तैः विबुधैः सुरैः उपेत्य समीपमागम्य प्रह्वैः प्रणतैः सद्भिः। कर्तृभिः। अभ्यर्थ्यमाना याच्यमाना प्रार्थ्यमानेति यावत्। स्तन्यदानेन सुतमिमं रक्षेत्यनुरुध्यमानेत्यर्थः। सुरापगा देवनदी मन्दाकिनी। कर्त्री। मूर्ता विग्रहधारिणी सती आशु सत्वरम्। स्तन्यपानाभावे बालस्यानिष्टाशङ्कयेति भावः। यथा तथा तं बालं सुधया दुग्धामृतेन अतिपूर्णं परिपूर्णं स्वं निजं स्तनं पाययामास पानं कारयामास। अस्मिन् सर्गे वृत्तमुपजातिः ॥ १ ॥

---

(१) अभ्यर्थमाना। (२) सुधाभिपूर्णम्। (३) स्वर्गापगा। (४) स्वस्तनम्। (५) धात्री।

पिबन् स तस्या: स्तनयो: सुधौघं
क्षणं क्षणं साधु समेधमान: ।
प्रापाकृतिं कामपि षड्भि(६)रेत्य
निषेव्यमाण: खलु कृत्तिकाभि: ॥ २ ॥
भागीरथीपावककृत्तिकानाम्
आनन्दबाष्पाकुललोचनानाम् ।
तं नन्दनं दिव्यमुपात्तुमासीत्
परस्परं प्रौढ़तरो विवाद: ॥ ३ ॥

पिबन्निति ॥ स बाल: तस्या: सुरापगाया: सम्बन्धिनो: स्तनयो: सम्बन्धिनं सुधाया: अमृतस्य ओघं समूहं पिबन् पानं कुर्वन् सन् अतएव क्षणं क्षणं प्रतिक्षणं साधु सम्यक् यथा तथा समेधमान: सम्यक् वृद्धिं गच्छन्। तथा षड्भि: कृत्तिकाभि:। कर्त्रीभि:। एत्य आगम्य निषेव्यमाण: लाल्यमान: सन् कामपि अद्भुतां लोकोत्तरामिति यावत् आकृतिम् आकारं प्राप खलु लब्धवानेव। अत्र खलुशब्द एवार्थे मन्दाकिन्या: स्तन्यस्यानिर्वचनीयशौवर्धकत्वादिति भाव: ॥ २ ॥

भागीरथीति ॥ आनन्दबाष्पेण हर्षाश्रुणा आकुलानि व्याप्तानि लोचनानि नेत्राणि यासां तथोक्तानां भागीरथीपावककृत्तिकानां भागीरथ्या: मन्दाकिन्या: पावकस्य अग्ने: कृत्तिकानाञ्च सम्बन्धिनं दिव्यं स्वर्गीयम् अनिर्वचनीयाकृतिमिति यावत् तं नन्दनं पुत्रम् उपात्तुं लब्धुं ग्रहीतुमिति यावत्। परस्परम् अन्योन्यं प्रौढ़तर: अतिशयित: प्रबलतर इति यावत्। विवाद: मत्पुत्रोऽयमिति तर्कपूर्वक: कलह इत्यर्थ:। आसीत् बभूव ॥ ३ ॥

(६) एष:।

अत्रान्तरे पर्वतराजपुत्र्या
समं शिवः स्वैरविहारहेतोः ।
नभो विमानेन विगाहमानः
मनोतिवेगेन जगाम तत्र ॥ ४ ॥

(७)निसर्गवात्सल्यवशाद्विहृद्ध-
चेतःप्रमोदौ गलदश्रुनेत्रौ ।
अपश्यतां (८)तं गिरिजागिरीशौ
षडाननं (९)षड्दिनजातमात्रम् ॥ ५ ॥

अत्रेति ॥ अत्रान्तरे अस्मिन् अवसरे । भागीरथीप्रभृतीनां विवादसमये इत्यर्थः । शिवः कर्ता । पर्वतराजस्य हिमाद्रेः पुत्र्या कन्यया पार्वत्या समं सार्धं स्वैरविहारात् स्वेच्छापूर्वकविहारात् हेतोः कारणात् । हेत्वर्थे पञ्चमी । मनोऽतिवेगेन मनोऽतिरिक्तवेगवता द्रुतगामिनेत्यर्थः । विमानेन देवयानेन नभः अन्तरीक्षम् आकाशमिति यावत् । विगाहमानः आलोडयन् मन्दाकिनीतीरे जगाम गतवान् ॥ ४ ॥

निसर्गेति ॥ गिरिजा च गिरीशश्च तयोर्द्वन्द्वः तौ पार्वतीशिवौ । कर्तृभूतौ । निसर्गेण स्वभावतः वात्सल्यवशात् दयावत्त्ववशात् हेतोः विहृद्धः प्रवृद्धः चेतसः चित्तस्य प्रमोदः हर्षो ययोः तथोक्तौ । अतएव गलन्ति पतन्ति अश्रूणि नेत्रवारीणि येभ्यः तथोक्तानि नेत्राणि ययोः तथोक्तौ सन्तौ षड्दिनजातमात्रं षड्दिनानि जन्मदिनप्रभृतीनि दिनषट्कानि जातानि अतिक्रान्तानि यस्य स एव तं षड्दिनजातमात्रं षडाननं षण्मुखं कुमारं अपश्यतां दृष्टवन्तौ ॥ ५ ॥

---

(७) निसर्गवात्सल्यरसाद्विहृद्धचेतःप्रमोदौ, निसर्गवात्सल्यविहृद्धचेतःपृथुप्रमोदौ । (८) तौ । (९) तद्दिन ।

अथाह देवी शशिखण्डमौलिं
(१)कोऽयं शिशुर्दिव्यवपुः पुरस्तात्।
कस्याथवा धन्यतमस्य पुंसः
(२)माताऽस्य का भाग्यवतीषु धुर्या॥ ६॥

स्वर्गापगासावनलोऽयमेताः
षट् कृत्तिकाः किं कलहायमानाः।
पुत्रो ममायं न तवायमित्थं
मिथ्येतिवैलक्ष्य(३)मुदाहरन्ति॥ ७॥

अथेति॥ अथ अवलोकनानन्तरं देवी पार्वती। पुरस्तात् अग्रतः दृश्यमान इत्यर्थः। कः अयं दिव्यवपुः दिव्यदेहः शिशुः बालकः पुत्र इति यावत्। वर्त्तते इति शेषः। अथवा कस्य धन्यतमस्य अत्यन्तभाग्यवतः पुंसः पुरुषस्य अयमित्यनेनान्वयः। दृश्यते इति शेषः। अस्य शिशोर्माता जननी का या नारी। भाग्यं शुभादृष्टम् अस्ति यासां तासु भाग्यवतीषु मध्ये। निर्धारे सप्तमी। धुर्या अग्रगण्या भवतीति शेषः। एवंभूतं प्रश्नपूर्वकं वः शशिखण्डमौलिम् इन्दुशेखरं शिवम् आह उवाच। भक्तिप्रतिरूपकमव्ययमेतत्॥ ६॥

स्वर्गापगेति॥ असौ स्वर्गापगा सुरनदी। अयम् अनलः ग्निः। एताः षट् कृत्तिकाः कलहायमानाः कलहं कुर्वत्यः ः। अयं पुरोवर्त्तीति भावः। पुत्रः तनयः मम मत्सम्बन्धी। ोक्तिरेषा। अयं दृश्यमान इति भावः। न तव तत्सम्बन्धी ास्तु ममेति शेषः। अनलवाक्यमेतत्। इत्थं मिथ्या उभयो- ुयोर्मध्ये कस्यापि न किन्त्वस्माकमिति सत्यमिति भावः। त्तिकावचनमिदम्। इति परस्परं अन्योन्यं वैलक्ष्यं विलक्षणं था स्यात् तथा किं कथम् उदाहरन्ति वदन्ति॥ ७॥

---

(१) कोऽसौ। (२) माता च। (३) उदाहरन्ते।

एतेषु कस्येदमपत्यमीश-
खिलत्रिलोकीतिलकायमानम् ।
अन्यस्य कस्याप्यथ देवदैत्य-
गन्धर्वसिद्धोरगराक्षसेषु ॥ ८ ॥

श्रुत्वेति (४)वाक्यं हृदयप्रियायाः
कौतूहलिन्या विमलस्मितश्रीः ।
सान्द्रप्रमोदोदयसौख्यहेतु-
भूतं वचोऽवोचत चन्द्रचूड़ः ॥ ९ ॥

एतेष्विति॥ हे ईश हर। अखिला समस्ता या त्रिलोकी त्रिभुवनं तत्र तिलकायमानं शिरोरत्नभूतम् इदम् अपत्यं तनयः एतेषु मन्दाकिनीप्रभृतिषु मध्ये। निर्धारे सप्तमी कस्य सम्बन्धि भवतीति शेषः। अथापि अथवा देवाः सुराः दैत्याः असुराः गन्धर्वाः देवगायकाः सिद्धाः देवयोनिविशेषाः उरगाः सर्पाः राक्षसाः निशाचराः तेषु मध्ये। निर्धारे सप्तमी। अन्यस्य अन्यतमस्य कस्य जनस्य सम्बन्धि ब्रूहीत्यर्थः ॥ ८ ॥

श्रुत्वेति॥ चन्द्रचूड़ः इन्दुमौलिः शिवः। कर्त्ता। कौतूहलं श्रवणे कौतुकं विद्यते यस्याः सा कौतूहलिनी तस्याः हृदयप्रियायाः चित्तहारिण्याः गौर्याः सम्बन्धि इति उक्तं वाक्यं वचनं श्रुत्वा आकर्ण्य विमला निर्मला स्मितस्य अल्पहास्यस्य श्रीर्यस्य तथाभूतः ईषत् विहस्येत्यर्थः। सान्द्रः निविड़ः बहुरिति यावत्। यः प्रमोदस्य आनन्दस्य उदयः आविर्भावः तेन यत् सौख्यं सुखसन्तानः तस्य हेतुभूतं कारणस्वरूपं वचः वक्ष्यमाणवाक्यम् अवोचत उवाच ॥ ९ ॥

(४) वाचम्।

(५)जगत्त्रयीनन्दन एष वीरः
प्रवीर(६)मातुस्तव नन्दनो(७)ऽस्ति।
कल्याणि कल्याणकरः सुराणां
(८)त्वत्तोऽपरस्याः कथमेष सर्गः॥ १० ॥

देवि त्वमेवास्य निदान(९)मास्से
(१)सर्गे जगन्मङ्गलगानहेतोः।
सत्यं त्वमेवेति विचारयस्व
रत्नाकरे युज्यत एव रत्नम्॥ ११ ॥

जगत्त्रयीति॥ हे कल्याणि जगतां भुवनानां या त्रयी तस्याः नन्दनः आनन्दजनकः। तथा सुराणाम् इन्द्रप्रभृतीनां कल्याणं मङ्गलं करोतीति तथोक्तः एष पुरःस्थितः वीरः पराक्रमशीलः बालकः प्रवीरस्य प्रकृष्टवीरस्य मातुर्जनन्याः तव सम्बन्धी नन्दनः तनयः अस्ति भवति। तत्र किं मानमित्याशङ्क्याह— एष सर्गः पुत्ररूपा सृष्टिः। त्वत्तः अपरस्याः त्वदन्यस्याः नार्याः कथं केन प्रकारेण स्यादिति शेषः। देवकार्यसाधनसमर्थस्य लोकोत्तरशक्तिसम्पन्नस्य पुत्रस्यास्य त्वदन्यस्या उत्पत्तिसम्भावना नास्तीति भावः॥ १०॥

देवीति॥ हे देवि गौरि। जगतां मङ्गलाय यानि गानानि मङ्गलप्रबन्धरूपाणीति यावत्। तेषां हेतोः कारणस्य अस्य बालकस्य सर्गे उत्पत्तौ विषये त्वमेव। एवशब्दोऽन्यव्यवच्छेदकः। निदानम् आदिकारणम् आस्से उपविशसि। भवसीत्यर्थः। "निदानं त्वादिकारणम्" इत्यमरः। तत् कारणत्वमेव दृष्टान्तेन प्रदर्शयति—त्वमेवेति। त्वमेव। रत्नाकरे समुद्रे

---

(५) जगत्त्रयानन्दनः। (६) मातः। (७) अयम्।
(८) त्वत्तः परस्याः। (९) आर्ये, आद्ये। (१) स्वर्गे।

(२)अतः शृणुष्वावहितेन वृत्तं
वीजं यदग्नौ निहितं मया तत् ।
संक्रान्तमन्त(३)स्त्रिदशापगायां
ततो(४)ऽवगाहे सति कृत्तिकासु ॥ १२ ॥

गर्भत्वमाप्तं (५)तदमोघमेतत्
ताभिः शरस्तम्बमधि न्यधायि ।
बभूव तत्रायमभूतपूर्वो
महोत्सवोऽशेषचराचरस्य ॥ १३ ॥

एव रत्नं युज्यते सम्भवतीति सत्यं याथार्थ्यं विचारयस्व अव-धारयेत्यर्थः ॥ ११ ॥

अत इति ॥ अतः हेतोः अवहितेन अवधानेन। भावे क्तत्वाद्विशेष्यपदमेतत्। वृत्तं वृत्तान्तं विवरणमिति यावत्। शृणुष्व शृणु आकर्णयेति यावत्। मया। कर्त्रा। अग्नौ अनले यत् वीजं वीर्यं निहितम् अर्पितं तत् वीजं त्रिदशापगायां मन्दाकिन्यां अन्तः मध्ये संक्रान्तं निहितम्। अग्निनेति शेषः। अवगाहे स्नाने सति ततः गङ्गातः कृत्तिकासु संक्रान्तं लग्नम् ॥ १२ ॥

गर्भत्वमिति। तत् पूर्वोक्तम् अमोघं सफलम् अव्यर्थमिति यावत्। वीजं गर्भस्य भावः तत्त्वं गर्भत्वं कुक्षिस्थप्राणित्वम् आप्तं प्राप्तम्। ताभिः कृत्तिकाभिः अमोघं तत् एतत् वीजं शरस्तम्बमधि अधिशरस्तम्बं शरवणोपरीत्यर्थः। न्यधायि निहितं संक्रान्तमिति यावत्। तत्र शरस्तम्बे अयम् अशेष-चराचरस्य समस्तस्थावरजङ्गममयस्य जगतः अभूतपूर्वः पूर्वम् अभूतः महोत्सवः महानन्दस्वरूप इत्यर्थः। शिशुरिति शेषः। बभूव जातः ॥ १३ ॥

(२) अत्र। (३) त्रिदिवापगायाम्। (४) विगाहे। (५) यत्।

अशेषविश्वप्रियदर्शनेन
धुर्या त्वमेतेन सुपुत्रिणीनाम् ।
अलं विलम्ब्याचलराजपुत्रि
(६)स्वपुत्रमुत्सङ्ग(७)तले (८)निधेहि ॥१४॥

(९)अथेति वादिन्यमृतांशुमौलौ
शैलेन्द्रपुत्री रभसेन सद्यः ।
सान्द्रप्रमोदेन सुपीनगात्री
धात्री समस्तस्य चराचरस्य ॥ १५ ॥

अशेषेति ॥ अचलानां पर्वतानां राजा अचलराजः तस्य पुत्री कन्या । तत्सम्बोधने हे अचलराजपुत्रि । अशेषाणां सर्वेषां विश्वानां जगतां प्रियदर्शनेन सुदर्शनेन एतेन पुत्रेण त्वं सुपुत्रिणीनां प्रशस्तपुत्रशालिनीनां धुर्या अग्रगण्या भवसीति शेषः । तस्मात् अलं विलम्ब्य विलम्बेनालं विलम्बं न कुर्वित्यर्थः । स्वपुत्रम् आत्मसुतम् उत्सङ्गतले अङ्कदेशे निधेहि स्थापय गृहाणेत्यर्थः ॥ १४ ॥

अथ युग्मेन ब्रवीति—

अथेति ॥ किरीटेति च ॥ अथ अनन्तरम् अमृतांशुः शीतांशुः मौलौ मस्तके यस्य तथोक्ते शिवे इति पूर्वोक्तेन प्रकारेण वादिनि कथयति सति । समस्तस्य समग्रस्य चराचरस्य जगतः धात्री पालयित्री तथा सान्द्रप्रमोदेन घनानन्देन हेतुना सु अतिशयेन पीनं स्फीतं प्रफुल्लत्वादिति भावः । गात्रं शरीरं यस्याः तथोक्ता । शैलेन्द्रस्य पर्वतराजस्य पुत्री तनया पार्वती । नभःस्थैः आकाशगामिभिः तथा त्वरया सह वर्तमानैः त्वरा-

(६) सुपूर्णम् ।    (७) तलम् ।    (८) विधेहि ।    (९) तथा ।

किरीटबद्धाञ्जलिभिर्नभःस्थैः
नमस्कृता सत्वर(१)नाकिलोकैः ।
विमानतोऽवातरदात्मजं तं
ग्रहीतुमुत्कण्ठितमानसाभूत् ॥ १६ ॥

स्वर्गापगापावककृत्तिकादीन्
कृताञ्जलीनानमतोऽपि (२)भूयः ।
हित्वा(३)त्सुका तं सुतमाससाद
पुत्रोत्सवे माद्यति (४)का न हर्षात् ॥१७॥

युग्मैः नाकिलोकैः इन्द्रप्रभृतिभिः किरीटेषु मस्तके बद्धाः रचिताः अञ्जलयः यैः तथोक्तैः सद्भिः नमस्कृता वन्दिता सती सद्यः तत्क्षणम् अविलम्बेनेवेत्यर्थः । रभसेन वेगेन विमानतः देवयानात् अवातरत् उत्तरितवती । तं पूर्वोक्तम् आत्मजं नन्दनं ग्रहीतुं क्रोड़े कर्तुमित्यर्थः । उत्कण्ठितमानसा उत्सुकचित्त अभूत् बभूव च ॥ १५ ॥ १६ ॥

स्वर्गापगेति ॥ उत्सुका उत्कण्ठिता पुत्रप्राप्ताविति भावः सा पार्वती । स्वर्गापगा मन्दाकिनी पावकः अनलः कृत्तिकाः आदयः येषां तान् इन्द्रादीन् देवानित्यर्थः कृताञ्जलीन् अतएव भूयः भृशम् आनमतः नमस्कुर्वतोऽपि हित्वा त्यक्त्वा अनभिनन्द्येत्यर्थः । तं सुतं पुत्रं आससाद प्राप्तवती । तथाहि । का नारी पुत्रस्य उत्सवे विषये हर्षात् सन्तोषवशात् हेतोः न माद्यति मत्ता भवति । पुत्रोत्सवजनितानन्देन नार्यं उन्मत्ता भवन्तीति भावः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ १७ ॥

(१) नाक । (२) भूत्वा, मूर्ध्ना । (३) सुकान्तम् । (४) कः

प्रमोदबाष्पाकुललोचना सा
न तं ददर्श क्षणमग्रतोऽपि।
परिस्पृशन्ती करकुड्मलेन
सुखान्तरं प्राप किमप्यपूर्वम्॥ १८॥
(५)सुविस्मयानन्दविकस्वरायाः
शिशुर्गलद्बाष्पतरङ्गितायाः।
विरूढवात्सल्यरसोत्तरायाः
देव्या (६)दृशोर्गोचरतां जगाम॥ १९॥

प्रमोदेति॥ सा पार्वती। प्रमोदस्य आनन्दस्य सम्बन्धिभिः बाष्पैः अश्रुभिः आकुले पूर्णत्वात् दर्शनासमर्थे लोचने नयने यस्याः तथोक्ता सती अतएव अग्रतः पुरतः तिष्ठन्तमपीति शेषः। तं सुतं क्षणं क्षणकालं न तु चिरमिति भावः। ददर्श। अथच कर एव कुड्मलं कलिका तेन करणेन परिस्पृशन्ती स्पर्शं कुर्वती सती किमपि असामान्यम् अपूर्वम् अद्भुतं सुखान्तरं सुखविशेषम् अन्यत् सुखमित्यर्थः। प्राप अनुभूतवती। सुतस्पर्शजनितसुखं लोकोत्तरमिति भावः॥ १८॥

सुविस्मयेति। शिशुः बालकः। कर्ता। सु अत्यन्तं यो विस्मयः साश्चर्यभावः आनन्दः हर्षश्च ताभ्यां हेतुभूताभ्यां विकस्वरा विकसिता प्रफुल्लितेति यावत् तस्याः। तथा गलतां स्खलतां यो बाष्पाणां नेत्रसलिलानां तरङ्गः प्रवाहः स जातोऽस्याः तथोक्तायाः। तरङ्गशब्दादितच्प्रत्ययः। तथा विरूढं प्ररूढं यत् वात्सल्यं दयावत्त्वं तस्य यो रसः स्वादः स उत्तरः मुख्यः यस्याः तथोक्तायाः देव्याः पार्वत्याः दृशोः नयनयोः सम्बन्धिनो गोच-

---

(५) सविस्मय।　　(६) दृशः।

तमीक्षमाणा क्षणमीक्षणानां
सहस्रमाप्तुं विनिमेषमैच्छत् ।
(७)सा नन्दनालोकनमङ्गलेषु
क्षणंक्षणं (८)तृप्यति कस्य चेतः ॥ २० ॥

विनम्रदेवासुरपृष्ठगाभ्या-
मादाय तं पाणिसरोरुहाभ्याम् ।
(९)नवोदयं पार्वणचन्द्रचारुं
गौरी (१)स्वमुत्सङ्गतलं निनाय ॥ २१ ॥

रतां विषयतां जगाम प्राप्तवान् । पार्वती बाष्पाकुलनेत्राभ पुत्रं ददर्शेति भावः ॥ १९ ॥

तामिति ॥ तं पुत्रं क्षणं नतु चिरमिति भावः । ईक्षमाण पश्यन्ती सा पार्वती । कर्त्री । विगताः निमेषाः यस्मात् त निर्निमेषं ईक्षणानां लोचनानां सहस्रं सहस्रसंख्यकनेत्रा णीत्यर्थः । आप्तुं लब्धुं ऐच्छत् इयेष । तथाहि । क्षणंक्ष प्रतिक्षणम् । वीप्सायां द्विरुक्तिः । नन्दनस्य आलोकनानि दर्शनान्येव मङ्गलानि तेषु कस्य लोकस्य चेतः चित्तं न तृप्यति तृप्तिमेति अपितु न कस्यापीत्यर्थः । पुत्रदर्शनजनितानन्द न पूर्णतामितीति भावः ॥ अत्रार्थान्तरन्यासोऽलङ्कारः ॥ २० ॥

विनम्रेति ॥ गौरी पार्वती । कर्त्री । नवः नूतनः उदय उत्पत्तिर्यस्य तथोक्तं तत्कालभवमित्यर्थः । अतएव पार्वण पर्वणि पूर्णिमायां भवस्य जातस्य पूर्णस्येत्यर्थः । चन्द्रस्येव चा सुन्दरं मनोहारिणमिति यावत् । तं तनयम् । कर्मभूतम् विनम्राः विनताः पादपतिता इत्यर्थः । ये देवाश्च असुरा

(७) न नन्दनालोकनमङ्गलेषु, सुनन्दनालोकनकौतुकेन ।
(८) तृप्यति । (९) नवोदयत्, महोदयात् । (१) तम

स्वमङ्कमारोप्य सुधानिधान-
मिवात्मनो नन्दनमिन्दुवक्त्रा।
तमेे(२)कमेषा (३)जगदेकवीरं
बभूव पूज्या धुरि पुत्रिणीनाम् ॥ २२ ॥
निसर्गवात्सल्यरसौघसिक्ता
सान्द्रप्रमोदाद्भुतपूरपूर्णा।
तमेकपुत्रं जगदेकमाता-
(४)भ्युत्सङ्गिनं प्रस्नविणी बभूव ॥ २३ ॥

तेषां पृष्ठं पृष्ठदेशं गच्छतः सृप्रतः इति तथाभूताभ्यां अनेन देवासुरेभ्यो हस्ताभ्यामभयदानं ख्यान्यते। पाणिसरोरुहाभ्यां करपद्माभ्यां करणभूताभ्यां आदाय गृहीत्वा स्वं स्वकीयं उत्सङ्गतलं अङ्कदेशं निनाय प्रापितवती ॥ २१ ॥

स्वमिति ॥ इन्दुरिव वक्त्रं मुखं यस्याः तथोक्ता। मुखस्य सौन्दर्याच्चन्द्रसाम्यमिति भावः। एषा गौरी। कर्त्री। जगतां त्रिभुवनानां एकः अद्वितीयः वीरः पराक्रान्तः तथोक्तं तथा सुधायाः अमृतस्य निधानं पात्रमिव स्थितं तं एकं अद्वितीयं नन्दनं तनयं स्वं अङ्कं उत्सङ्गं आरोप्य स्थापयित्वा पुत्रिणीनां प्रशस्तपुत्रवतीनां धुरि अग्रे पूज्या मान्या बभूव ॥ २२ ॥

निसर्गेति ॥ जगतां भुवनानां एकमाता अद्वितीयजननी पार्वती। कर्त्री। उत्सङ्गिनं अङ्कस्थं तं एकपुत्रं अद्वितीयतनयं अभि अभिमुखम्। अभिशब्दयोगे द्वितीया। अतएव प्रस्नवः दुग्धस्रावः जातोऽस्य प्रस्नविणी दुग्धधारावर्षिणीत्यर्थः। निसर्गेण स्वभावतः वात्सल्यरसौघेन स्नेहरससमूहेन सिक्ता आर्द्रिता तथा

(२) एकमिवम्, एकदेवम्। (३) जगदेकदेवी।
(४) सोत्सङ्गिनम्, अभ्युत्सङ्गितम्।

अशेषलोकत्रयमातुरस्याः
षाण्मातुरः स्तन्यसुधामधासीत्।
सुरस्रवन्त्या किल कृत्तिकाभिः
मुहुर्मुहुः सस्पृहमीक्ष्यमाणः॥ २४॥
(५)सुखाश्रुपूर्णेन मृगाङ्कमौलेः
कलत्रमेकेन मुखाम्बुजेन।

सान्द्रेण निविड़ेन प्रमोदामृतपूरेण सन्तोषामृतप्रवाहेण पूर्णा बभूव॥ २३॥

अशेषेति॥ सुराणां देवानां सम्बन्धिनी स्रवन्ती नदी तया। कर्त्री। "स्रवन्ती निम्नगापगा" इत्यमरः। तया कृत्तिकाभिः। कर्त्रीभिः। स्पृहया सह वर्तमानं सस्पृहं साभिलाषं यथा तथा मुहुर्मुहुः वारंवारं ईक्ष्यमाणः अवलोक्यमानः। तासामपि मातृत्वादिति भावः। षण्णां मातॄणां जननीनां अपत्यं पुमान् षाण्मातुरः कार्तिकेयः। कर्ता। "षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः" इत्यमरः। अशेषं समस्तं यत् लोकानां जगतां त्रयं तस्य मातुः जनन्याः अस्याः पार्वत्याः सम्बन्धिनी स्तने भवा या सुधा पीयूषं तां अधासीत् पीतवान्॥ २४॥

सुखेति॥ मृगाङ्कः चन्द्रः मौलौ यस्य तथोक्तस्य शिवस्य सम्बन्धि कलत्रं पत्नी पार्वती। कर्त्री। सुखाश्रुपूर्णेन हर्षाश्रुजलपूरितेन एकेन अद्वितीयेन मुखाम्बुजेन मुखकमलेन करणेन एकनालात् एककाण्डात् उद्गतानि उत्पन्नानि यानि पञ्चपद्मानि पञ्चसंख्यककमलानि तेषां लक्ष्मीः शोभेव लक्ष्मीः शोभा यस्याः तथोक्तां षण्णां षट्संख्यकानां वदनानां मुखा-

(५) सुखास्रपूर्णेन।

तस्यैकनालो(६)द्गतपद्मपद्म-
लक्ष्मीं क्रमात् षड्वदनीं(७)चुचुम्ब ॥२५॥
(८)हैमी फलं हेमगिरेर्लतेव
विकस्वरं नाकनदीव पद्मम्।
पूर्वेव दिङ्नूतनमिन्दुमाभात्
तं पार्वती नन्दनमादधाना ॥ २६ ॥
प्रीतात्मना (९)सा प्रयतेन दत्त-
हस्तावलम्बा शशिशेखरेण।
कुमारमुत्सङ्गतले दधाना
विमानमभ्रंलिहमारुरोह ॥ २७ ॥

समाहारः तां षड्वदनीम्। द्विगुत्वात् ङीप्प्रत्ययः। क्रमात् यथाक्रमं चुचुम्ब चुम्बितवती स्पृष्टवतीति यावत् ॥ २५ ॥

हैमीति॥ हेमगिरेः सुमेरोः सम्बन्धिनी हैमी हेमविकारा काञ्चनमयीति यावत्। लता वल्ली। कर्त्री। फलमिव। अत्र हैममिति विशेषणपदमध्याहार्यम्। नाकनदी मन्दाकिनी। कर्त्री। विकस्वरं प्रस्फुटितं पद्मं कमलमिव। तथा पूर्वा पूर्वाभिधेया दिक् नूतनं नवोदयं इन्दुं चन्द्रमिव। पार्वती गौरी। कर्त्री। तं नन्दनं तनयं आदधना धारयन्ती सती आभात् बभौ॥ मालोपमेयम् ॥ २६ ॥

प्रीतेति। प्रीतः प्रसन्नः आत्मा मनो यस्य तथोक्तेन प्रयतेन अवधानपरेण शशिशेखरेण। कर्त्रा। दत्तः अर्पितः हस्तावलम्बः कराश्रयः यस्याः तथाभूता सा पार्वती। कर्त्री। कुमारं तनयं उत्सङ्गतले अङ्कदेशे दधाना बिभ्रती

---

(६) उद्गम। (७) चुचुम्बे। (८) हैमम्। (९) सुप्रयतेन।

महेश्वरोऽपि प्रमदप्ररूढ-
रोमोद्गमो भूधरनन्दनायाः ।
(१)अङ्कादुपादत्त (२)तदङ्कतः (३)सा
तस्मात्तु (४)सोऽप्यात्मजवत्सलत्वात् ॥२८॥

(५)दधानया नेत्रसुधैक(६)सत्रं
पुत्रं पवित्रं सुतया (७)तयाद्रेः ।
संश्लिष्यमाणाः शशिखण्ड(८)धारी
विमानवेगेन (९)गृहाञ्जगाम ॥ २९ ॥

सती। अभ्रंलिहं आकाशभेदि अत्युन्नतमित्यर्थः। विमानं देवयानं आरुरोह आरूढा ॥ २७ ॥

महेश्वर इति। प्रमदेन हर्षेण प्ररूढाः उन्नताः रोमोद्गमाः रोमाञ्चा यस्य तथोक्तः महेश्वरः हरोऽपि। कर्ता। आत्मजे पुत्रे वत्सलत्वात् वात्सल्यात् दयावत्त्वादिति यावत्। हेतौ पञ्चमी। भूधरस्य पर्वतस्य नन्दनायाः कन्यायाः गौर्याः सम्बन्धिनः अङ्कात् उत्सङ्गदेशात् उपादत्त गृहीतवान्। पुत्रमिति कर्मपदमध्याहार्यम्। सा गौरी। कर्त्री। तदङ्कतः तस्य महेश्वरस्य अङ्कतः क्रोडतः। पुत्रमिति शेषः। उपादत्तेति क्रियापदमध्याहार्यम्। तु पुनः स महेश्वरोऽपि तस्याः गौर्याः सम्बन्धिनः अङ्कात्। पुत्रमिति शेषः। उपादत्तेति क्रियापदमध्याहार्यम् ॥ २८ ॥

दधानयेति। सुधायाः पीयूषस्य एकं अद्वितीयं सत्रं सदादानम्। "सत्रमाच्छदने यज्ञे सदादाने" इत्यमरः। नेत्रयोः नयनयोः सुधैकसत्रं येन तथोक्तं पीयूषवन्नेत्रयोरानन्दवर्धक-

(१) अकाण्डमादत्त। (२) तमङ्कतः। (३) सः।
(४) सोऽप्यात्मज। (५) दधानया। (६) पात्रम्।
(७) तयाद्रेः। (८) मौलिः, वाही। (९) गृहम्।

(१)अधिष्ठितः स्फाटिकशैलशृङ्गे
तुङ्गे (२)निजं (३)धाम निकामरम्यम्।
महोत्सवाय (४)प्रमथप्रमुख्यान्
(५)पृथून् गणान् शम्भुरथादिदेश॥ ३०॥
पृथु(६)प्रमोदः (७)प्रगुणो गणानां
गणः समग्रो वृषवाहनस्य।

मित्यर्थः। तथा पवित्रं पूतं पुत्रं दधानया धारयन्त्या अनया अद्रेः हिमालयस्य सुतया तनयया पार्वत्या। कर्त्र्या। संश्लिष्यमाणः स्नेहवशात् समालिङ्ग्यमानः शशिनः खण्डं धरतीति तथोक्तः शशिखण्डधारी शिवः। कर्ता। विमानस्य देवयानस्य वेगेन बलेन गृहान् भवनानि जगाम ययौ॥ २९॥

अधीति॥ अथ अनन्तरं तुङ्गे उन्नते स्फाटिकशैलस्य स्फटिकमयपर्वतस्य कैलासस्येत्यर्थः। यत् शृङ्गं शिखरं तत्र निकामरम्यम् अतिमनोहारि निजं स्वकीयं धाम भवनम् अधिष्ठितः स्थितः शम्भुः महादेवः। कर्ता। पृथून् महतः प्रमथप्रमुख्यान् प्रमथप्रभृतीन् गणान् स्ववर्गान्। कर्मभूतान्। महोत्सवाय महोत्सवं कर्तुम् आदिदेश आदिष्टवान् आज्ञापयामासेत्यर्थः। पुत्रमहोत्सवस्यानन्दजनकत्वादिति भावः॥ ३०॥

पृथ्विति। अथ आज्ञानन्तरं प्रकृष्टाः गुणाः यस्य सः। नृत्यगीतादिनिपुण इत्यर्थः। समग्रः समस्तः गणानां प्रमथादीनां

(१) अधिष्ठित। (२) निजे।
(३) धामनि कामरम्ये, धाम्नि निकामरम्ये।
(४) प्रमथान् स नाथः। (५) महिम्ना स्वमुदा, प्रथिम्ना पृथक्।
(६) प्रमोद। (७) प्रगुणे।

गिरीन्द्रपुत्र्यास्तनयस्य जन्म-
न्यथोत्सवं संववृते विधातुम् ॥ ३१ ॥
स्फुरन्मरीचिच्छुरिताम्बराणि
सन्तानशाखिप्रसवाञ्चितानि ।
(८)उच्चिक्षिपुः काञ्चनतोरणानि
गणा (९)वराणि स्फटिकालयेषु ॥ ३२ ॥
दिक्षु प्रसर्पंस्तदधीश्वराणा-
मथामराणामिव (१)मध्यलोके ।

गणः वर्गः। कर्ता। महान् बलवान् प्रमोदः आनन्दः यस्य तथोक्तः सन् वृषवाहनस्य महादेवस्य तथा गिरीन्द्रपुत्र्याः पर्वतराजकन्यायाश्च सम्बन्धिनः तनयस्य जन्मनि उत्पत्तौ उत्सवं पुत्रजन्मजनितमहोत्सवमित्यर्थः। विधातुं कर्त्तुं संववृते प्रवृत्तः ॥ ३१ ॥

अथ सप्तभिः श्लोकैर्महोत्सवं विशिनष्टि—

स्फुरदिति॥ स्फटिकालयेषु स्फटिकमयभवनेषु गणाः प्रमथाः। कर्तृभूताः। स्फुरन्तीभिः भासमानाभिः मरीचिभिः किरणैः करणैः छुरितं मिश्रीकृतं व्याप्तमिति यावत्। अम्बरं नभोमार्गः यैः तथोक्तानि तथा सन्तानशाखिनां कल्पतरूणां प्रसवैः पुष्पैः पुष्पमालाभिरित्यर्थः। अञ्चितानि शोभितानि निर्मितानीति यावत्। वराणि श्रेष्ठानि काञ्चनतोरणानि स्वर्णनिर्मितबहिर्द्वाराणि उच्चिक्षिपुः उत्क्षिप्तवन्तः बबन्धुरित्यर्थः। उत्सवे माल्यादिना बहिर्द्वारशोभनं चिरप्रसिद्धमिति भावः ॥ ३२ ॥

दिक्ष्विति। अथ तोरणोत्तोलनानन्तरं दिक्षु पूर्वादिषु

(८) विचिक्षिपुः। (९) चलानि। (१) नाकिलोके

महोत्सवं शंसितुमाहतोऽन्यैः
दध्वान (२)धीरः पटहः पटीयान् ॥ ३३ ॥
महोत्सवे तत्र समागतानां
गन्धर्वविद्याधरसुन्दरीणाम्।
सम्भावितानां गिरिराजपुत्र्या
गृहेऽभवन्मङ्गलगीतकानि ॥ ३४ ॥
सुमङ्गलोपायन(३)पात्रहस्ताः
तं मातरो मातृव(४)दभ्युपेताः।

दशसु आशासु प्रसर्पन् धावन् तासां दिशां ये अधीश्वराः अधिपतयः तेषां तदधीश्वराणाम् अमराणां इन्द्रप्रभृतीनां देवानां सम्बन्धी पटीयान् पटुतरः महत्तर इति यावत् अतएव धीरः गभीरः दीर्घस्वर इत्यर्थः। पटहः वाद्यविशेषः अन्यैः अपरैः देववादकैः। कर्तृभिः। आहतः ताड़ितः सन् मध्यः यो लोकः तस्मिन् पृथिव्यां महान् बलवान् यः उत्सवः आनन्दः तं शंसितुं सूचयितुं कथयितुमिति यावत्। दध्वान ध्वनिं कृतवान्। अत्र ध्वनेर्महोत्सवशंसनाभावेऽपि तत्शंसन-कल्पनादुत्प्रेक्षालङ्कारभेदः ॥ ३३ ॥

महोत्सवे इति। तत्र तस्मिन् महोत्सवे कर्मणीति शेषः। गृहे समागतानां प्राप्तानां अतएव गिरिराजस्य पर्वताधिपतेः पुत्र्या कन्यया पार्वत्या। कर्त्र्या। सम्भावितानां सम्मानितानां गन्धर्वाः विद्याधराश्च तेषां सुन्दरीणां कामिनीनां तत्-कर्तृकाणि मङ्गलस्य सम्बन्धीनि गीतकानि सङ्गीतानि अभवन् अभूवुः। महोत्सवे स्त्रियो गायन्तीति भावः ॥ ३४ ॥

सुमङ्गलेति। सु अतिशयेन यानि मङ्गलानि मङ्गल-

(२) धीरम्। (३) पूर्ण। (४) अभ्युपेत्य।

निधाय दूर्वाक्षतकानि मूर्ध्नि
निन्युः स्वमङ्कं गिरिजातनूजम् ॥ ३५ ॥
ध्वनत्सु तूर्येषु सुमन्द्रमङ्का-
लिङ्गोर्ध्वकेष्वप्सरसो रसेन ।
(५)सुसन्धिबन्धं ननृतुः (६)सुवृत्त-
गीतानुगं भावरसानुविद्धम् ॥ ३६ ॥

जनकानि उपायनानि उपढौकनसामग्र्यः तेषां पात्राणि हस्तेषु यासां तथोक्ताः अभ्युपेताः समागताः मातरः ब्राह्मी-प्रभृतयः । सप्तेति अध्याहार्यम् । कर्तृभूताः । "ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः" इत्यमरः । मूर्ध्नि मस्तके बालस्येति भावः । दूर्वाक्षतानि दूर्वाः अक्षतानि आतपतण्डुलानि च निधाय स्थापयित्वा तं गिरिजायाः पार्वत्याः तनूजं तनयं मातृवत् मातर इव स्वं निजम् अङ्कम् उत्सङ्गं निन्युः नीतवत्यः स्वाङ्के स्थापयामासुरित्यर्थः । ताभिरपि तत्र मातृवत् स्नेहो दर्शित इति भावः ॥ ३५ ॥

ध्वनत्स्विति ॥ अङ्कम् आलिङ्गम् ऊर्ध्वकञ्च तेषु अङ्का-लिङ्गोर्ध्वकेषु तदभिधेयेषु तूर्येषु वाद्यविशेषेषु सुमन्द्रं सुगभीरं यथा तथा ध्वनत्सु ध्वनिं कुर्वत्सु सत्सु । अप्सरसः रम्भाप्रभृतयः स्त्रियः । कर्त्र्यः । रसेन बालस्नेहेन हेतुना सु शोभनाः सन्धीनां स्वरसंयोगादीनां बन्धाः गीतप्रबन्धाः यस्मिन् कर्मणि तथोक्तं तथा सुवृत्तानि सुरचितानि शोभनच्छन्दांसीति यावत् गीतानि अनुगानि सङ्गतानि यस्मिन् कर्मणि [तथोक्तं तथा भावैः रत्यादिभिः रसैः शृङ्गारादिभिश्च अनुविद्धं व्याप्तं सुसङ्गतमिति

(५) सुगन्धि । (६) सुगन्धि, सद्वृत्त ।

वाता ववुः सौख्यकराः प्रसेदु-
राशा विधूमो हुतभुग्दिदीपे।
जलान्यभूवन्विमलानि तत्रोत्-
सवेऽन्तरिक्षं प्रससाद सद्यः॥ ३७॥
गम्भीर(७)शङ्खध्वनिमिश्रमुच्चैः
गृहोद्भवा दुन्दुभयः प्रणेदुः।

यावत् यस्मिन् कर्मणि तथोक्तं यथा तथा ननृतुः। क्रियाया विशेषणान्येतानि। नृत्यं कृतवत्यः गात्राणि विचिक्षिपुरिति यावत्॥ ३६॥

वाता इति॥ अत्र उत्सवे सद्यः उत्सवक्षणमेव वाताः अनिलाः। कर्तारः। सौख्यं कुर्वन्तीति सौख्यकराः सुखस्पर्शा इत्यर्थः। सन्तः ववुः चेलुः। आशाः पूर्वादयो दिशः प्रसेदुः प्रसन्नाः बभूवुः निर्मला जाता इत्यर्थः। हुतं हव्यं घृतादीत्यर्थः भुङ्क्ते यः स हुतभुक् अग्निः। कर्त्ता। हुतोपपदाद्भुजधातोः क्विप्प्रत्ययः। विगतः धूमः यस्मात् तथोक्तः निर्धूमः सन् दिदीपे जज्वाल। जलानि वारीणि विमलानि स्वच्छानि अभूवन् बभूवुः। तथा अन्तरिक्षम् आकाशं प्रससाद प्रसन्नमभूत्। निर्मेघत्वादिति भावः। महापुरुषाणां जन्म सर्वेषां सुखाय भवतीति भावः। ३७॥

गम्भीरेति॥ गृहेषु धनिकभवनेषु उद्भवाः जाताः वाद्यमाना इत्यर्थः। दुन्दुभयः दुन्दुभिसंज्ञकाः वाद्यविशेषाः। कर्त्तारः। गम्भीरेण मन्द्रेण शङ्खस्य ध्वनिना पाञ्चजन्याख्यशङ्खशब्देन मिश्रं युक्तं यथा तथा उच्चैः प्रणेदुः नादं चक्रुः। तथा व्योम्नि आकाशे दिवम् ओको येषां तथोक्तानां सुराणां सम्बन्धिनः

(७) शब्द।

दिवौकसां व्योम्नि विमानसंघा
(८)विमुच्य पुष्पप्रचयान् प्रसस्रुः ॥ ३८ ॥

इत्थं महेशाद्रिसुतासुतस्य
(९)जन्मोत्सवः संमदयाञ्चकार ।
चराचरं विश्वमशेषमेतत्
परं चकम्पे किल तारकश्रीः ॥ ३९ ॥

ततः कुमारः (१)सुमुदां निदानैः
(२)स बाललीलाचरितैर्विचित्रैः ।

विमानानां देवयानानां संघाः समूहाः । कर्तारः । पुष्पाणां कुसुमानां ये प्रचयाः संघाः तान् विमुच्य विकीर्य्य अभिहृष्येत्यर्थः । प्रसस्रुः विचेरुः प्रस्थितवन्त इत्यर्थः ॥ ३८ ॥

इत्थमिति ॥ महेशः हरश्च अद्रिसुता पार्वती च तयोः सम्बन्धिनः सुतस्य पुत्रस्य सम्बन्धी इत्थम् उक्तप्रकारः जन्मनि यः उत्सवः जन्मोत्सवः । कर्ता । एतत् अशेषं सकलं चराचरं स्थावरजङ्गमात्मकं विश्वं जगत् संमदयाञ्चकार उन्मत्तं कृतवान् । परं केवलं तारकस्य तारकाख्यमहासुरस्य सम्बन्धिनी श्रीः लक्ष्मीः चकम्पे किल कम्पितवत्येव । अत्र किलशब्दोऽवधारणार्थे प्रयुक्तः । तारकासुरस्य भाविविपज्जनकतया तं विना तस्य पुत्रस्य जन्मनि सर्वं जगत् हृष्टमभूदिति भावः ॥३९॥

तत इति ॥ ततस्तदनन्तरं स कुमारः । कर्ता । विचित्रैः नानाप्रकारैः अतएव सुमुदां शोभनहर्षाणां निदानैः आदिकारणैः हेतुभूतैरिति यावत् । "निदानं त्वादिकारणम्" इत्यमरः । बालस्य शिशोः या लीला क्रीड़ा तस्याः चरितैः

(८) विमुञ्चतां पुष्पचयान्, विमुञ्चतः पुष्पचयान् ।
(९) जन्मोत्सवे । (१) स मुदः । (२) स्वबाललीलाललितैः

गिरीशगौर्योर्हृदयं जहार
मुदे न हृद्या किमु बालकेलिः ॥ ४० ॥
महेश्वरः शैलसुता (३)च हर्षात्
(४)सतर्षमेकेन मुखेन गाढम् ।
अजातदन्तानि (५)मुखानि सूनोः
मनोहराणि (६)क्रमत(७)श्चुचुम्ब ॥ ४१ ॥
क्वचित् स्खलद्भिः क्वचिदस्खलद्भिः
क्वचित्प्रकम्पैः क्वचिदप्रकम्पैः ।

चरित्रैः अनुष्ठानैरिति यावत् । गिरीशः हरः गौरी पार्वती च तयोः सम्बन्धि हृदयं चित्तं जहार हृतवान् । तदेवार्थान्तरन्यासेन कथयति । तथाहि । हृद्या हृदयहारिणी बालकेलिः शिशुक्रीड़ा बाल्यलीलेति यावत् । किमु मुदे आनन्दाय न । लोकस्येति पदमूह्यम् । अपितु सर्वस्यैव मुदे भवतीत्यर्थः ॥४०॥

महेश्वर इति ॥ महेश्वरः शिवः । कर्त्ता । पार्वती गौरी च । कर्त्री । अत्र कर्तृपदद्वयस्य द्विवचनापत्तिभयेन पार्थक्येन चुचुम्बेति क्रियया सहान्वयः कर्त्तव्यः । हर्षात् सन्तोषात् हेतोः एकेन अद्वितीयेन मुखेन करणेन सूनोः तनयस्य अजाताः अनुद्भूताः दन्ताः दशनाः येषां तथोक्तानि तथा मनः चित्तं हरन्तीति तथोक्तानि मुखानि आननानि षण्मुखत्वाद्बहुवचनम् । तर्षेण तृष्णया सह वर्तमानं सतर्षं गाढं निविड़ञ्च यथा तथा क्रमतः यथाक्रमं चुचुम्ब पस्पर्श चुम्बनं चकारेत्यर्थः । पुत्रवात्सल्यवशात् मतापित्रोः पुत्रमुखचुम्बनं स्वतःसिद्धमिति भावः ॥ ४१ ॥

क्वचिदिति ॥ स बालः विभुः । कर्ता । क्वचित् कस्मिंश्चित्

---

(३) अपि । (४) सहर्षम् । (५) वक्त्राणि । (६) क्रमशः ।
(७) चुचुम्बे ।

बाल: (८)स लीलाचलनप्रयोगै:
तयोर्मुदं वर्धयति स्म पित्रो: ॥ ४२ ॥
अहेतुहासस्फुरिताननेन्दु:
(९)गृहाङ्गणक्रीड़नधूलिधूम्र: ।
मुहुर्वदन् किञ्चिदलक्षितार्थं
मुदं तयोरङ्कगतस्ततान ॥ ४३ ॥

स्थाने स्खलद्भि: पतद्भि: क्वचित् कस्मिंश्चित् स्थले अस्खलद्भि अपतद्भि: तथा क्वचित् कस्मिंश्चित् प्रदेशे प्रकम्पै: कम्पनयुक्तै क्वचित् कस्मिंचित् प्रदेशे नास्ति कम्पो येषां तथोक्तै: कम्पनरहितै: लीलया क्रीड़या यत् चलनं गमनं तस्य प्रयोगै: व्यापारै निमित्तभूतै: तयो: पित्रो: माता च पिता च तयो:। एकशेषद्वन्द्व:। जननीजनकयो: पार्वतीशिवयो: मुदं हर्षं सन्तोषमिति यावत् वर्धयति स्म ततानेत्यर्थ:। प्रथमचलनशिक्षाय बालस्य पतनापतनादीनि कार्याणि पित्रो: हर्षजनकानीति भाव: ॥ ४२ ॥

अहेत्विति ॥ गृहाङ्गणे भवनचत्वरे यत् क्रीड़नं लीला तेन निमित्तेन धूलिभि: रजोभि: धूम्र: धूसर: तथा अङ्कम् उत्सङ्गं गत: प्राप्त: स बाल:। कर्ता। अहेतुना अकारणेन हासेन हसितेन स्फुरित: शोभित: मिश्रित इति यावत् आननं मुखमेव इन्दु: चन्द्र: यस्य तथाभूत: तथा मुहु: वारंवारम् अलक्षित: अव्यक्त: अर्थो यस्य तथोक्तं अस्फुटत्वादिति भाव:। किञ्चित् अल्पं वाक्यमिति शेष:। वदन् उच्चारयन् सन् तयो: जननीजनकयो: मुदं हर्षं ततान कृतवान्। बालस्यास्फुट वाक्यं मातापित्रो: महाहर्षजनकमिति भाव: ॥ ४३ ॥

---

(८) सलीलम्। (९) गेहाङ्गण।

गृह्णन्विषाणे हरवाहनस्य
स्पृशन्नुमा(१)केसरिणं सलीलम्।
स भृङ्गिणः सूक्ष्मतरं शिखाग्रं
कर्षन् बभूव प्रमदाय पित्रोः ॥ ४४ ॥

एको नव द्वौ दश पञ्च सप्त-
त्यजीगण(२)न्नात्ममुखं प्रसार्य।
महेशकण्ठोरगदन्तपङ्क्तिं
(३)तदङ्गजः शैशव(४)मौग्ध्यमैशिः ॥ ४५ ॥

गृह्णन्निति ॥ हरस्य शिवस्य वाहनस्य वृषस्य सम्बन्धिनी विषाणे शृङ्गे गृह्णन् धारयन्। तथा उमायाः गौर्याः सम्बन्धिनं केसरिणं सिंहम्। केसराः सन्त्यस्य तथोक्तं वाहनमित्यर्थम्। सलीलम् अनायासं यथा तथा। बालस्य लोकोत्तरशक्तिसम्पन्नत्वादिति भावः। स्पृशन् आक्रमन् तथा भृङ्गिणः गणभेदस्य सूक्ष्मतरम् अतिसूक्ष्मं शिखायाः चूड़ायाः अग्रम् अग्रभागं कर्षन् आक्षिपन् स बालकः। कर्ता। पित्रोः पार्वतीशिवयोः सम्बन्धिने प्रमदाय आह्लादाय बभूव जातः। प्रमदायेति क्रियाग्रहणाच्चतुर्थी ॥ ४४ ॥

एक इति ॥ तस्य महेशस्य अङ्गजः उत्सङ्गस्थः ईशस्यापत्यं पुमान् ऐशिः महेश्वरतनयः। कर्तृभूतः। आत्मना स्वहस्तेन करणेन मुखम् उगरस्येति शेषः। कर्मभूतम्। शैशवेन बालत्वेन मुग्धस्य भावः मौग्ध्यं सौन्दर्यं यस्मिन् कर्मणि तत् यथा तथा प्रसार्य महेशस्य शिवस्य कण्ठे ग्रीवायाम् उरगस्य माला-

(१) केसरिणः सटालीः। (२) मञ्जु।
(३) तदङ्गगः। (४) मुग्धभीतिः, मुग्धमैशिः।

कपर्दिकण्ठान्तकपालदाम्नो-
ऽङ्गुलिं प्रवेश्याननकोटरेषु।
दन्तानुपात्तुं रभसो बभूव
मुक्ताफलभ्रान्ति(५)करः कुमारः ॥४६॥

शम्भोः शिरोऽन्तःसरित्तरङ्गान्
विगाह्य गाढं शिशिरान्रसेन।
(६)स जातजाड्यं निजपाणिपद्म-
मतापयद्भालविलोचनाग्नौ ॥ ४७ ॥

रूपस्येति भावः या दन्तानां वदनानां पङ्क्तिः श्रेणी ताम् एक नव द्वौ दश पञ्च सप्त इति इत्थं प्रकारेण अजीगणत् गणयामास। णिजन्तात् गणधातोर्लुङ्॥ ४५॥

कपर्दीति॥ कुमारः बालः। कपर्दिनः शिवस्य कण्ठान्ते कण्ठदेशे यत् कपालानां नृकपालानां दाम माला तस्य आननकोटरेषु मुखकूपेषु अङ्गुलिं प्रवेश्य प्रवेशं कारयित्वा मुक्ताफलानां मौक्तिकानां भ्रान्तिं भ्रमं करोति जनयतीति तथोक्तः सन् दन्तान् कपालस्थितानिति शेषः। उपात्तुं ग्रहीतुं रभसो सवेगः व्यग्र इति यावत्। "रभसो वेगहर्षयोः" इत्यमरः। बभूव जातः॥ ४६॥

शम्भोरिति॥ स कुमारः। कर्ता। शिशिरान् शीतलान् शम्भोः शिवस्य शिरसः अन्तमध्ये या सरित् गङ्गा तस्याः सम्बन्धिनः तरङ्गान् प्रवाहान् रसेन हर्षेण आनन्देनेति यावत्। गाढं निविडं यथा तथा विगाह्य मज्जयित्वा अतएव जातं शीतत्वतमिति शेषः। जाड्यं जडत्वं यस्य तथोक्तं निजपाणिपद्मं स्वकीयहस्तपङ्कजं भाले ललाटे यत् विलोचनं

(५) करान्, धरः। (६) सञ्जातजाड्यः।

किञ्चित्कलं (७)भङ्गुरकन्धरस्य
नमज्जटाजूटधरस्य शम्भोः ।
प्रलम्बमानं किल कौतुकेन
चिरं चुचुम्बे मुकुटेन्दुखण्डम् ॥ ४८ ॥

इत्थं शिशोः (८)शैशवकेलिवृत्तैः
मनोभिरामैर्गिरिजागिरीशौ ।
(९)मनोविनोदैकरसप्रसक्तौ
दिवानिशं नाविदतां कदाचित् ॥ ४९ ॥

नयनं तस्य सम्बन्धिनि अग्नौ अनले अतापयत् उष्णं कृतवान्। तथा कश्चित् शीतलपाणिमग्नौ तापयति तद्वदिति भावः ॥ ४७ ॥

किञ्चिदिति ॥ किञ्चित् अल्पं यथा तथा भङ्गुरा बालत्वात् भङ्गशीला कन्धरा कण्ठं यस्य तथोक्तः स बालः । नमत् दीर्घत्वात् पतत् यत् जटाजूटं केशकलापः तस्य धरः तथोक्तस्य तस्य शम्भोः शिवस्य सम्बन्धिनं प्रलम्बमानम् आश्रयमाणं कलं मधुरं मुकुटे मुकुटदेशे यः इन्दोः चन्द्रस्य खण्डः शकलम् अर्धचन्द्र इत्यर्थः । "भित्तं शकलखण्डे वा" इत्यमरः । तं कौतुकेन आनन्देन चिरं बहुक्षणं चुचुम्बे किल ॥ ४८ ॥

इत्थमिति ॥ गिरिजा पार्वती च गिरीशः शिवश्च तौ। कर्तारौ। मनोभिरामैः चित्तहारिभिः इत्थं एवंभूतैः पूर्वोक्तैरित्यर्थः। शिशोः बालस्य सम्बन्धिभिः शैशवकेलिवृत्तैः बाल्यक्रीडाचरित्रैः। "वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले" इत्यमरः। मनसः चित्तस्य सम्बन्धी यो विनोदः आनन्दः तत्र यः एकः अद्वितीयः रसः स्वादः तत्र प्रसक्तौ आसक्तौ सन्तौ

(७) भङ्गुरकण्ठरस्यः । (८) कैतव । (९) मुदा ।

इति बहुविधं बालक्रीड़ाविचित्रविचेष्टितं
ललितललितं सान्द्रानन्दं मनोहरमाचरन्।
अलभत परां (१)बुद्धिं षष्ठे दिने नवयौवनं
स किल सकलं शास्त्रं शस्त्रं विवेद(२)विभुर्यया ॥५०

कदाचित् कस्मिंश्चिदपि समये इत्यर्थः। दिवानिशं दिवारात्रं न अविदतां दिवानिशं न बुद्धवन्तावित्यर्थः। पुत्रोत्सवानन्द-विह्वलत्वादिति भावः। ४८॥

इतीति॥ इति एवंभूतं बहुविधं विविधप्रकारं ललित-ललितं ललितप्रकारम्। प्रकारे गुणवचनस्य द्विर्भावः। अतिम-नोहारीत्यर्थः। सान्द्रानन्दं सान्द्रः घनः आनन्दो यत्र तथोक्तं मनोहरं चित्तहारि बालक्रीड़ायाः बाल्यलीलायाः सम्बन्धि विचित्रं अद्भुतं विचेष्टितं विहारं चरित्रमिति यावत् चेष्टा-मित्यर्थः। आचरन् कुर्वन् विभुः कार्यकुशलः स सुतः षष्ठे दिने पराम् उत्कृष्टां बुद्धिं धिषणां प्रज्ञामित्यर्थः। नवयौवनं तारुण्यञ्च अलभत प्राप्तवान्। यया बुद्धा प्रज्ञावलेन सकलं सर्वं शास्त्रं व्याकरणादीनि शास्त्राणीत्यर्थः। शस्त्रं धनुर्विद्या-दीनि शस्त्राणीत्यर्थः। जातावेकवचनम्। विवेद किल ज्ञा-तवानेव। किलशब्दोऽत्रावधारणार्थः। पूर्वजन्मार्जितसंस्का-रवशादिति भावः। हरिणीच्छन्दः॥ ५०॥

इति श्रीचित्रमोहनकृतया मोहिनीसमाख्यया व्याख्यया
समेतः श्रीकालिदासकृतौ कुमारसम्भवे महा-
काव्ये कुमारोत्पत्तिर्नाम एकादशः सर्गः।

---

(१) वृद्धिम्।　　(२) विभोरपि।

## द्वादश: सर्ग: ।

अथ प्रपेदे त्रिदशैरशेषै:
क्रूरासुरो(१)पप्लवदु:खितात्मा ।
पुलोमपुत्रीदयितोऽन्धकारिं
(२)पत्नीव तृष्णातुरित: पयोदम् ॥ १ ॥

(३)दृप्तारिसंत्रासखिलीकृतात् स
कथञ्चिदम्भोदविहारमार्गात् ।
अवाततारामि गिरिं (४)गिरीश-
गौरीपदन्यासविशुद्धमिन्द्र: ॥ २ ॥

अथेति ॥ अथ पुत्रस्य विद्याप्राप्त्यनन्तरं पुलोम्न: तदभिधेयस्य असुरराजस्य या पुत्री कन्या शचीत्यर्थ:। तस्या: सम्बन्धी दयित: प्रिय: इन्द्र इत्यर्थ:। कर्ता। क्रूरस्य तीव्रस्य असुरस्य तारकाभिधेयस्य सम्बन्धी य: उपद्रव: अत्याचार: स्वस्थानताड़नादिक: तेन हेतुना दु:खित: जातक्लेश: आत्मा यस्य तथोक्त:। तथा तृष्णया पिपासया आतुरित: पीड़ित: सन्। नास्ति शेषो येषां ते अशेषास्तै: त्रिदशै: सुरै: सह। पत्री पक्षी चातक इत्यर्थ:। पय: जलं ददातीति पयोद: मेघ: तमिव। अन्धकस्य अन्धकनाम्न: असुरस्य अरि: शत्रु: तद्विनाशकत्वादिति भाव:। तं हरं प्रपेदे प्राप्तवान्। पूर्णोपमेयम् ॥ १ ॥

दृप्तेति ॥ स इन्द्र: देवराज:। कर्ता। दृप्तात् अभिमानिन: अरे: शत्रो: तारकात् संत्रासेन भयेन खिलीकृतात् रुद्धीकृतात् दुरवगाह्यमानीकृतादित्यर्थ:। अम्भोदानां मेघानां य:

(१) उपद्रव। (२) पक्षीव तृष्णाव्यथित:, तृष्णातुरचातकवत्।
(३) दृप्तासुरत्रास। (४) गिरिश।

संक्रन्दनः स्यन्दनतोऽवतीर्य
मेघात्मनो मातलिदत्तहस्तः ।
(५)पिनाकिनोऽथालयमुच्चचाल
शुचौ (६)पिपासाकुलितो यथाभ्रः ॥३॥

दूतस्ततो(७)ऽथ प्रतिबिम्बभाजं
विलोकमानः स्फटिकाद्रिभूमौ ।

विहारः सञ्चारः तस्य मार्गः व्योमेत्यर्थः । तस्मात् गिरीशस्य हरस्य गौर्याः पार्वत्याश्च सम्बन्धी यः पदन्यासः चरणार्पणं तेन विशुद्धं पूतं गिरिं कैलासं अभि अभिमुखम् । अभिशब्दयोगे द्वितीया । कथञ्चित् क्लेशेनेत्यर्थः । अवाततार उत्तरितवान् अवरोहित्यर्थः । कार्यप्रार्थी गुरुजनसमीपं सभयं गच्छतीति भावः ॥ २ ॥

संक्रन्दन इति ॥ अथ कैलासे अवरोहणानन्तरं संक्रन्दनः इन्द्रः । कर्ता । मातलये स्वसारथये दत्तः अर्पितः करः स्वहस्तः येन तथोक्तः सन् । स्वहस्तेन मातलिहस्तमवलम्ब्येत्यर्थः । स्वहस्तेनान्यहस्तावलम्बनं विना न कश्चिदुच्चस्थानादवतरितुं शक्नोतीति भावः । मेघः आत्मा स्वरूपं यस्य तस्य मेघात्मनः स्यन्दनतः रथात् । पञ्चमीस्थाने तसिल् । अवतीर्य अवरुह्य । शुचौ ग्रीष्मसमये पिपासया तृष्णया आकुलितः पीड़ितः जनः अभ्रः यथा वारीव । पिनाकः पिनाकसंज्ञकं धनुर्विद्यतेऽस्य तस्य पिनाकिनः शिवस्य आलयं गृहं उच्चचाल जगाम । अत्रापि पूर्णोपमा ॥ ३ ॥

दूत इति ॥ अथ शिवालयप्राप्त्यनन्तरं स इन्द्रः । कर्ता । स्फटिकाद्रेः स्फटिकमयपर्वतस्य कैलासस्य भूमौ पृथिव्यामि-

---

(५) पिनाकिरम्यालयम् । (६) पिपासाकुलवन्नीघम् ।
(७) अपि ।

आत्मानमप्येकमनेकधा स
व्रजन्विभोरास्पदमाससाद ॥ ४ ॥
विचित्रचञ्चन्मणिभङ्गि(८)सङ्गं
सौवर्णदण्डं दधतातिचण्डम्।
स नन्दिनाधिष्ठितमध्यतिष्ठत्
सौधाङ्गणद्वारमनङ्गशत्रोः ॥ ५ ॥

त्यर्थः। इतस्ततः यत्र तत्र व्रजन् धावन् अतएव प्रतिविम्बभाजं प्रतिविम्बितं लब्धप्रतिविम्बमित्यर्थः। एकं एकसंख्यमपि आत्मानं स्वदेहं अनेकधा अनेकप्रकारं बहुसंख्यकमित्यर्थः। विलोकमानः पश्यन् सन्। कैलासस्य स्फटिकमयत्वादिति भावः। विभोः प्रभोः हरस्य आस्पदं स्थानं भवनमित्यर्थः। आससाद प्राप्तवान् ॥ ४ ॥

विचित्रेति ॥ स इन्द्रः। कर्ता। विचित्राणां अनेकविधानां चञ्चतां दीप्यमानानां मणीनां रत्नानां याः भङ्गयः रचनाभेदाः तासां सङ्गः सम्पर्कः यस्य तं तथोक्तं नानावर्णरत्नखचितमित्यर्थः। तथा अतिचण्डं अतिभयङ्करं, सौवर्णः सुवर्णमयः यो दण्डः यष्टिः तम्। कर्मभूतम्। दधता धारयता नन्दिना नन्दिनामधेयेन गणेन। कर्त्रा। अधिष्ठितं अधिश्रितम्। रक्षकतयेति भावः। अनङ्गशत्रोः कामारेः शिवस्य सौधस्य हर्म्यस्य सम्बन्धिनः अङ्गणस्य चत्वरस्य यत् द्वारं तत्। "अङ्गणं चत्वराजिरे" इति "स्त्री द्वार्द्वारं प्रतीहारः" इति चामरः। कर्मभूतम्। अध्यतिष्ठत् प्राप्तवान्। प्रभोर्द्वारं रक्षन् तत्र तस्थावित्यर्थः। ॥ ५ ॥

(८) भङ्गि।

ततः (८)स कक्षाहितहेमदण्डो
नन्दी सुरेन्द्रं प्रतिपद्य सद्यः।
प्रतोषयामास (१)सुगौरवेण
गत्वा (२)शशंस स्वयमीश्वरस्य ॥ ६ ॥
भ्रूसंज्ञया(३)नेन कृताभ्यनुज्ञः
सुरेश्वरं तं जगदीश्वरेण।
प्रवेशयामास सुरैः पुरोगः
समं स नन्दी सदनं (४)सदस्य ॥ ७ ॥

तत इति ॥ ततः इन्द्रस्य शिवहर्म्यद्वारप्राप्त्यनन्तरं स नन्दी नन्दिनामको गणः। कर्ता। सुरेन्द्रं देवेन्द्रं प्रतिपद्य आसाद्य सद्यः तत्क्षणं अविलम्बेनेत्यर्थः। कक्षे भुजाधःप्रदेशे आहितः स्थापितः निहित इति यावत्। हेमदण्डः सुवर्णयष्टिः येन स तथोक्तः सन् सुष्ठु गौरवं आदरः तेन स्वागतप्रश्नादिनेत्यर्थः। प्रतोषयामास सन्तोषयामास। स्वयं गत्वा नत्वन्येनेति भावः। ईश्वरस्य शिवस्य। सम्बन्धविवक्षया ईश्वरस्येत्यत्र ईश्वरमिति कर्मस्थाने षष्ठीप्रयोगः। शशंस विज्ञापयामास च। ससुरदेवेन्द्रागमनं निवेदयामासेत्यर्थः ॥ ६ ॥

भ्रूसंज्ञयेति ॥ स नन्दी। कर्ता। अनेन सम्मुखस्थितेनेत्यर्थः। जगतां ईश्वरेण हरेण। कर्त्रा। भ्रूसंज्ञया भ्रूसङ्केतेन भ्रूकुटीभङ्गेनेत्यर्थः। कृता दत्तेत्यर्थः। अभ्यनुज्ञा अनुज्ञास्य अनुमतिरिति यावत्। देवेन्द्रप्रवेशार्थमिति भावः। यस्य तथोक्तः। अतएव पुरोगः अग्रवर्ती सन् तं सुराणां देवानां

(८) स्वकक्षा। (१) स गौरवेण। (२) सदोमण्डलम्।
(३) तेन। (४) हरस्य।

स चण्डिभृङ्गिप्रमुखैर्गरिष्ठै-
र्गणैरनेकैर्विविधस्वरूपैः।
(५)अधिष्ठितं संसदि (६)रत्नमय्यां
(७)सहस्रनेत्रः शिवमालुलोके ॥ ८ ॥

(८)कपर्द(९)मुद्बद्धमहीनमूर्ध-
रत्नांशुभिर्भासुरमुल्लसद्भिः।
दधानमुच्चैस्तरमिद्धधातोः
सुमेरुशृङ्गस्य समत्वमाप्तम् ॥ ९ ॥

ईशस्य इन्द्रं सुरैः देवैः समं सार्धं अस्य जगदीश्वरस्य सम्बन्धि सत् सुन्दरं सदनं भवनं प्रवेशयामास प्रवेशितवान्। ॥ ७ ॥

स इति ॥ स सहस्रं सहस्रसंख्यकानि नेत्राणि नयनानि यस्य तथोक्तः इन्द्रः। इन्द्रस्य सहस्रनेत्रत्वादिति भावः। चण्डिभृङ्गिप्रमुखैः चण्डिभृङ्गिप्रभृतिभिः गरिष्ठैः गुरुतरैः। तथा विविधानि नानाप्रकाराणि स्वरूपाणि आकृतयः येषां तथोक्तैः अनेकैः बहुभिः गणैः प्रमथवृन्दैः। सहेति पदमध्याहार्यम्। रत्नमय्यां मणिनिर्मितायां संसदि सदसि अधिष्ठितं स्थितं शिवं हरं आलुलोके दृष्टवान् ॥ ८ ॥

अथ कपर्देत्यादिभिस्त्रयोदशभिः श्लोकैः शिवं वर्णयति—

कपर्देति ॥ उद्बद्धं उत्क्षिप्य भुजङ्गरज्जुभिः संयतं तथा उल्लसद्भिः स्फुरद्भिः अतएव अहीनां सर्पाणां ये इनाः स्वामिनः वासुकिप्रभृतयः महासर्पाः तेषां मूर्धसु मस्तकेषु यानि रत्नानि मणयः तेषां अंशुभिः किरणैः भासुरं उज्ज्वलं तथा उच्चैस्तरं अत्युच्चं कपर्दं जटाजूटं दधानं बिभ्रतम्। अतएव

(५) अधिष्ठितायां सदि। (६) रत्नवत्याम्। (७) सहस्रलोकः।
(८) कन्दर्पम्। (९) ऊर्ध्वंस्वमहाहि, उद्बन्धमहाहि।

विभ्राणमुत्तुङ्ग(१)तरङ्गमालां
गङ्गां जटाजूट(२)तटं भजन्तीम् ।
गौरीं तदुत्सङ्गजुषं हसन्ती-
मिव स्वफेनैः शरदभ्रशुभ्रैः ॥ १० ॥

गङ्गा(३)तरङ्गप्रतिविम्बितैः (४)स्वैः
(५)बहूभवन्तं शिरसा सुधांशुम् ।
चलन्मरीचिप्रचयै(६)स्तुषार-
गौरैर्हिमद्योतितमुद्वहन्तम् ॥ ११ ॥

इद्धाः दीप्ताः धातवः गैरिकादयो यत्र तथोक्तस्य सुमेरुशृङ्गस्य काञ्चनाद्रेः समत्वं तुल्यत्वं प्राप्तं गतम् ॥ ९ ॥

विभ्राणमिति ॥ उत्तुङ्गा वृद्धिङ्गता उन्नतगामिनीत्यर्थः। तरङ्गमाला प्रवाहपङ्क्तिः यस्याः तथाभूताम्। तथा जटाजूटस्य कपर्दस्य तटं सामीप्यं भजन्तीं तत्र सञ्चारिणीमित्यर्थः। तथा शरदभ्रवत् शरत्कालीनमेघवत् शुभ्रैः शुक्लवर्णैः स्वस्याः फेनैः। फेनस्य शुक्लत्वाद्धासमास्यम्। तस्य हरस्य उत्सङ्गजुषं हराङ्कसेविनीं गौरीं पार्वतीं हसन्तीमिव। सपत्नीत्वादिति भावः। पतिस्त्वामङ्के मान्तु मस्तके धृतवान् अतस्त्वत्तोऽहं पत्युः प्रियतमेत्युपहास्यं कुर्वतीमिव स्थितामित्यर्थः। उत्प्रेक्षालङ्कारः। गङ्गां विभ्राणं उद्वहन्तं धारयन्तमिति यावत् ॥ १० ॥

गङ्गेति ॥ पुनः किंविधम्। गङ्गायाः शिरःस्थाया इति भावः। ये तरङ्गाः कल्लोलाः तेषु प्रतिविम्बितैः प्रतिफलितैः स्वैः स्वकीयैः। अवयवैरिति शेषः। बहूभवन्तं बहुलीभवन्तम्

---

(१) कपाल। (२) तलम्। (३) तरङ्गैः।
(४) तैः। (५) बभ्रूभवन्तम्। (६) तुषारैर्गौरैर्दिमद्योतितम्।

भालस्थले लोचन(७)मेधमान-
धामाधरीभूतरवीन्दुनेत्रम् ।
युगान्तकालोचितहव्यवाहं
मीनध्वजप्लोषणमादधानम् ॥ १२ ॥
महार्हरत्नाञ्चितयो(८)रुदारं
स्फुरत्प्रभामण्डलयोः समन्तात् ।

अनेकीभवन्तमिति यावत् । सुधांशुम् इन्दुं शिरसा मस्तकेन कारणेन उद्वहन्तं धारयन्तम् । अतएव तुषारवत् हिमवत् गौरैः शुक्लैः तथा चलन्त्यः प्रसरन्त्यः याः मरीचयः किरणाः तासां प्रचयाः समूहाः तैः हिमद्योतितम् । हिमस्य हिम-संघातस्येव द्योतः द्युतिः दीप्तिरिति यावत् जातोऽस्य तथोक्तं हिमवद्दीप्तिमन्तमित्यर्थः । मस्तकस्थगङ्गातरङ्गसम्पर्कप्रतिफलितानेकचन्द्रकान्तिभिर्धवलाङ्गस्यापि शिवस्याधिकधवलीभूतत्वमिति भावः ॥ ११ ॥

भालेति ॥ भालस्थले ललाटप्रदेशे एधमानेन वर्धमानेन धाम्ना तेजसा अधरीभूते पराजिते रवीन्दू सूर्याचन्द्रमसाविव नेत्रे नयने येन तथाभूतं तदधिकतेजस्विनमित्यर्थः । अथवा एधमानं वर्धमानं धाम तेजः यस्य तथाभूतम् । तथा युगान्तकाले कल्पान्तसमये उचितः परिचितः निर्गलितत्वादिति भावः । हव्यवाहः अनलः यस्मात् तथोक्तम् अतएव मीनध्वजस्य कन्दर्पस्य प्लोषणं दाहकं दहनमिति यावत् । आदधानम् उद्वहन्तम् ॥ १२ ॥

महार्हेति ॥ पुनः किंविधम् । महार्हाणि बहुमूल्यानि यानि रत्नानि मणयः तैः अञ्चिते खचिते तथोक्तयोः । अतएव

---

(७) एधमानम् ।　　　　(८) उदार ।

कर्णस्थिताभ्यां शशिभास्कराभ्या-
मुपासितं कुण्डलयोश्छलेन ॥ १३ ॥
(८)स्ववद्धया कण्ठिकयेव नील-
माणिक्यमय्या कुतुकेन (१)गौर्याः ।
नीलस्य कण्ठस्य परिस्फुरन्त्या
कान्त्या महत्या (२)सुविराजमानम् ॥१४॥
कालार्दितानां त्रिदशासुराणां
चितारजोभिः (३)परिपाण्डुराङ्गम् ।

समन्तात् चतुर्दिक्षु उदारम् अधिकं यथा तथा स्फुरत् भासमानं प्रभायाः कान्त्याः मण्डलं पुञ्जं ययोः तयोस्तयोः कुण्डलयोः कर्णालङ्कारभेदयोः छलेन व्याजेन कर्णयोः श्रवणयोः यौ स्थितौ उपविष्टौ ताभ्यां शशी चन्द्रश्च भास्करः सूर्य्यश्च ताभ्याम् उपासितम् सेवितम् । अत्र कुण्डलयोश्छलेन सूर्य्यचन्द्रयोरारोप्यमाणत्वाद्रूपकापह्नुत्योः सङ्करः ॥ १३ ॥

स्ववद्धयेति ॥ पुनः किंप्रकारकम् । कौतुकेन कुतूहलेन स्वेच्छयेत्यर्थः । स्वेन स्वयम् आत्मनेति यावत् । बद्धया अर्पितया नीलमाणिक्यमय्या नीलवर्णमणिभेदप्रचुरया गौर्या पार्वत्याः सम्बन्धिन्या कण्ठिकयेव कण्ठालङ्कारेणेव । उत्प्रेक्षेयम् । परिस्फुरन्त्या परितः विक्रमन्त्या नीलस्य श्याम वर्णस्य कण्ठस्य स्वगलदेशस्य महत्या प्रचुरया कान्त्या शोभया सुविराजमानम् अतिशयेन दीप्यमानम् ॥ १४ ॥

कालार्दितानामिति ॥ पुनः कीदृशम् । कालेन प्रलयकालीनमृत्युनेत्यर्थः । ये अर्दिताः निहताः तयोस्तानां, त्रिदशा॰

(८) सुबद्धया । (१) गौर्या ।
(२) च विराजमानम् । (३) परिपाण्डुराणम् ।

महन्महेभाजिन(४)मुन्नताभ्र-
प्रालेयशैलश्रियमुद्वहन्तम् ॥ १५ ॥
पाणिस्थितब्रह्मकपालपात्रं
(५)वैकुण्ठभाजापि निषेव्यमाणम् ।
(६)नरास्थिखण्डाभरणं रणान्त-
मूलं त्रिशूलं कलयन्तमुच्चैः ॥ १६ ॥

देवाश्च असुरा: दैत्याश्च तेषां चितारजोभि: मृतमण्डपभस्मभि: परिपाण्डुराणि परित: अङ्गानि अङ्गानि अवयवा: यस्य तथाभूतम् । तथा महत् वृहत् परिणाहीति यावत् । महेभस्य महागजस्य गजासुरस्येति भाव: । अजिनं चर्म उद्वहन्तं परिदधानम् । अतएव उन्नतम् उदितम् अभ्रं मेघो यस्मिन् तथोक्त: य: प्रालेयशैल: हिमाचल: तस्य श्रीरिव श्री: कान्तिर्यस्य तथोक्तम् । अत्र निदर्शनालङ्कार: ॥ १५ ॥

पाणीति ॥ पुन: कीदृशम् । पाणौ हस्ते स्थितं धृतमित्यर्थ: । ब्रह्मण: कपालं मस्तकमेव पात्रं भिक्षापात्रमित्यर्थ: । विरूपचेष्टितस्य ब्रह्मण: शिवशापेन छिन्नमस्तकत्वादिति भाव: । यस्य तथोक्तम् । तथा वैकुण्ठभाजा वैकुण्ठवासिनापि विष्णुनापीत्यर्थ: । अन्यैर्देवै: किमु वक्तव्यमित्यपिशब्दार्थ: । कर्त्रा । निषेव्यमाणं पूज्यमानम् । तथा नराणां मनुष्याणाम् अस्थिखण्डा: एव आभरणानि अलङ्कारा: यस्य तथाभूतम् । तथा रणे संग्रामे य: अन्त: अवसानं योद्धृणामिति भाव: । तस्य मूलं कारणम् । तथा उच्चै: वृहत् त्रिशूलं त्रिशूलाख्यमस्त्रं कलयन्तं वहन्तं धारयन्तमिति यावत् ॥ १६ ॥

---

(४) उन्नत । (५) वैकुण्ठकङ्कालकरालकायम् ।
(६) नरास्थिकण्ठाभरणम्, नरास्थिखण्डाभरणम् ।

पुरातनीं ब्रह्मकपालमालां
कण्ठे वहन्तं पुनराप्तसञ्ज्ञाम् ।
(७)उद्गीतवेदां मुकुटेन्दुवर्षत्-
(८)सुधाभरौघाप्लवलब्धसंज्ञाम् ॥ १७ ॥

सलीलमङ्कस्थितया गिरीन्द्र-
पुत्र्या नवाष्टापद(९)वल्लिभासा ।
विराजमानं शरदभ्रखण्डं
परिस्फुरन्त्याचिररोचिषेव ॥ १८ ॥

पुरातनीमिति । पुनः कीदृशम् । मुकुटे मस्तके यः इन्दुः चन्द्रः शिरोभूषणभूत इति भावः । तस्मात् वर्षन् यः सुधाभरः अमृतसमूहः तस्य सम्बन्धी यः ओघः प्रवाहः तस्मिन् यः आप्लवः सन्तरणं तेन हेतुना लब्धा प्राप्ता संज्ञा चैतन्यं यया तथाभूताम् । अतएव पुनः भूयः आप्तसञ्ज्ञाम् उज्जीवन्तीं ततश्च उद्गीतः पठितः वेदः श्रुतिः यया तथोक्तां, पुरातनीं प्राग्भवां, ब्रह्मणां ये कपालास्तत्सम्बन्धिनीं स्रजं मालां, युगान्तरे अनेकब्रह्मसंहारकत्वादिति भावः । कर्मभूताम् । कण्ठे गलदेशे वहन्तं दधानम् ॥ १७ ॥

सलीलमिति । पुनः किंभूतम् । नवस्य नूतनस्य अष्टापदस्य हेम्नः या वल्लिः लता तस्याः भाः इव भाः यस्याः तथोक्तया "वल्ली तु व्रततिर्लता" इत्यमरः । तथा लीलया विलासेन सह वर्तमानं सलीलं यथा तथा अङ्कस्थितया क्रोड़वर्तिन्या गिरीन्द्रस्य पर्वतराजस्य पुत्र्या तनयया पार्वत्या परिस्फुरन्त्या, परितः विकसन्त्या प्रसरन्त्येति यावत् । अचिरं क्षणस्थायि रोचिः प्रभा

(७) उद्गीर्णवेदाम्, उद्गीर्णवेदाम् । (८) सुधौघसंप्लावन
(९) तुल्यभासा ।

हरान्धकप्राणहरं पिनाकं
(१)महासुरस्त्री(२)विधवत्वहेतुम् ।
करेण गृह्णन्त(३)मगृह्यमन्यैः
पुरा(४)स्मरप्लोषणकेलिकारम् ॥ १९ ॥
भद्रासनं काञ्चनपादपीठं
(५)महार्हमाणिक्यविभङ्गिचित्रम् ।
अधिष्ठितं चन्द्रमरीचिगौरै-
रुद्वीज्यमानं चमरैर्गणाभ्याम् ॥ २० ॥

यस्याः तथोक्तया विद्युतेत्यर्थः । शरदः शरत्कालस्य सम्बन्धि यत् अभ्रं मेघः तस्य खण्डं शकलमिव विराजमानं दीप्यमानं शोभमानमिति यावत् ॥ १८ ॥

हरेति ॥ पुनः कीदृशम् । हरस्य अभिमानिनः अन्धकस्य अन्धकाभिधेयासुरस्य प्राणानां हरं नाशनम् अन्धकनिसूदन-मित्यर्थः । तथा महासुराणां त्रिपुरादीनां याः स्त्रियः पत्न्यः तासां सम्बन्धि यत् विधवत्वं वैधव्यं पतिहीनत्वमिति यावत् । तस्य हेतुं कारणम् । त्रिपुरादीनां निसूदनत्वादिति भावः । तथा अन्यैः शिवभिन्नैः जनैः कर्तृभिः अगृह्यम् अधार्यं पिनाकं पिनाकाभिधेयं स्वकीयं धनुः करेण हस्तेन करणेन गृह्णन्तं धारयन्तम् । तथा पुरा पूर्वं कामस्य कन्दर्पस्य यत् प्लोषणं दाहः तदेव केलिः लीला तस्य कारः साधकः तथोक्तं कामनिसूदन-मित्यर्थः ॥ १९ ॥

भद्रासनमिति ॥ महार्हाणि महामूल्यानि यानि माणि-क्यानि मणयः तेषां विभङ्गिभिः रचनाभिः चित्रं नानारूपं

---

(१) गजासुर । (२) विधवात्व । (३) असह्यशूलम् । (४) सुर ।
(५) महार्घ्य ।

शस्त्रास्त्रविद्याभ्यस(६)नैकसक्ते
सविस्मयैरेत्य गणैः(७)सुदृष्टे।
(८)नीराज्यमाने (९)स्फटिकाचलेन
सानन्दनिर्दिष्टदृशं कुमारे॥ २१॥
तथाविधं शैलसुताधिनाथं
पुलोमपुत्रीदयितो निरीक्ष्य।

तथा भद्रं शुभम् आसनं पट्टवस्त्रादिनिर्मितमिति भावः। यत्र तथोक्तं काञ्चनस्य सुवर्णस्य पादपीठं सुवर्णमयसिंहासनम् अधिष्ठितं तत्रासीनमित्यर्थः। तथा चन्द्रस्य इन्दोः ये मरीचयः किरणाः तद्वत् गौरैः शुक्लैः चमरैः बालमयव्यजनैः करणैः गणाभ्यां कर्तृभूताभ्याम् उभयोः पार्श्वयोर्दत्तच्छायमानाभ्यामिति भावः। उद्वीज्यमानं प्रेङ्खमानं सेव्यमानमित्यर्थः॥ २०॥

शस्त्रेति॥ शस्त्राणां धनुःप्रभृतीनाम् अस्त्राणां सम्मोहना-दीनां सम्बन्धिनीनां विद्यानाम् अभ्यसनं अभ्यासे शिक्षाया-मिति यावत्। एकं केवलं यथा तथा सक्ते अनुरक्ते। तथा विस्मयेन संभ्रमेन सह वर्तमानैः सविस्मयैः साश्चर्यैः गणैः प्रमथैः। कर्तृभिः। एत्य तत्सन्निधिम् आगत्य सु अतिशयेन दृष्टे निरीक्षिते। बहुदिनजातस्य बालस्याद्भुतशक्तित्वादिति भावः। तथा स्फटिकाचलेन कैलासेन। कर्त्रा। तदधिष्ठातृदेवेनेति भावः। नीराज्यमाने दीपालोकेन सेव्यमाने कुमारे तनये सानन्दं सहर्षं यथा तथा निर्दिष्टे अर्पिते दृशौ नयने येन तथोक्तम्। सुतस्नेहेनेति भावः॥ २१॥

तथेति॥ पुलोम्नः पुलोमाख्यस्य ऋषेः पुत्री कन्या तस्याः सम्बन्धी दयितः प्रियः इन्द्रः। कर्ता। तथाविधं पूर्वोक्तश्लोक-

(६) अवसक्ते, एकसक्तैः। (७) सुदृष्टम्।
(८) संवीज्यमाने। (९) आश्रयाचलेन

आसीत् क्षणं क्षोभपरो (१)नु कस्य
मनो न हि क्षुभ्यति धामधाम्नि ॥२२॥
विकस्वराम्भोजवनश्रिया तं
दृशां सहस्रेण (२)निरीक्षमाणः।
(३)रोमालिभिः स्वर्गपतिर्बभासे
पुष्पोत्कराकीर्ण (४)इवाम्रशाखी ॥२३॥

वर्णितं शैलस्य सुता कन्या पार्वती तस्याः सम्बन्धिनम् अधिनाथम् अधिपतिं हरं निरीक्ष्य दृष्ट्वा क्षणं मुहूर्तकालं न तु चिरमिति भावः। क्षोभपरः विस्मितचित्तः आसीत् बभूव। अर्थान्तरन्यासेन क्षोभकारणं विवृणोति—हीति। तथाहि। धाम्नां तेजसां धाम्नि आधारे कस्य जनस्य मनः चित्तं न क्षुभ्यति क्षोभम् आप्नोति। अपि तु सर्वस्यैवेत्यर्थः। महादेवस्यासामान्यतेजस्वित्वादिति भावः॥ २२॥

विकस्वरेति॥ स्वर्गस्य सम्बन्धी पतिः देवेन्द्रः। कर्ता। विकस्वराणि प्रफुल्लानि यानि अम्भोजानि पङ्कजानि तेषां वनस्य श्रीः शोभेव श्रीः शोभा यस्य तथोक्तेन दृशां नयनानां सहस्रेण सहस्रसंख्यकनयनैरित्यर्थः। तं हरं निरीक्षमाणः अवलोकमानः अतएव रोम्णाम् आलिभिः श्रेणीभिः रोमाञ्चैः इत्यर्थः। युक्तः सन्। पुष्पाणां कुसुमानां यः उत्करः समूहः तेन आकीर्णः व्याप्तः आम्रशाखी चूतवृक्षः इव बभासे दिदीपे। अत्र महेन्द्रस्य हरदर्शनजनितरोमाञ्चव्याप्तशरीरत्वात् कुसुमव्याप्तरसालवृक्षसाम्यमिति भावः॥ २३॥

---

(१) अथ कस्य, अत्र कस्य, अन्तकस्य। (२) निरीक्ष्यमाणः।
(३) सर्वाङ्गनेत्रो द्युपतिः, सर्वाङ्गजेन द्युपतिः।
(४) इवाग्रशाखी।

दृष्ट्वा सहस्रेण दृशां महेश-
मभूत् कृतार्थो(५)ऽतितरां महेन्द्रः ।
(६)सर्वाङ्गजातं तदथो (७)विरूप-
(८)मिव (९)प्रियाकोपकरं विवेद ॥ २४ ॥

ततः कुमारं कनकाद्रिसारं
पुरन्दरः प्रेक्ष्य धृतास्त्रशस्त्रम् ।
महेश्वरोपान्तिकवर्तमानं
शत्रोर्जयाशां मनसा बबन्ध ॥ २५ ॥

दृष्ट्वेति॥ महान् इन्द्रः महेन्द्रः। कर्ता। दृशां नयनानां सहस्रेण। करणेन। महान् ईशः महेशः तं कर्मभूतं दृष्ट्वा निरीक्ष्य अतितरां भृशं यथा तथा कृताः चरिताः अर्थाः कृत्यानि येन तथोक्तः अभूत् बभूव। अथो शिवसाक्षात्कारानन्तरं सर्वाणि यानि अङ्गानि अवयवाः तेषु जातम् उत्पन्नं विरूपं रोमाञ्चजनितविरुद्धरूपं प्रियायाः स्वपत्न्याः कोपकरं क्रोधोत्पादकमिव विवेद जज्ञे। रोमाञ्चानां स्वपत्नीजनितत्वशङ्कयेति भावः॥ २४ ॥

तत इति॥ ततः तदनन्तरं पुरन्दरः महेन्द्रः। कर्ता। कनकाद्रेः सुमेरोरिव सारो बलं यस्य तथोक्तं महाबलवन्तमित्यर्थः। अतएव धृतानि शिक्षितानि अस्त्राणि धनुरादीनि शस्त्राणि सम्मोहनादीनि च येन तथाभूतं कुमारं कर्मभूतं महेश्वरस्य हरस्य उपान्तिके सन्निधौ वर्त्तमानं तिष्ठन्तं प्रेक्ष्य दृष्ट्वा शत्रोः तारकासुरस्य जये पराजये या आशा प्रत्याशा तां मनसा

---

(५) खलु तेन शक्रः।

(६) सर्वाङ्गजातं विकचम्, सर्वाङ्गजानेत्रदलम्। (७) विपूरम्।

(८) पुरा। (९) प्रियालोकपरम्, प्रियाकोपपरः।

श्रीनीलकण्ठ द्युपतिः पुरोऽस्ति
(१)त्वयि प्रणामावसरं (२)प्रतीच्छन् ।
(३)सहस्रनेत्रेऽत्र भव त्रिनेत्र
(४)दृष्ट्या प्रसाद(५)प्रगुणो (६)महेश ॥२६॥
इति प्रबद्धाञ्जलिरेत्य नन्दी
निधाय कक्षामभि (७)हैमवेत्रम् ।

बबन्ध दधार। बालस्याद्भुतबलवत्त्वाच्छत्रुजयाशा महेन्द्रस्य मनसि जातेति भावः ॥ २५ ॥

अथ युग्मेनेन्द्रं प्रति हरं प्रसन्नं कुर्वन्नाह—

श्रीति ॥ हे श्रीनीलकण्ठ श्रीसहितशिव द्युपतिः स्वर्गपतिः इन्द्रः। कर्ता। त्वयि भवति विषये प्रणामस्य प्रणतेः अवसरं कालं प्रतीच्छन् प्रतीक्षमाणः प्राप्तुमिच्छन्नित्यर्थः। सन् पुरः सम्मुखे अस्ति वर्तते। हे त्रिनेत्र त्रीणि नेत्राणि यस्य तथोक्त। हे महेश हर अत्र सम्मुखस्थे सहस्रं सहस्रसंख्यकानि नेत्राणि नयनानि यस्य तथोक्ते इन्द्रे दृष्ट्या दर्शनेन दर्शनदानेनेत्यर्थः। प्रसादे प्रसन्नतायां प्रगुणः प्रवणः भव प्रसादार्थिने प्रसन्नो भवितुमर्हसीत्यर्थः ॥ २६ ॥

इतीति ॥ अथ अनन्तरं नन्दी नन्दिनामधेयो गणः। कर्ता। हेम्नः सुवर्णस्य सम्बन्धि यत् वेत्रं यष्टिः तत् कर्मभूतं कक्षां प्रकोष्ठम् अभि सम्मुखम्। अभिशब्दयोगे कक्षामिति द्वितीया। निधाय स्थापयित्वा प्र प्रकर्षेण बद्धः रचितः अञ्जलिः

---

(१) तव।  (२) च पृच्छन्, प्रतीच्छन्।
(३) सहस्रनेत्रोऽत्र भव त्रिनेत्र, सहस्रनेत्रं प्रसर त्रिनेत्रम्।
(४) दृष्टा। (५) प्रवणः। (६) महेशः। (७) हैमदण्डम्।

प्रसादपात्रं पुरतो (८)भविष्णु-
रथ स्मराराातिमुवाच वाचम् ॥ २७ ॥

(९)पुरा (१)सुरेन्द्रं सुरसङ्घसेव्यं
(२)त्रिलोकसेव्यस्त्रिपुरासुरारिः।
प्रीत्या (३)सुधासारनिधारिणेव
ततोऽनुजग्राह विलोकनेन ॥ २८ ॥

किरीटकोटीच्युतपारिजात-
(४)पुष्पोत्करेणानमितेन मूर्ध्ना।

येन तथोक्तः सन् पुरतः अग्रतः एत्य आगत्य प्रसादस्य प्रसन्नतायाः पात्रं योग्यो भविष्णुः भवितुमिच्छुः सन्। प्रभोः पारितोषिकलाभेनेति भावः। स्मरस्य कामस्य यः अरातिः शत्रुः तं हरम् इति पूर्वश्लोकोक्तां वाचं वाक्यम् उवाच उक्तवान् ॥ २७ ॥

पुरेति ॥ नन्दिनिवेदनानन्तरं त्रिलोकसेव्यः त्रैलोक्यवन्दनीयः त्रिपुरासुरस्य त्रिपुरनामधेयस्य दैत्यस्य अरिः शत्रुः हरः कर्ता। सुराणां देवानां यः सङ्घः समूहः तेन सेव्यं पूजनीयं सुरेन्द्रं देवेन्द्रम्। कर्मभूतम्। प्रीत्या स्नेहेन। हेतौ तृतीया। सुधायाः अमृतस्य यः आसारः धारासम्पातः तस्य निधारिणा वर्षिणेव विलोकनेन दृष्ट्या पुरा प्रथमम् अनुजग्राह दृष्टिदानेन अनुगृहीतवानित्यर्थः। भृत्यानामुपरि स्वामिनामनुकूलदृष्टिपातस्य महानुग्रहसूचकत्वादिति भावः ॥ २८ ॥

---

(८) भविष्णुमध्यन्धकारातिम्, भविष्णुरधिस्मराराातिम्।
(९) मुदा। (१) असुरारिम्। (२) त्रैलोक्यसेव्यः, त्रैलोकसेव
(३) सुधासारविसारिणा, सुधाःसारणिधारिणा।
(४) पुष्पेण भक्त्या।

(५)स्वर्गैकवन्द्यो (६)जगदेकवन्द्यं
तं देवदेवं प्रणनाम देवः ॥ २९ ॥
अनेकलोकैकनमस्क्रियार्हं
महेश्वरं तं (७)त्रिदशेश्वरः सः।
भक्त्या नमस्कृत्य कृतार्थतायाः
पात्रं पवित्रं परमं बभूव ॥ ३० ॥

किरीटेति ॥ स्वर्गे एव एकं मुख्यं यथा तथा वन्द्यः पूजनीयः देवः इन्द्रः। कर्ता। आनमितेन अवनतेन विशेषणभूतेन। अतएव करीटस्य मुकुटस्य याः कोट्यः अग्राणि ताभ्यः च्युतः अधःपतितः यः पारिजातपुष्पाणां मन्दारकुसुमानां सम्बन्धी उत्करः समूहो यस्मात् तथोक्तेन मूर्ध्ना मस्तकेन। करणेन। जगताम्। कर्तृभूतानाम्। एकं अद्वितीयमेव वन्द्यं पूजनीयं तं पूर्वोक्तं देवानां सुराणां देवम् ईश्वरं हरं प्रणनाम नमस्कृतवान्। सर्वेषां वन्द्यत्वेनेति भावः ॥ २९ ॥

अनेकेति ॥ स त्रिदशेश्वरः देवदेवः इन्द्रः। कर्ता। अनेकेषां लोकानां सम्बन्धिनी या एका अद्वितीया नमस्क्रिया नमस्कारः तस्याम् अर्हः योग्यः तं महेश्वरं हरं भक्त्या भक्तिपूर्वकमित्यर्थः। नमस्कृत्य प्रणम्य कृताः चरिताः अर्थाः मनोरथाः येन तस्य भावः कृतार्थता तस्याः मनोरथसिद्धेरित्यर्थः। परमं भृशं पवित्रं विशदं पात्रं भाजनं स्थानमिति यावत्। बभूव जातः। सर्वलोकनमस्कारार्हमहेश्वरं नमस्कृत्यास्य कृतकृत्यत्वं जातमिति भावः ॥ ३० ॥

---

(५) स्वर्गैकवन्द्यः। (६) जगदेकदेवं ननाम देवः स सहस्रनेत्रः।
(७) त्रिदिवेश्वरः।

सुभक्तिभाजामधि (८)पादपीठं
प्रान्तच्छितिं नम्रतरैः शिरोभिः ।
ततः प्रणेमुः पुरतो (९)गणानां
गणाः (१)सुराणां क्रमतः पुरारिम् ॥३१॥

गणोपनीते प्रभुणो(२)पदिष्टः
(३)शुभासने हेममये पुरस्तात् ।
प्रापोपविश्य (४)प्रमुदं सुरेन्द्रः
(५)प्रभुप्रसादो हि मुदे न कस्य ॥ ३२ ॥

सुभक्तीति ॥ ततः इन्द्रनमस्कारानन्तरम् । सुभक्तिम् अतिभक्तिं भजन्ति सेवन्ते ये ते सुभक्तिभाजः तेषाम् । सुभक्ति-शब्दोपपदाद्भजधातोः क्विप्प्रत्ययः । भृशभक्तिमतामित्यर्थः । सुराणाम् इन्द्रभिन्नदेवानामित्यर्थः । गणाः संघाः । कर्तारः गणानां प्रमथादीनां पुरतः सम्मुखे पादपीठस्य पादाधार प्रान्तच्छितिं प्रान्तस्य समीपस्य सम्बन्धिनी या च्छितिः भूमि ताम् अधि अधिकृत्य आधारभूतामित्यर्थः । नम्रतरैः अत्यन्त वनतैः शिरोभिः मस्तकैः । करणैः । पुरारिं हरं क्रमत यथाक्रममित्यर्थः । प्रणेमुः नमस्कृतवन्तः । क्रमोल्लङ्घनेन प्रण मस्यानौचित्यादिति भावः ॥ ३१ ॥

गणेति ॥ सुरेन्द्रः देवेन्द्रः । कर्ता । प्रभुणा हरेण । कर्त्रा उपदिष्टः उपवेशनार्थमाज्ञप्तः सन् । गणैः प्रमथैः । कर्त्रा

---

(८) पादपीठं प्रीतार्चिभिः, पादपीठ प्रान्तीकृतैः ।
(९) सुराणाम् ।
(१) समग्राः क्रमतः स्मरारिम्, सुरेन्द्रक्रमतः पुरारिम् ।
(२) उपदिष्टे । (३) नृपासने, भुवासने । (४) प्रमदम
(५) प्रभोः प्रसादः ।

क्रमेण (६)चान्येऽपि विलोकनेन
सम्भाविताः सस्मितमीश्वरेण।
(७)उपाविशंस्तोषविशेषमाप्ता
दृग्गोचरे तस्य (८)सुराः समग्राः॥ ३३॥
अथाह देवो बलवैरिमुख्यान्
(९)गीर्वाणवर्गान् करुणार्द्रचेताः।

तृतीया। उपनीते आनीते हेममये सुवर्णनिर्मिते शुभं यत् आसनं तस्मिन्। आधारभूते। पुरस्तात् प्रभोः सम्मुखे एव उपविश्य स्थित्वा प्रकृष्टा या मुत् हर्षस्तां प्राप गतः। तस्य दृढ़ीकरणार्थं सामान्येन विशेषसमर्थनरूपमर्थान्तरं न्यस्यति हीति। तथाहि। प्रभोः। कर्तुः। प्रसादः अनुग्रहः कस्य जनस्य अनुगस्येत्यर्थः। मुदे सन्तोषाय न, अपितु सर्वस्यैव सन्तोषाय भवतीत्यर्थः। प्रभुप्रसाद आनन्दोत्पादक इति भावः॥ ३२॥

क्रमेणेति॥ अन्येऽपि इन्द्रव्यतिरिक्ताः समग्राः सकलाः सुराः देवाः ईश्वरेण हरेण। कर्त्रा। सस्मितम् ईषद्धास्यसहितं यथा तथा। अनेन प्रभोः प्रसादलक्षणं सूच्यते। विलोकनेन दृष्ट्या सम्भाविताः आदृताः सम्मानिता इत्यर्थः। अतएव तोषस्य हर्षस्य विशेषम् आधिक्यम् आप्ताः प्राप्ताः सन्तः क्रमेण अनुक्रमतः तस्य ईश्वरस्य दृग्गोः दृष्ट्योः गोचरे विषये सम्मुखमित्यर्थः। उपाविशन् स्थितवन्तः॥ ३३॥

अथेति॥ अथ देवानामुपवेशनानन्तरं देवः शिवः। कर्ता। बलस्य बलासुरस्य वैरी अरिः इन्द्रः मुख्यः अग्रगण्यः येषां तथोक्तान् इन्द्रप्रभृतीनित्यर्थः। गीर्वाणानां देवानां ये वर्गाः

---

(६) अन्येन। (७) उपाविष्टः। (८) पुरः समिताः।
(९) गीर्वाणमुख्यान्।

कृताञ्जलीकान(१)सुराभिभूतान्
(२)ध्वस्तश्रियः (३)श्रान्तमुखानवेक्ष्य ॥३४॥

अहो वतानन्तपराक्रमाणां
(४)दिवौकसो वीरवरायुधानाम् ।
हिमोदविन्दुग्लपितस्य किं वः
पद्मस्य दैन्यं दधते मुखानि ॥ ३५ ॥

संघाः तान्। कर्मभूतान्। असुरेण तारकाभिधेयेन दैत्येन अभिभूतान् पराजितान् अतएव ध्वस्ता विनष्टा श्रीः शोभा येषां तथोक्तान् अतएव श्रान्तानि क्लिष्टानि मुखानि येषां तथाभूतान् तथा कृतः रचितः अञ्जलिः यैः तथोक्तान् अवेक्ष्य अवलोक्य करुणया दयया आर्द्रं स्निग्धं चेतः चित्तं यस्य तथोक्तः सन् आह उक्तवान् ॥ ३४ ॥

अहो इति ॥ अहो सम्बोधनसूचकमव्ययमेतत्। दिवं स्वर्गः ओकः वासस्थानं येषां ते दिवौकसः तत्सम्बोधने हे दिवौकसः देवाः। वीरैः योधैः। कर्तृभिः। व्रियन्ते अभिलष्यन्ते यानि तथोक्तानि आयुधानि वज्रप्रभृतीनि येषां तथोक्तानाम्। तथा अनन्तः असीमः पराक्रमः सामर्थ्यं येषां तथाभूतानां वः युष्माकं मुखानि आननानि। कर्तृणि। हिमस्य शिशिरस्य सम्बन्धिनः उदस्य जलस्य सम्बन्धिभिः विन्दुभिः। कर्तृभिः। ग्लपितस्य ग्लानिं प्रापितस्य पद्मस्य कमलस्य दैन्यं दीनत्वं मलिनभावमित्यर्थः। किं कथं दधते बिभ्रति धारयन्तीति यावत्। अहं युष्माकं कातरभावकारणं सम्यक् ज्ञातुमिच्छामीति भावः ॥ ३५ ॥

---

(१) असुरैर्विधूतान्। (२) ध्वस्तप्रियान्। (३) शीर्णमुखान्। (४) दिवौकसाम्।

स्वर्गौकसः स्वर्गपरिच्युताः किं
(५)स्वपुण्यराशौ (६)सुमहत्तमेऽपि।
चिह्नं चिरोढ़ं (७)न तु यूयमेते
निजाधिपत्यस्य परित्यजध्वम्॥ ३६॥
(८)दिवौकसो देवगृहं विहाय
मनुष्यसाधारणतामवाप्ताः।
यूयं कुतः कारणात(९)श्चरध्वं
(१)महीतले (२)मानभृतो महान्तः॥३७॥

स्वर्गौकस इति॥ हे स्वर्गौकसः स्वर्गवासिनः। स्वेषां पुण्यानां स्वर्गावस्थितिनिमित्तभूतानां राशौ समूहे सु अतिशयेन महत्तमे अतिबलवत्यपि अक्षये सत्यपीत्यर्थः। यूयमिति पदमध्याहार्यम्। किं कथं स्वर्गात् स्वस्थानात् परिच्युताः परिभ्रष्टाः पतिता इत्यर्थः। पुण्यक्षयाभावाद्युष्माकं स्वर्गभ्रंशकारणं न पश्यामीति भावः। तु किन्तु एते यूयम्। कर्तारः। निजानां स्वकीयानां यत् आधिपत्यं स्वामित्वं तस्य चिरं बहुकालं ऊढं धृतम् अभ्यस्तमित्यर्थः। चिह्नं छत्रचामरप्रभृति न परित्यजध्वं न परित्यजत। बतेति खेदसूचकमव्ययम्। परित्यजध्वमित्यत्र अतीतकाले लोट् आत्मनेपदञ्च महाकविप्रयोगान्न दूष्यम्। छत्रादिचिह्नधारितया युष्माकं स्वपदभ्रंशो न लक्ष्यते इति भावः॥ ३६॥

दिवौकस इति॥ हे दिवौकसः देवाः। मानं बिभ्रति धारयन्ति ये ते मानभृतः। मानोपपदाद् भृधातोः क्विप्। अतएव महान्तः श्रेष्ठाः यूयम्। कर्तारः। कुतः कस्मात्

---

(५) सुपुण्यराशौ। (६) सुमहत्तरे। (७) बत, ननु।
(८) स्वर्गौकसः। (९) चरध्वे। (१) महीभृतः। (२) मानधनाः।

अनन्यसाधारणसिद्धमुच्चैः
(३)तद्दैवतं धाम (४)निकामरम्यम् ।
कस्मादकस्मान्निरगा(५)द्भवद्भ्यः
चिरार्जितं पुण्यमिवा(६)पचारात् ॥३८॥
(७)दिवौकसो वो हृदयस्य कस्मात्
तथाविधं धैर्यमहार्यमार्याः ।

कारणतः हेतोः देवानां सम्बन्धि यत् गृहं तत् । कर्मभूतम् । स्वर्गमित्यर्थः । विहाय परित्यज्य मनुष्याणां या साधारणता तुल्यता ताम् । कर्मभूताम् । अवाप्ताः प्राप्ताः सन्तः महीतले पृथिव्यां चरध्वं चरथ । महाकविप्रयोगादात्मनेपदम् ॥ ३७ ॥

अनन्येति ॥ हे सुराः । सम्बोधनपदमिदमध्याहार्यम् । अन्येषां साधारणं तुल्यं सत् सिद्धं साधितं न भवतीति अनन्यसाधारणसिद्धम् अतएव निकामरम्यम् अत्यन्तमनोहारि तथा उच्चैः महत् तत् प्रसिद्धं दैवतं देवतासम्बन्धि धाम स्थानं स्वर्गमित्यर्थः । कर्तृ । कस्मात् कथम् अकस्मात् सहसा भवद्भ्यः युष्मभ्यः अपचारात् पापात् हेतोः चिरार्जितं बहुकालेन साधितं पुण्यमिव निरगात् निर्जगाम ॥ ३८ ॥

दिवौकस इति ॥ दिवं स्वर्गः ओकः वासस्थानं येषां तथोक्ताः । तत्सम्बोधने हे दिवौकसः हे आर्याः माननीयाः देवाः । तथाविधं तादृशम् अलोकसामान्यमित्यर्थः । तथा अहार्यं हरणायोग्यम् अनिर्वचनीयमित्यर्थः । वो युष्माकं सम्बन्धिनः हृदयस्य चित्तस्य सम्बन्धि धैर्यं स्थिरभावः । कर्तृ । कस्मात् कथं ग्रीष्मेण घर्मकालेन अतितापादेः सन्ताप-

---

(३) सुदैवतम्, तदेव तम् । (४) निकामकामम्, निकामकाम्यम् ।
(५) यमाद्यैः, अगाधम् । (६) अपवादात् । (७) विबुधाः ।

अगादगाधस्य जलाशयस्य
(८)ग्रीष्मातितापादिवशादिवाम्भः ॥३९॥
सुराः (९)सुराधीशपुरःसराणां
(१)समीयुषां वः सममातुराणाम् ।
(२)तद्ब्रूत लोकत्रयजित्वरात् किं
(३)महासुरात्तारकतो विरुद्धम् ॥ ४० ॥

प्रभृतेः यत् वशम् अधीनता तस्मात् हेतोः । नास्ति गाधः तलं यस्य तथोक्तस्य अतलस्पर्शस्येत्यर्थः । जलस्य सम्बन्धी यः आशयः स्थानं तस्य सरोवरस्य अम्भः जलमिव अगात् च्युतं नष्टमित्यर्थः ॥ ३९ ॥

सुरा इति । हे सुराः देवाः । आतुराणां पीड़ितानाम् । धैर्यहीनत्वादिति भावः । अतएव समं युगपत् समीयुषां समागतानां समुपस्थितानामित्यर्थः । तथा सुराणां देवानां अधीशः देवराजः पुरःसरः अग्रगामी येषां तथोक्तानां वः युष्माकं लोकत्रयस्य त्रिभुवनस्य यः जित्वरः जेता तस्मात् तथा महान् प्रबलः यः असुरः दैत्यः तस्मात् तारकतः तारकाभिधेयात् दैत्यात् विरुद्धं विरोधः वैरमिति यावत् । विपूर्वात् रुधधातोर्भावे क्तप्रत्ययः । किम् प्रश्नसूचकमव्ययमत्र । तत् ब्रूत वदत कथयतेत्यर्थः । यूयमिति कर्तृपदमूह्यम् ॥ ४० ॥

---

(८) ग्रीष्मातपापत्तिवशात् ।

(९) पुरारातिपुरो विवर्णम्, पुरारातिपुरः सुवर्णम्, सुनाशीरपुरःसराणाम् ।

(१) समीयिवांसं सममातुराणाम्, समीहितं यत्सममातुराणाम्, समीयुषां सामसमातुराणाम् ।

(२) ब्रूत लोकत्रयजित्वराः, भूतलोकत्रयजित्वराः ।

(३) महासुरप्रायकृतः ।

पराभवं तस्य महासुरस्य
(४)निषेद्धुमेकोऽहमलम्भविष्णुः ।
दावानलप्लोषविपत्तिमन्यो
(५)महाम्बुदात् किं हरते वनानाम् ॥४१॥

इतीरिते मन्मथमर्दनेन
सुराः सुरेन्द्रप्रमुखा मुखेषु ।
(६)सान्द्रप्रमोदाम्बुतरङ्गितेषु
दधुः श्रियं सत्वरमाश्वसन्तः ॥ ४२ ॥

पराभवमिति ॥ भो देवाः सम्बोधनपदमिदमूह्यम् । तस्य महासुरस्य प्रबलदैत्यस्य तारकस्य । कर्तुः । कर्तरि षष्ठी । पराभवं पराजयं निषेद्धुं निवारयितुम् एकः केवलः अहम् अलम्भविष्णुः समर्थो भवामीत्यर्थः । तथाहि । महान् यः अम्बुदः मेघः तस्मात् अन्यः अपरः जनः । अन्यशब्दयोगे पञ्चमी । वनानां सम्बन्धिनो दावानलस्य । कर्तुः । प्लोषः दहनमेव विपत्तिः विपद् तां हरते किं हर्तुं समर्थः किं नैवेत्यर्थः । अत्र प्रतिवस्तूपमालङ्कारः । लक्षणन्त्वाकरे मृग्यम् ॥ ४१ ॥

इतीति ॥ मन्मथमर्दनेन महादेवेन । कर्त्रा । इति पूर्वोक्तवाक्यं ईरिते उक्ते सति सुरेन्द्रप्रमुखाः इन्द्रप्रभृतयः सुरा देवाः । कर्तारः । आश्वसन्तः विश्वसन्तः आश्वासं लभमाना इत्यर्थः । सान्द्राणि निविड़ानि यानि प्रमोदाश्रूणि हर्षबाष्पा तैः तरङ्गितेषु सञ्जाततरङ्गेषु आर्द्रेष्वित्यर्थः । मुखेषु सत्वरं द्रुतं यथा तथा श्रियं शोभां दधुः धृतवन्तः । महेश्वरवाक्यस्योल्लासजनकत्वादिति भावः ॥ ४२ ॥

---

(४) निषेद्धुकामः । (५) भरणस्य हर्तुं जलदात् प्रभुः किम् ।
(६) सान्द्रप्रमोदाः सुचिरस्मितेषु ।

ततो गिरीशस्य गिरां (७)विरामे
जगाद (८)लब्धेऽवसरे (९)सुरेन्द्रः ।
भवन्ति वाचोऽवसरे प्रयुक्ता
ध्रुवं (१)फलाविष्टमहोदयाय ॥ ४३ ॥

ज्ञानप्रदीपेन तमोऽपहेना-
विनश्वरेणास्खलितप्रभेण ।
भूतं भवद्भावि च यच्च किञ्चित्
(२)सर्वज्ञ सर्वं तव (३)गोचरं तत् ॥४४॥

तत इति ॥ ततः अनन्तरं गिरीशस्य महादेवस्य गिरां वचसां विरामे समाप्तौ सति । सुरेन्द्रः देवेन्द्रः । कर्ता । लब्धे ...प्ते अवसरे काले जगाद उक्तवान् । तदावश्यकत्वमाह । ...याहि । अवसरे समये प्रयुक्ताः कथिताः वाचः वाक्यानि ...फलेन आविष्टाय पूर्णाय महोदयाय महदुदये ध्रुवं निश्चितं ...वन्ति । अवसरोक्तं वचः सफलं भवतीति भावः ॥ ४३ ॥

ज्ञानेति ॥ सर्वं जानातीति सर्वज्ञः । सर्वोपपदात् ज्ञाधातो-...प्रत्ययः । तत्सम्बोधने हे सर्वज्ञ सर्वान्तर्यामिन्नित्यर्थः । अनेन ...सम्बोधनपदेन हरस्य सर्वज्ञत्वं सूचयति । तमः मोहान्धकारम् ...अपहन्ति ध्वंसते यत् तथोक्तेन । तमःशब्दोपपदात् हनधातो-...डप्रत्ययः । तथा अविनश्वरेण अक्षयेण । तथा अस्खलिता ...अच्युता प्रभा कान्तिर्यस्य तथाभूतेन ज्ञानं तत्त्वज्ञानमेव प्रदीपः ...आलोकः तेन । करणेन । भूतं गतं, भवत् तिष्ठत्, भावि

(७) वितानें ।    (८) लब्धावसरे ।    (९) सुरेशः ।
(१) प्रविस्रष्टफलोदयाय, प्रभाविष्टफलोदयाय ।
(२) सर्वज्ञ ।    (३) गोचरः ।

दुर्वार(४)दोरुद्यमदुःसहेन
यत्तारकेणामरघस्मरेण ।
(५)तदीशतामाप्नवता निरस्ता
वयं दिवोऽमी (६)वद किं न वेत्सि ॥४५॥
विधेरमोघं (७)स वरप्रसादम्
आसाद्य सद्यस्त्रिजगज्जिगीषुः ।

भविष्यच्च यत् किञ्चित्कर्मादि । अस्तीति शेषः । सत्सर्वं तव गोचरं ज्ञानविषयम् । भवतीति शेषः । आत्मज्ञानेन त्वं सर्वज्ञोऽसीति भावः ॥ ४४ ॥

दुर्वारेति ॥ हे महात्मन्निति सम्बोधनपदमध्याहार्यम् दुर्वारः निवारयितुमशक्यः यः दोरुद्यमः बाहुबलविक्रमः तं हेतुना दुःसहः दुर्धर्षः तथोक्तेन । अतएव अमराणां सुराणां घस्मरेण नाशकेन तथा ईशस्य भावः ईशता त्रैलोक्याधिपतित्वं ताम् आप्नवता प्राप्नवता तारकेण तारकाख्यासुरेण । कर्त्रा अमी । अस्तोपस्थिता इति भावः । वयं दिवः स्वर्गादपि यत् निरस्ताः निष्कासिताः दूरीकृता इत्यर्थः । तत् न वेत्सि किं न जानासि किम्, अपितु वेत्स्येव । वद कथय ॥ ४५ ॥

विधेरिति ॥ हे प्रभो ! । स तारकासुरः । कर्ता । विधेः ब्रह्मणः सकाशात् अमोघम् अव्यर्थं सफलमित्यर्थः । वरस्य अभिलाषस्य प्रसादम् अनुग्रहं प्रसन्नत्वेन प्रदत्तं वरमित्यर्थः आसाद्य लब्ध्वा सद्यः तत्क्षणमेव वरलाभसमये एवेत्यर्थः दोर्दण्डेन बहुप्रतापेन चण्डः अत्युग्रः । दुर्जय इति भावः

---

(४) दोर्दुर्मदः ।
(५) तदीश मन्वाक्सपदान्निरस्ताः, तदीशवामाप्नवतानिरस्ताः
(६) वत । (७) सुवर ।

(८)सुरानशेषानहकप्रमुख्यान्
दोर्दण्डचण्डो मनुते तृणाय ॥ ४६ ॥
स्तुत्या पुरास्माभिरुपासितेन
पितामहेनेति निरूपितं नः।
सेनापतिः संयति दैत्य(९)मेतं
(१)पुरः स्मरारातिसुतो निहन्ति ॥ ४७ ॥
(२)अहो ततोऽनन्तरमद्ययावत्
(३)सुदुःसहां तस्य पराभवार्तिम्।

अतएव त्रिजगतः त्रिभुवनस्य जिगीषुः जेतुमिच्छुः सन्। विधिदत्तवरप्रभावादिति भावः। अहकप्रमुख्यान् अहं प्रमुख्यः श्रेष्ठः येषां तादृशान् अशेषान् सकलान् सुरान् देवान् तृणाय मनुते तृणवत् गणयति। वरलब्धबलप्रदीप्तत्वादिति भावः ॥४६॥

स्तुत्येति॥ हे महात्मन् इदं सम्बोधनपदमध्याहार्यम्। पुरा प्राक् अस्माभिः। कर्तृभिः। स्तुत्या स्तवेन उपासितेन पूजितेन अनुकूलितेनेत्यर्थः। पितामहेन विधिना। कर्त्रा। नः अस्माकम् इति निरूपितं स्थिरीकृतम्। किं निरूपित-मित्याह—सेनापतिरिति॥ संयति युद्धे स्मरारातेः शिवस्य सम्बन्धी सुतः पुत्रः सेनापतिः सैन्याध्यक्षः सन् एतं दैत्यम् असुरं तारकं पुरः पुरा अग्रे निहन्ति निहनिष्यतीत्यर्थः। पुराशब्दयोगे भविष्यत्कालार्थे लट्। ४७ ॥

---

(८) अस्मत्प्रमुख्यानमरानशेषान्, सुरान् स जम्भारिमुखान् प्रचण्ड, सुरान् स जम्भारिमुरारिमुख्यान्।

(९) एनम्। (१) पुरा स्मरारातिसुतः, पुरः स्मरारेस्तनयः।

(२) अकामतः, अतस्ततः।

(३) सुरा यदान्तस्य पराभवार्तिम्, सुदुःसहं तस्य परा-भवं तम्।

विषेहिरे (४)हन्त हृदन्तशल्यम्
आज्ञा(५)निवेशं त्रिदिवौकसोऽमी ॥ ४८॥
निदाघधामक्लमविक्लवानां
नवीनमम्भोदमिवौषधीनाम् ।
(६)सुनन्दनं नन्दनमात्मनो नः
सेनान्य(७)मेतं स्वयमादिश त्वम् ॥४९॥

अहो इति ॥ अहो महात्मन्। ततः तस्मात् ब्रह्मनिरूपणात् अनन्तरं प्रभृति अद्ययावत् एतावत्कालपर्यन्तम् अमी त्रिदिवौकसः स्वर्गवासिनः देवाः। कर्त्तारः। सुदुःसहां सुदुःखेनापि सोढुमशक्याम असह्यामित्यर्थः। तस्य तारकस्य। कर्तुः। पराभवेन पराजयेन हेतुना या आर्त्तिः क्लेशः तां तथा हृदन्ते हृदयमध्ये शल्यं शल्यवत् दुःसहम् आज्ञायाः अनुशासनस्य विशेषं दानञ्च विषेहिरे असहन्त सोढ़वन्त इति यावत्। हन्तेति दुःखसूचकमव्ययम् ॥ ४८ ॥

निदाघेति ॥ हे भगवन्। निदाघे ग्रीष्मकाले धाम्ना सूर्यतेजसा यः क्लमः क्लेशः तेन विक्लवानां मलिनानां शुष्काणामित्यर्थः। ओषधीनां लताभेदानां सु अतिशयेन नन्दनं हर्षकारिणं नवीनं नवजातम् आषाढ़मासीयमित्यर्थः। नवमेघस्यानन्दजनकत्वादिति भावः। अम्भोदं मेघमिव नः अस्माकं क्लेशनिवारणार्थमिति भावः। आत्मनः स्वस्य एतं संमुखस्थं नन्दनं पुत्रं त्वं स्वयं सेनान्यं सैन्याध्यक्षम् आदिश आज्ञापय अनुशाधीति यावत्। प्रार्थनायां लोट्प्रयोगः। पितुराज्ञायाः शिरोधार्यत्वादिति भावः ॥ ४९ ॥

---

(४) तस्य। (५) नियोगम्। (६) समन्दनम्। (७) एनम्।

त्रैलोक्यलक्ष्मी(८)हृदयैकशल्यं
समूलमुत्खाय महासुरं तम्।
अस्माकमेषां पुरतो (९)भवन् सन्
दुःखापहारं (१)युधि यो विधत्ते ॥ ५० ॥
महाहवे नाथ तवास्य सूनोः
(२)शस्त्रैः शितैः कृत्तशिरोधराणाम्।
महासुराणां रमणीविलापैः
दिशो दशैता मुखरीभवन्तु ॥ ५१ ॥

त्रैलोक्येति ॥ यः कुमारः। कर्ता। एषां संमुखस्थाना-मित्यर्थः। अस्माकं पुरतः संमुखे युधि संग्रामे भवन् तिष्ठन् सन् युद्धे अग्रगामी सेनापतिर्भूत्वेत्यर्थः। त्रैलोक्यस्य त्रिभुवनस्य सम्बन्धिन्याः लक्ष्म्याः हृदयस्य चित्तस्य एकम् अद्वितीयं शल्यं शल्यवत् दुःसहं तं महासुरं पराक्रान्तदैत्यं तारकम्। कर्मभूतम्। मूलेन कुटुम्बादिना सह वर्तमानं यथा तथा उत्खाय विनाश्य दुःखापहारं क्लेशनाशं अस्माकमिति शेषः। विधत्ते करोति अविलम्बेनैव विधास्यतीत्यर्थः। अत्र वर्तमान-सामीप्ये लट्। भवत्पुत्रं विनास्माकं दुःखनाशोपायो नास्तीति भावः ॥ ५० ॥

महेति ॥ हे नाथ प्रभो। महान् प्रबलः यः आहवः युद्धं तस्मिन् अस्य संमुखस्थस्येत्यर्थः। तव सूनोः तनयस्य शितैः तीक्ष्णैः शस्त्रैः कृत्ताः छिन्नाः शिरोधराः ग्रीवाः येषां तथोक्तानां महासुराणां पराक्रान्तदैत्यानां रमणीनां कामिनीनां विलापैः पतिमरणजनितप्रलापैः एताः संमुखस्थिता इत्यर्थः।

---

(८) हितयैक। (९) भविष्णुः।
(१) सुधिया विधाता। (२) शरैः।

महारणक्षोणि(३)पशूपहारी-
कृतेऽसुरे तत्र तवात्मजेन।
वन्दिस्थितानां सुदृशां करोतु
(४)वेणिप्रमोक्षं सुरलोक एषः॥ ५२॥

इत्थं सुरेन्द्रे वदति स्मरारिः
सुरारिदुश्चेष्टितजातरोषः।
कृतानुकम्पस्त्रिदशेषु तेषु
भूया(५)ऽपि भूताधिपतिर्बभाषे॥ ५३॥

दश पूर्वादिदशसंख्यकाः दिशः। कर्त्र्यः। मुखरीभवन्तु ध्वनिता भवन्तु। अमुखराः मुखराः भवन्तु इत्यर्थे अभूततद्भावे च्विप्रत्ययः॥ ५१॥

महारणेति॥ हे देव। तत्र तस्मिन् असुरे दैत्ये तारके। कर्मभूते। तव आत्मजेन तनयेन। कर्त्रा। महती प्रबला या रणक्षोणिः युद्धभूमिः तस्यां ये पशवः शृगालादयः तेषाम् उपहारीकृते उपढौकनीकृते सति। भक्षणार्थं शृगादिभ्यः तद्देहे प्रदत्ते सतीत्यर्थः। एष संमुखवर्त्ती सुरलोकः देवसंघः। कर्त्ता। वन्दिस्थितानां बन्धनालयवर्त्तिनीनां सुदृशां सुलोचनानां सुन्दरीणामित्यर्थः। वेणीनां सम्बन्धी यः प्रमोक्षः मोचनं तं करोतु। प्रार्थनायां लोट्॥ ५२॥

इत्थमिति॥ सुरेन्द्रे देवराजे इत्थं पूर्वोक्तं वदति कथयति सति इन्द्रमुखात्तारकसंक्रान्तविवरणश्रवणानन्तरमिति भावः। स्मरारिः तथा भूतानां प्राणिनाम् अधिपतिः शिवः। कर्त्ता। सुरारेः देवशत्रोः। कर्तुः। यत् दुश्चेष्टितम् उपद्रवः तेन। इति तृतीया। जातः उत्पन्नः रोषः कोपः यस्य तथोक्तः तथा तेषु

(३) क्षोणिपशूपहारे। (४) वेणिप्रमोक्षम्। (५) सः।

अहो अहो देवगणाः (६)सुरेन्द्र-
मुख्याः शृणुध्वं वचनं (७)ममैतै ।
विचेष्टते शङ्कर (८)एष देवः
कार्याय सज्जो (९)भवतां सुताद्यैः ॥५४॥
पुरा मयाकारि (१)गिरीन्द्रपुत्र्याः
प्रतिग्रहोऽयं नियतात्मनापि ।

त्रिदशेषु देवेषु कृता विहिता अनुकम्पा दया येन तथोक्तः सन् भूयोऽपि पुनरपि बभाषे उवाच ॥ ५३ ॥

अहो इति ॥ अहो अहो हे हे सुरेन्द्रमुख्याः इन्द्रप्रभृतयो देवगणाः। अहो इति सम्बोधनसूचकाव्ययपदस्य संभ्रमे द्विरुक्तिः। एते संमुखस्था इत्यर्थः। यूयमिति कर्तृपदमूह्यम्। मम सम्बन्धि वचनं वक्ष्यमाणवाक्यं शृणुध्वम् आकर्णयत। किं तदित्याह—एषः अयम्। अनेन विशेषणपदेनात्मनिर्देशः। शङ्करः देवः। कर्ता। सुताः पुत्राः आद्याः प्रमुखाः येषां तैः पुत्रपौत्रैः सार्धमित्यर्थः। भवतां युष्माकं सम्बन्धिने कार्याय। कार्यं साधयितुमित्यर्थः। क्रियायोगे चतुर्थी। सज्जः अस्त्रादियुक्तः सन् विचेष्टते प्रवर्तते। भवत्कार्यसाधनमेव मम मुख्यकार्यमिति भावः ॥ ५४ ॥

पुरेति ॥ पुरा पूर्वं नियतात्मना जितेन्द्रियेणापि। योगिनां दारपरिग्रहस्य निषिद्धत्वे सत्यपीत्यर्थः। मया। कर्त्रा। गिरीन्द्रस्य हिमालयस्य पुत्र्याः पार्वत्याः एष प्रतिग्रहः

---

(६) सुरेन्द्रमुखाः । (७) ममैतत् । (८) एव ।
(९) सकलं शुभाय, सकलैः शुभाद्यैः ।
(१) गिरीशपुत्र्याः ।

(२)तत्रैष हेतुः खलु तद्भवेन
वीरेण (३)यद्वध्यत एष शत्रुः ॥ ५५ ॥

(४)अत्रोपपन्नं (५)तदमी नियुज्य
कुमारमेनं पृतनापतित्वे ।
(६)निघ्नन्तु शत्रुं सुरलोकमेष
(७)भुनक्तु भूयोऽपि सुरैः (८)सहेन्द्रः ॥५६॥

दृष्ट्वा दौर्य (९)भगवांस्तमात्मजं
घोरसङ्गरमहोत्सवोत्सुकम् ।

श्रादानं पाणिग्रहणमित्यर्थः । अकारि कृतः । तस्यां पार्वत्यां भवेन उत्पन्नेन वीरेण पराक्रान्तपुरुषेण । कर्त्रा । एष शत्रुः तारकाभिधेयः कर्मभूतः यत् वध्यते विनाश्यते एष खलु एव । अत्र खलुशब्द एवार्थे प्रयुक्तः । तत्र विषये पार्वत्याः परिग्रहे इत्यर्थः । हेतुः निमित्तं कारणमिति यावत् । तारकवधसमर्थपुत्रोत्पादनार्थमहं पूर्वं पार्वतीं परिणीतवानित्यर्थः ॥५५॥

अत्रेति ॥ तत् तस्मात् हेतोः अमी भवन्तः । कर्तारः । अत्र तारकवधकार्ये उपपन्नं युक्तं समर्थमित्यर्थः । एनं कुमारं मत्पुत्रं कर्मभूतं पृतनानां सेनानां पतित्वे कर्तृत्वे नियुज्य सेनापतिं कृत्वेत्यर्थः । शत्रुं तारकसंज्ञकं निघ्नन्तु विनाशयन्तु मत्पुत्रसाहाय्यं लब्ध्वा शत्रुवधं कुर्वन्त्वित्यर्थः । एषः इन्द्रः सुरैः सह भूयः पुनरपि सुरलोकं स्वर्गं भुनक्तु पालयतु ॥ ५६ ॥

दृष्ट्वेति ॥ भगवान् शङ्करः महादेवः । कर्ता । इति उक्तप्रकारम्

(२) तत्रैकहेतुः । (३) हन्यते । (४) अथ । (५) तदितः तदतः । (६) निहन्तु, निहत्य । (७) पुनातु, लभेत ।
(८) सुरेन्द्रः । (९) भगवान् स्वमात्मजम् ।

(१)नन्दनं हि (२)जहि (३)देवविद्विषं
संयतीति निजगाद शङ्कर: ॥ ५७ ॥
शासनं पशुपते: (४)स कुमार:
स्वीचकार शिरसावनतेन ।
सर्वथैव पितृभक्तिरतानाम्
एष एव परम: खलु धर्म: ॥ ५८ ॥
असुरयुद्धविधौ (५)विबुधेश्वरे
पशुपतौ (६)वदतीति तमात्मजम् ।

ष: उदीर्य कथयित्वा घोर: भयङ्कर: सङ्गर: युद्धमेव महान् बल: उत्सव: आह्लाद: तव उत्सुकं व्यग्रम् अतएव नन्दनं हर्षोत्पादकं तम् आत्मजं पुत्रम्। कर्मभूतम्। हे पुत्र ति सम्बो-नपदमूह्यम्। संयति युद्धे देवान् इन्द्रादीन् विद्वेष्टीति थोक्तं देवारिं तारकं जहि विनाशय इति वाक्यं निजगाद वाच हि। अत्र हिशब्द: पादपूरणे प्रयुक्त:। अत्र रथोद्धता-त्तम्। लक्षणन्त्वाकरे मृग्यम् ॥ ५७ ॥

शासनमिति ॥ स कुमार:। कर्त्ता। पशुपते: भूतनाथस्य म्बन्धि शासनम् आज्ञाम् उपदेशमित्यर्थ:। अवनतेन प्रणतेन शरसा मस्तकेन स्वीचकार गृहीतवान्। तथाहि। सर्वथैव र्वप्रकारेणैव पितरि जनके या भक्ति: श्रद्धा तत्र रतानां नयुक्तानां जनानामित्यर्थ:। सम्बन्धो एष एव पित्रादेशसाध-मेव परम: बलवान् उत्कृष्ट इत्यर्थ:। धर्म: खलु। पित्राज्ञा-ालनस्य महापुण्यजनकत्वादिति भाव: ॥ ५८ ॥

(१) नन्दनैहि। (२) जय। (३) देवविद्विष:। (४) तु।
(५) विबुधेश्वर:।
(६) वदति प्रियमात्मजम्, वदति प्रियपुत्रकम्, वदति प्रियमातृकम्।

गिरिजया मुमुदे सुतविक्रमे
(७)सति न नन्दति (८)का खलु वीरसूः ॥५९॥
सुरपरिवृढः प्रौढं वीरं कुमारमुमापतेः
बलवदमरारातिस्त्रीणां दृगञ्जन(९)भञ्जनम्।
जगदभयदं सद्यः प्राप्य प्रमोदपरोऽभवद्
ध्रुवमभिमते पूर्णे को वा मुदा न हि माद्यति॥६०॥

असुरेति॥ विबुधेश्वरे देवदेवे पशुपतौ भूतनाथे हरे असुरस्य तारकाभिधेयस्य युद्धविधौ संग्रामकार्ये कथितमिति भावः। तम् आत्मजं तनयम् इति पूर्वोक्तं वदति कथयति सति गिरिजया पार्वत्या। कर्त्त्रा। मुमुदे प्रमुदितं हृष्टमिति यावत्। तथाहि। सुतस्य आत्मजस्य विक्रमे पराक्रमे सति का वीरसूः वीरमाता नारी न नन्दति न सन्तुष्यति अपितु सर्वैव नन्दतीत्यर्थः। पुत्रपराक्रमश्रवणं मातुः सन्तोषजनकमिति भावः॥ ५९॥

सुरेति॥ सुराणां देवानां परिवृढः शासनकर्त्ता इन्द्रः वृहधातोः कर्त्तरि क्तः। कर्त्ता। प्रौढम् अत्यन्तं वीरम् उमायाः पतेः स्वामिनः हरस्य पराक्रान्तं कुमारं तनयम्। कर्मभूतम्। बलवन्तः ये अमराणां सुराणां अरातयः शत्रवः तेषां स्त्रीणां नारीणां दृशां नेत्राणाम् अञ्जनस्य कज्जलस्य भञ्जनं भञ्जतीति तथोक्तम्। कर्त्तरि अनट्प्रत्ययः। नाशकमित्यर्थः। असुरहननेनेति भावः। अतएव जगताम् अभयं परित्राणं ददातीति तथोक्तं प्राप्य लब्ध्वा सद्यः तत्क्षणमेव प्रमोदे प्रकृष्टाह्लादे परः आसक्तः निर्भर इत्यर्थः। अभवत् जातः। अर्थान्तरन्यासेन तदेव समर्थयति—ध्रुवेति। हि तथाहि

(७) न किमु। (८) संयति। (९) गञ्जनम्।

त्रयोदशः सर्गः।

प्रस्थानकालोचितचारुवेषः
स स्वर्गिवर्गैरनुगम्यमानः।
ततः कुमारः शिरसा नतेन
(१)त्रैलोक्यभर्तुः प्रणनाम पादौ॥ १॥

अभिमते मनोरथे ध्रुवं निश्चयेन पूर्णे सफले सति को वा जनः मुदा हर्षेण न माद्यति उल्लसति हृष्यतीत्यर्थः। अपितु सर्व एव उन्मत्तो भवतीत्यर्थः। मनोरथसिद्धेरतिशयाह्लादजनकत्वादिति भावः। हरिणीवृत्तमेतत्। तदुक्तम्—नसमरसला गः षड्वेदैर्हयैर्हरिणी मतेति॥ ६०॥

इति श्रीकेशवमोहनकृतया मोहिनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये कुमारसैनापत्यवर्णनं नाम द्वादशः सर्गः।

---

प्रस्थानेति॥ ततः अनन्तरं स कुमारः कार्त्तिकेयः। कर्ता। प्रस्थानकाले प्रयाणसमये उचितः उपयुक्तः चारुः सुन्दरश्च वेषः धनुःशरादिग्रहणरूप इत्यर्थः। यस्य स तथोक्तः। तथा स्वर्गिवर्गैः देववृन्दैः इन्द्रप्रभृतिभिः। कर्तृभिः। अनुगम्यमानः सन् देवगणैः सार्धमित्यर्थः। नतेन अवनतेन शिरसा मस्तकेन। करणेन। त्रैलोक्यभर्तुः त्रिभुवनेश्वरस्य हरस्य सम्बन्धिनौ पादौ चरणौ। कर्म। प्रणनाम प्रणामं चक्रे। यात्राकाले गुरुजनप्रणामस्यावश्यकत्वादिति भावः॥ १॥

---

(१) त्रिलोक।

जहीन्द्रशत्रुं समरेऽमरेश-
पदं स्थिरत्वं नय वीर वत्स ।
इत्याशिषा तं प्रणमन्तमीशः
मूर्धन्युपाघ्राय मुदाभ्यनन्दत् ॥ २ ॥

प्रह्वीभवन्नम्रतरेण मूर्ध्ना
नमश्चकाराङ्घ्रि(२)युगं स्वमातुः ।
तस्याः प्रमोदाश्रुपयः(३)प्रवृष्टिः
तस्याभवद्वीरवराभिषेकः ॥ ३ ॥

जहीति ॥ ईशः हरः । कर्ता । हे वत्स पुत्र, हे वीर पराक्रान्त पुत्र। त्वमिति कर्तृपदमध्याहार्यम्। समरे संग्रामे इन्द्रस्य शत्रुं तारकासुरम् । कर्मभूतम्। जहि विनाशय मारयेत्यर्थः। तथा अमराणां ईशस्य देवराजस्य सम्बन्धि पदम् इन्द्रत्वमित्यर्थः। स्थिरत्वं स्थायिभावम् अनश्वरत्वमित्यर्थः। नय प्रापय। इति एवम् आशिषा आशीर्वादेन प्रणमन्तं नमस्कुर्वन्तं तं पुत्रं मूर्धनि मस्तकावच्छेदे उपाघ्राय। वात्सल्यवशेन गुरुजनमस्तकाघ्राणस्य चिरसिद्धत्वादिति भावः। मुदा आनन्देन अभ्यनन्दत् अभिनन्दितवान् अस्तौषीदित्यर्थः ॥२॥

प्रह्वीति ॥ स कुमारः। कर्तृपदमूह्यम्। अप्रह्वः प्रह्वः भवन् प्रह्वीभवन् नतदेहः सन्नित्यर्थः। प्रह्वशब्दादभूततद्भावे च्विप्रत्ययः। प्रणामकाले नतशरीरस्यावश्यकत्वादिति भावः। नम्रतरेण अतिनम्रेण मूर्ध्ना मस्तकेन। करणेन। स्वस्य मातुः जनन्याः पार्वत्याः सम्बन्धि अङ्घ्रियुगं पादयुग्मम्। कर्मभूतम्। नमश्चकार

(२) युगं सः, युगाय। (३) प्रपूरः, प्रवर्षः।

तमङ्कमारोप्य सुता (४)हिमाद्रे:
(५)आश्लिष्य गाढं सुतवत्सला सा।
शिरस्युपाघ्राय जगाद यत्त्वं
जित्वा (६)कृतार्थीकुरु वीरसूं माम् ॥४॥
उद्दाम(७)दैत्येशविपत्तिहेतु:
श्रद्धालुचेता: (८)समरोत्सवस्य।

प्रणनाम। तस्या: गौर्या: सम्बन्धिनी प्रमोदस्य आह्लादस्य यानि अश्रुपयांसि आह्लादजनितबाष्पजलानीत्यर्थ:। तेषां प्रवृष्टि: वर्षणम्। कर्त्री। तस्य कुमारस्य सम्बन्धी वीरवराभिषेक: वीरवरस्य पराक्रान्तश्रेष्ठस्य अभिषेकं अभिषेकवत् अभवत् जाता। कुमारो मातुरानन्दजनिताश्रुजलेनार्द्रशरीरो बभूवेत्यर्थ: ॥ ३ ॥

तमिति। सुतवत्सला पुत्रस्नेहवती सा हिमाद्रे: हिमालयस्य सम्बन्धिनी सुता कन्या पार्वती। कर्त्री। तं पुत्रं अङ्कं क्रोड़देशं आरोप्य स्थापयित्वा तथा गाढ़ं निविड़ं यथा तथा आश्लिष्य आलिङ्ग्य, शिरसि मस्तके उपाघ्राय च इति जगाद उक्तवती। किं तदित्याह—हे पुत्र। सम्बोधनपदमिदमाहर्तव्यम्। यत्त्वं तारकासुरं जित्वा हत्वेत्यर्थ:। वीरसूं वीरप्रसविनीं मां अकृतार्थां कृतार्थां अन्वर्थाभिधेयां कुरु कृतार्थीकुरु। अभूततद्भावार्थे च्विप्रत्यय:। आशीर्वादार्थे लोट् ॥ ४ ॥

उद्दामिति। तत: पित्रो: सकाशादाशीर्वादप्राप्त्यनन्तरं उद्दाम: उद्धत: य: दैत्येन्द्र: तारकासुर: तस्य सम्बन्धिनी या विपत्ति: विनाश: तस्या: हेतु: कारणम्। तारकासुरहन्तेत्यर्थ:। तथा समरोत्सवस्य युद्धरूपोत्सवस्य कर्मभूतस्य श्रद्धालु:

(४) महाद्रे:। (५) आश्लिष्टगात्रम्। (६) कृतार्थां कुरु।
(७) दैत्य। (८) समरोद्धुर: स:।

आपृच्छ्य भक्त्या गिरिजागिरीशौ
ततः प्रतस्थेऽ(८)भि दिवं कुमारः ॥ ५ ॥

देवं महेशं गिरिजां च देवीं
ततः प्रणम्य त्रिदिवौकसोऽपि ।
प्रदक्षिणीकृत्य (१)च नाकनाथ-
पूर्वाः समस्तास्तम(२)थानुजग्मुः ॥ ६ ॥

अथ व्रजद्भिस्त्रिदशै(३)रशेषैः
स्फुरत्प्रभा(४)भासुरमण्डलैस्तैः ।
(५)नभो बभासे (६)परितो विकीर्णं
दिवापि नक्षत्रगणैरिवोग्रैः ॥ ७ ॥

श्रद्धाशीलं प्रियमिति यावत् चेतः चित्तं यस्य तथोक्तः युद्धप्रिय इत्यर्थः। कुमारः कार्तिकेयः। कर्ता। गिरिजा पार्वती च गिरीशः हरश्च तौ तथोक्तौ। कर्मभूतौ। भक्त्या श्रद्धापूर्वकं आपृच्छ्य सम्भाष्य तयोरनुज्ञां लब्ध्वेत्यर्थः। दिवं अभि स्वर्गं प्रति प्रतस्थे जगाम ॥ ५ ॥

देवमिति ॥ ततः कुमारगमनानन्तरं नाकनाथपूर्वाः देवराजप्रभृतयः दिवौकसोऽपि देवा अपि। कर्तारः। देवं महेश्वरं तथा गिरिजां देवीञ्च प्रणम्य प्रदक्षिणीकृत्य च, अथ अनन्तरं तं कार्तिकेयं अनुजग्मुः अनुगतवन्तः अनुसरणं कृतवन्त इत्यर्थः ॥ ६ ॥

अथेति ॥ अथ देवानां पार्वतीपरमेश्वरप्रणामप्रदक्षिणकरणानन्तरं व्रजद्भिः धावद्भिः। अतएव स्फुरन्त्याः प्रसरन्त्या

(८) त्रिदिवम्। (१) सुरेशमुख्याः सुराः। (२) अभिजग्मुः;
(३) समग्रैः। (४) मण्डलभास्वरैः। (५) ततः।
(६) हरितोऽवकाशः।

ररराज तेषां व्रजतां सुराणां
मध्ये कुमारो(७)ऽधिककान्तिकान्तः।
नक्षत्रताराग्रहमण्डलाना-
मिव त्रियामा(८)रमणो नभो(९)ऽन्ते ॥८॥

गिरीशगौरीतनयेन सार्धं
पुलोमपुत्रीदयितादयस्ते।
उत्तीर्य नक्षत्रपथं (१)मुहूर्तात्
प्रपेदिरे लोक(२)मथात्मनीनम् ॥ ९ ॥

प्रभायाः कान्त्याः सम्बन्धि भासुरम् उज्ज्वलं मण्डलं समूहः येषां तथोक्तैः, नास्ति शेषः येषां तैः सकलैरित्यर्थः। त्रिदशैः सुरैः दिवापि दिनेऽपि उग्रैः उज्ज्वलैः नक्षत्राणां गणैः संघैरिव परितः चतुर्दिक्षु विकीर्णं व्याप्तं नभः आकाशमण्डलं बभासे शुशुभे। उपमेयम् ॥ ७ ॥

रराजेति ॥ व्रजतां धावतां तेषां पूर्वोक्तानां सुराणां देवानां नभोमण्डलगामिनामिति भावः। मध्ये अधिकाः प्रभूताः याः कान्तयः प्रभाः ताभिः कान्तः अत्युज्ज्वलः। एतेनास्य चन्द्रसाम्यम्। कुमारः कार्त्तिकेयः। कर्त्ता। नभोगामीत्यर्थः। नभोऽन्ते आकाशाभ्यन्तरे नक्षत्राणाम् अश्विन्यादीनां ताराणां सप्तविंशतिभिन्नानां ग्रहाणां सूर्यादिनवग्रहाणां यानि मण्डलानि तेषां मध्ये त्रियामायाः रजन्याः रमणः नाथः चन्द्र इव रराज शुशुभे॥ पूर्णोपमेयम् ॥ ८ ॥

गिरीशेति ॥ अथ अनन्तरं पुलोमपुत्र्याः शच्याः दयितः प्रियः इन्द्रः आदिः प्रथमः येषां तथोक्ताः ते पूर्वोक्ताः देवाः सुराः। कर्तारः। गिरीशस्य गौर्याश्च तनयेन कार्त्तिकेयेन

---

(७) अधिककान्तकान्तिः। (८) दयितः। (९) अन्तः।
(१) मुहूर्तम्। (२) अथो मुक्तोलाम्।

(३)ते स्वर्गलोकं चिरकालदृष्टं
महासुरत्रासवशंवदत्वात् ।
सद्यः प्रवेष्टुं न विषेहिरे (४)तत्
क्षणं व्यलम्बन्त सुराः (५)समग्राः ॥ १० ॥
(६)पुरो भव त्वं न पुरो भवामि
(७)नाहं पुरोगोऽस्मि (८)पुरःसरस्त्वम् ।
इत्थं (९)सुरास्तत्क्षणमेव भीताः
स्वर्गं प्रवेष्टुं कलहं वितेनुः ॥ ११ ॥

साकं सह । साकंशब्दयोगे तृतीया । एतेन कुमारस्य बलाधिक्यं द्योत्यते । मुहूर्तात् क्षणमध्ये नक्षत्रपथं नभोमार्गम् उत्तीर्य अतिक्रम्य आत्मने हितम् आत्मनीनं स्वकीयं लोकं स्वर्गलोकं प्रपेदिरे प्राप्तवन्तः ॥ ९ ॥

ते इति । ते समग्राः सुराः देवाः । कर्तृभूताः । महासुरात् तारकात् जातस्येत्यर्थः । त्रासस्य भयस्य यः वशंवदः अधीनः तस्य भावः तस्मात् हेतोः चिरकालात् दीर्घकालात् परं दृष्टम् अवलोकितम् । अपरिज्ञातदौरात्म्यादिति भावः । स्वर्गलोकं कर्मभूतं सद्यः दर्शनक्षणमेव प्रवेष्टुं स्वगृहाभ्यन्तरं गन्तुमित्यर्थः । न विषेहिरे न समर्था बभूवुरित्यर्थः । तत् तस्मात् उक्तकारणात् हेतोः क्षणं क्षणकालं व्यलम्बन्त विलम्बं कृतवन्तः । अत्र काव्यलिङ्गमलङ्कारः ॥ १० ॥

पुर इति । सुराः देवाः । कर्तारः । तत्क्षणं स्वर्गप्रवेशसमयमेव भीताः शङ्काकुलाः सन्तः । त्वं पुरः संमुखे भव । अहं न पुरः संमुखे भवामि । अहं पुरः अग्रे गच्छतीति

---

(३) तम् । (४) तम् । (५) समस्ताः । (६) पुरोऽत त्वम् ।
(७) न वः । (८) पुरः सर त्वम् । (९) इत्था तेन कृते स्ववध्ये स्वर्गे, इत्था तेन कृता मियस्ते स्वर्गे ।

(१)सुरालयालोकनकौतुकेन
मुदा (२)शुचिस्मेरविलोचनास्ते।
दधुः कुमारस्य मुखारविन्दे
दृष्टिं विषत्साध्वस(३)कातरान्ताम् ॥१२॥
सहेलहास(४)च्छुरिताननेन्दु-
स्ततः कुमारः पुरतो (५)भविष्णुः।

तथोक्त: न अस्मि न भवामि। त्वं पुर: अग्रे सरतीति पुर:सर: अग्रगामी भव। इत्यम् एवंप्रकारेण स्वर्गं प्रवेष्टुं गन्तुं कलहं विवादं परस्परमिति भाव:। वितेनु: कृतवन्त:। अग्रप्रवेशे शत्रुकृतविपदाशङ्कयेति भाव:॥ ११॥

सुरालयेति॥ ते सुरा:। कर्तार:। सुराणां देवानां य: आलय: स्वर्ग: तस्य आलोकनेन दर्शनेन यत् कौतुकम् आह्लाद: तेन। हेतौ तृतीया। शुचीनि विशुद्धानि स्मेराणि ईषद्धास्य-युक्तानि च विलोचनानि नयनानि येषां तथाभूता: सन्त: विषद्भ्य: शत्रुभ्य: जातेन साध्वसेन भयेन हेतुना कातर: विह्वल: अन्त: प्रान्तदेश: यस्या: तथोक्तां दृष्टिं नेत्रं कर्मभूतं मुदा हर्षेण युक्ते। विशेषणे तृतीया। कुमारस्य कार्तिकेयस्य मुखारविन्दे वदनपङ्कजे, कुमारमुखस्य प्रियदर्शनत्वात् कमल-साम्यमिति भाव:। दधु: धृतवन्त:। कर्तव्यतावधारणार्थमिति भाव:॥ १२॥

सहेलेति॥ तत: सुराणां कार्तिकेयमुखदर्शनानन्तरं रणे संग्रामे प्रवीर: प्रकृष्टपराक्रान्त: अतएव तारकस्य तारकासुरस्य आपातं युद्धायागमनम् अपेक्षमाण: प्रतीक्षमाण:। अतएव

---

(१) सुरत्वरा। (२) शुचिस्मेरविलोचनस्य, शुचिस्मेरवि-लोचनान्ता:। (३) कातरास्ते, कातरान्ते।
(४) छुरित, उच्छुरित। (५) निविष्ट:।

स तारकापात(६)मपेक्षमाणो

रणप्रवीरो (७)हि सुरानवोचत् ॥ १३ ॥

भीत्यालमद्य त्रिदिवौकसोऽमी

स्वर्गं भवन्तः प्रविशन्तु सद्यः ।

अत्रैव मे दृक्पथमेतु शत्रु-

र्महासुरो (८)वः खलु (९)दृष्टपूर्वः ॥ १४ ॥

(१)स्वर्लोकलक्ष्मीकचकर्षणाय

दोर्मण्डलं (२)वल्गति यस्य चण्डम् ।

पुरतः संमुखे भविष्णुः भवितुमिच्छुः स कुमारः । कर्ता । हेलया क्रीड़या सह वर्तमानः सहेलः यः हासः तेन छुरितः मिश्रितः आननमेव इन्दुः चन्द्रः यस्य तथोक्तः सन् । होति निश्चयार्थमव्ययम् । सुरान् देवान् । कर्मभूतान् । अवोचत् उक्तवान् ॥ १३ ॥

भीत्येति ॥ दिवं स्वर्गः ओकः वासस्थानं येषां तथोक्ताः तत्सम्बोधने हे दिवौकसः देवाः । भीत्या शङ्कया अलम् । युष्माभिर्भयं न कर्तव्यमित्यर्थः । अलंशब्दयोगे तृतीया । किन्तु अमी भवन्तः सद्यः शीघ्रमेव स्वर्गं प्रविशन्तु स्वर्गप्रवेशं कुर्वन्त्वित्यर्थः । स्वर्गप्रवेशे विलम्बेनालमिति भावः । वः युष्माकं दृष्टपूर्वः प्रागवलोकितः शत्रुः द्वेष्टा महान् बलवान् असुरः दैत्यः तारकः अत्रैव अस्मिन्नेव स्थाने मे मम दृशोः नेत्रयोः सम्बन्धी यः पन्था गोचरत्वम् तं एतु आगच्छतु प्राप्नोतु इति यावत् । अधुना अत्रैव मया तारको जेतव्य इति भावः । उभयत्र अर्थेषु लोट्प्रयोगः ॥ १४ ॥

स्वर्लोकेति ॥ यस्य तारकस्य सम्बन्धि दोर्मण्डलं हस्तमण्ड-

---

(६) अवेक्षमाणः । (७) चभि । (८) यः । (९) कालदष्टः ।
(१) स्वर्गैकलक्ष्मी । (२) यस्य वलातिचण्डम् ।

इहैव तच्छोणितपानकेलि-
मङ्गाय कुर्वन्तु शरा ममैते ॥ १५ ॥
शक्तिर्ममाव्याहतप्रचारा
प्रभावसारा (३)सुमहःप्रसारा।
स्वर्लोक(४)लक्ष्म्या विपदा(५)वहारेः
शिरो हरन्ती (६)दिशतान्मुदं वः ॥ १६ ॥

लम्। कच्चे। स्वर्लोकस्य स्वर्गस्य या लक्ष्मीः श्रीः तस्याः ये कचाः केशाः तेषां कर्षणाय कर्षणं कर्तुमित्यर्थः। निमित्तार्थे चतुर्थी। वलाति चलति। येन स्वर्गश्रीर्विनाशितेति भावः। तस्य तारकस्य सम्बन्धिनः शोणितस्य रक्तस्य पानमेव केलिः क्रीड़ा तां कर्मभूताम्। एते मम सम्बन्धिनः शराः। कर्तारः। इहैव अत्रैव अङ्गाय झटिति कुर्वन्तु। "द्रागझटित्यञ्जसाह्नाय" इत्यमरः। मया सर्वथैव स वध्य इति भावः॥ १५ ॥

शक्तिरिति॥ अहतः अविच्छिन्नः प्रचारः गमनं यस्याः तथोक्ता। तथा प्रभावः सामर्थ्यमेव सारः स्थिरांशः यस्याः तथाभूता। तथा सुमहसां सुष्ठु तेजसां प्रसारः स्फुरणं यस्याः तादृशी। तथा स्वर्लोकस्य स्वर्गस्य या लक्ष्मीः तस्याः विपदा विपद् ताम् अवहन्ति विनाशयन्तीति तथोक्ता। तथा अरेः शत्रोः तारकासुरस्य सम्बन्धि शिरः मस्तकं हरन्ती नाशयन्ती एषी इश्यमाना मम सम्बन्धिनी शक्तिः शक्तिनामधेयमायुधम्। कर्त्री। वः युष्माकं मुदं हर्षम्। कर्मभूतम्। दिशतात् ददातु। आशिषि लोट्॥ १६॥

---

(३) सुमहाप्रसारा। (४) लक्ष्मी।
(५) वहारिशिरः, सहारेः शिरः। (६) दिशतां सुखं वः।

इत्यन्धकारातिसुतस्य दैत्य-
वधाय (७)युद्धोत्सुकमानसस्य ।
सर्वं (८)शुचिस्मेरमुखारविन्दं
गीर्वाणवृन्दं (९)वचसाऽऽननन्द ॥ १

(१)सान्द्रप्रमोदात् पुलकोपगूढ़:
सर्वाङ्ग(२)संफुल्लसहस्रनेत्र: ।
तस्योत्तरीयेण निजाम्बरेण
(३)निरुञ्छनं चारु चकार शक्र: ॥ १८ ॥

इतीति ॥ सर्वं गीर्वाणानां देवानां वृन्दं समूहः । कर्तृ । दैत्यानां तारकादीनां कर्मभूतानां यः बधः हननं तस्मै दैत्यबधं कर्तुमित्यर्थः । निमित्तार्थे चतुर्थी । युद्धे संग्रामे उत्सुकम् उत्कण्ठितं मानसं चित्तं यस्य तथोक्तस्य अन्धकारेः शिवस्य सम्बन्धिनः सुतस्य पुत्रस्य कार्त्तिकेयस्य इति उक्तप्रकारेण वचसा वाक्येन शुचि निर्मलं स्मेरम् ईषद्धास्यसहितं मुखारविन्दं वदनकमलं यस्य तथोक्तं सत् आननन्द जहर्ष । कुमारकृततारकबधनिश्चयेनेति भावः ॥ १७ ॥

सान्द्रेति ॥ सान्द्रः निविड़ः यः प्रमोदः हर्षः तस्मात् हेतोः पुलकैः रोमाञ्चैः उपगूढ़ः आश्लिष्टः आवृतदेह इत्यर्थः । तथा सर्वाङ्गेषु सर्वावयवेषु सफुल्लानि विकसितानि सहस्रनेत्राणि सहस्रसंख्यकनयनानि यस्य तथाभूतः । अस्य सहस्राक्षत्वादिति भावः । शक्रः इन्द्रः । कर्ता । तस्य कुमारस्य सम्बन्धिना उत्तरीयेण संव्यानेन । "संव्यानमुत्तरीयम्" इत्यमरः । तथा निजं स्वीयं यत् अम्बरं वसनं तेन निरुञ्छनं वस्त्रविनिमयं

(७) बद्धोत्सवमानसस्य । (८) सुविस्मेर । (९) वचसा ननन्द ।
(१) सान्द्रप्रमोदः । (२) संलग्न ।
(३) निर्लञ्छनम्, निरुञ्छणम्, निलुञ्छनम् ।

घनप्रमोदाश्रु(४)तरङ्गिताक्षैः
मुखैश्चतुर्भिः प्रचुर(५)प्रसादैः ।
(६)अथो अचुम्बद्विधिरादिवृद्धः
षडाननं षट्सु (७)शिरःसु (८)चित्रम् ॥१९॥

(९)तं साधु साध्वित्यभितः प्रशस्य
मुदा कुमारं त्रिपुरासुरारेः ।
आनन्दयन् वीर जयेति वाचा
गन्धर्वविद्याधरसिद्धसंघाः ॥ २० ॥

कर्मभूतं चारु मनोहरं यथा तथा चकार कृतवान् । परस्परवसनपरिवर्तनस्यानन्दवर्धकत्वादिति भावः ॥ १८ ॥

घनेति ॥ अथ कुमारेन्द्रवसनपरिवर्तनानन्तरम् आदिवृद्धः वृद्धाग्रगण्यः विधिः ब्रह्मा । कर्ता । प्रचुरः अधिकतरः प्रसादः आह्लादः येषां तथोक्तैः । तथा घनः निविडः यः प्रमोदः प्रकृष्टहर्षः तेन हेतुना यत् अश्रु नयनजलं तेन तरङ्गितानि तरङ्गयुक्तानि आप्लुतानीत्यर्थः । अक्षीणि नयनानि येषां तथोक्तैः चतुर्भिः चतुःसंख्यकैः मुखैः । करणैः । षडाननं कुमारं कर्मभूतं षट्सु शिरःसु मुखेषु । अत्र शिरःशब्देन मुखं लक्ष्यते । चित्रं मनोहरं यथा तथा अचुम्बत् चुचुम्बे स्पृष्टवानित्यर्थः ॥ १९ ॥

तमिति ॥ गन्धर्वाणां देवगायकानां विद्याधराणां देवयोनिविशेषाणां सिद्धानां देवभेदानाञ्च संघाः समूहाः । कर्तृभूताः । त्रिपुरासुरस्य सम्बन्धिनः अरेः शत्रोः हरस्य सम्बन्धिनं कुमारं तनयम् । कर्मभूतम् । मुदा हर्षेण हेतुना साधु साधु इति । उक्त्वेति शेषः । अभितः चतुर्दिक्षु प्रशस्य प्रस्तुत्य हे वीर जय प्रकृष्टोत्कर्षं लभ । त्वमिति कर्तृपदमूह्यम् । इति एवंप्र-

(४) परिप्लुताक्षैः । (५) प्रमोदैः । (६) समाचुचुम्बे ।
(७) मुखेषु । (८) हर्षात् । (९) सुसाधु ।

दिव्यर्षयः (१)प्रभुविजृम्भमाणं
(२)तमभ्यनन्दन् किल नारदाद्याः ।
(३)निरुञ्छनं चक्रुरथोत्तरीयैः
चामीकरीयै(४)र्निजवल्कलैश्च ॥ २१ ॥

ततः सुराः शक्तिधरस्य तस्या-
वष्टम्भतः साध्वस(५)मुत्सृजन्तः ।
उत्सेहिरे स्वर्ग(६)मनन्तशक्ते-
र्गन्तुं वनं यूथपतेरिवेभाः ॥ २२ ॥

कारयन् वाचा वाक्येन आनन्दयन् आनन्दितं चक्रुः ॥ २० ॥

दिव्यर्षय इति ॥ नारदः आद्यः प्रथमः येषां तथोक्तानां नारदप्रभृतीनां दिविभवाः दिव्याः स्वर्गीयाः ये ऋषयः मुनयः । कर्त्तारः । प्रभुं तत्कालसुरं विजृम्भमाणं जेष्यन्तं तं कुमारम् । कर्मभूतम् । अभ्यनन्दन् आनन्दितं चक्रुः किल । अथ अभिनन्दनानन्तरं चामीकरीयैः सुवर्णखचितैः । कनकखचितत्वादिति भावः । उत्तरीयैः वसनैः । तथा निजवल्कलैः स्वकीयवल्कलैश्च निरुञ्छनं परस्परं वसनपरिवर्तनं चक्रुः कृतवन्तः । परस्पर-वसनपरिवर्तनं हर्षप्रकाशकर्ममिति भावः । २१ ।

तत इति ॥ ततः ऋषीणामभिनन्दनवल्कलपरिवर्तनानन्तरं शक्तिं शक्तिसंज्ञकमायुधं धरतीति तथोक्तः तस्य कुमारस्य अवष्टम्भतः पार्श्वस्थैव साहाय्येनेत्यर्थः । हेतुना साध्वसं भयम् । कर्मभूतम् । उत्सृजन्तः परित्यजन्तः सुराः देवाः । अनन्ता अपारा शक्तिः सामर्थ्यं यस्य तथोक्तस्य यूथपतेः करीन्द्रस्य अवष्टम्भतः इभाः करिणः वनं काननमिव स्वर्गं नाकं कर्मभूतं गन्तुं

(१) तस्य वचो वरार्थम् । (२) समभ्यनन्दन्, तदभ्यनन्दन् ।
(३) निर्मञ्छनम्, निरुञ्छनम् । (४) नववल्कलैः ।
(५) उत्सृजन्तः । (६) अनन्तशक्तेः ।

(७)अथाभिपृष्ठं गिरिजासुतस्य
पुरन्दराराति(८)वधं चिकीर्षोः।
सुरा निरीयुस्त्रिपुरं दिधक्षो-
रिव स्मरारेः प्रमथाः समन्तात् ॥ २३ ॥

(९)सुराङ्गणानां जलकेलिभाजां
प्रक्षालितैः सन्ततमङ्गरागैः।
प्रपेदिरे पिञ्जरवारिपूरां
स्वर्गौकसः स्वर्गधुनीं पुरस्तात् ॥ २४ ॥

प्रवेष्टुम् उत्सेहिरे उत्साहं प्रापुः। कुमारं सेनापतिं प्राप्य देवा निर्भया बभूवुरित्यर्थः ॥ २२ ॥

अथेति ॥ अथ देवानामुत्साहप्राप्त्यनन्तरं सुराः देवाः। कर्त्तारः। पुरन्दरस्य महेन्द्रस्य सम्बन्धी यः अरातिः शत्रुः तारकः तस्य कर्मभूतस्य वधं विनाशं चिकीर्षोः कर्तुमिच्छोः। कृधातोः सन्नन्तादुप्रत्ययः। गिरिजायाः पार्वत्याः सम्बन्धिनः सुतस्य पुत्रस्य अभिपृष्ठं पश्चाद्भागे। त्रिपुरं त्रिपुरासुरं कर्मभूतं दिधक्षोः दग्धुमिच्छोः। सन्नन्तात् धाधातोरुप्रत्ययः। स्मरारेः कामशत्रोः महादेवस्य सम्बन्धि अभिपृष्ठं प्रमथाः गणा इव। समन्तात् चतुर्दिक्षु निरीयुः निर्गतवन्तः। सुराः संग्रामप्रवृत्तकुमारस्यानुसरणं चक्रुरित्यर्थः ॥ २३ ॥

सुराङ्गणानामिति ॥ स्वर्गौकसः स्वर्गवासिनः देवाः। कर्त्तारः। पुरस्तात् संमुखे प्रथमत इत्यर्थः। जलस्य केलिं क्रीड़ां भजन्ते कुर्वन्तीति तथोक्तानां सुराङ्गणानां स्वर्गवेश्यानां सम्बन्धिभिः सन्ततम् अनवरतं यथा तथा प्रक्षालितैः धौतैः

---

(७) अथाभिपृष्ठे। (८) जयम्। (९) सुराङ्गनानाम्।

दिग्दन्तिनां वारि(१)विहारभाजां
कराहतै(२)र्भीमतरैस्तरङ्गैः।
आप्लावयन्तीं मुहुरालवाल-
(३)श्रेणिं तरूणां (४)निजतीरजानाम् ॥२५॥
(५)लीलारसाभिः सुरकन्यकाभिः
(६)हिरण्मयीभिः सिकताभिरुच्चैः।

अङ्गरागैः कुङ्कुमप्रभृतिभिः। करणैः। पिञ्जरं पीतवर्णं वारीणां जलानां पुरं प्रवाहः यस्याः तथाभूतां स्वर्गधुनीं स्वर्गगङ्गां मन्दाकिनीमित्यर्थः। कर्मभूताम्। प्रपेदिरे प्राप्तवन्तः॥ २४॥

अनन्तरं दिग्दन्तिप्रभृतिभिः चतुर्भिः श्लोकैः स्वर्गधुनीं वर्णयति—

दिग्दन्तीति॥ स्वर्गधुनीं किंभूताम्। वारिणि जले विहारं क्रीडां भजन्ते कुर्वन्तीति तथोक्तानां दिशां पूर्वादीनां ये दन्तिनः गजाः ऐरावतप्रभृतयः तेषां सम्बन्धिभिः करैः शुण्डैः कर्तृभिः। आहतैः ताडितैः प्रक्षिप्तैरित्यर्थः। अतएव भीमतरैः अत्यन्तभयोत्पादकैः तरङ्गैः प्रवाहैः। करणैः। निजतीरे स्वकीयतटे जायन्ते उत्पद्यन्ते ये तथोक्तानां तरूणां पादपानां सम्बन्धिनीम् आलवालस्य मूलस्थजलाधारवेष्टनस्य श्रेणिं पङ्क्तिम्। कर्मभूताम्। मुहुः वारंवारं यथा तथा आप्लावयन्तीं सेचयन्तीं पूरयन्तीमित्यर्थः॥ २५॥

लीलेति॥ पुनः कीदृशीम्। लीलारसाभिः क्रीडानुरागाभिः क्रीडन्तीभिरित्यर्थः। सुरकन्यकाभिः देवपुत्रीभिः।

---

(१) विहारलीलाम्। (२) भीमवराहयूथैः। आशंसयन् सादरमद्रिपुत्रीमहेशपुत्राय पुरः पुरोगाः। स कार्तिकेयः पुरतः परीतां वियच्चरैर्लोलतरैस्तरङ्गैः। (३) श्रेणीः, श्रेणीम्।

(४) गुरुतीरजानाम्। (५) लीलालसाभिः।

(६) हिरण्मयसाभिरुताभिः, हिरण्जाभिः सिकताभिः।

माणिक्यगर्भाभि(७)रुपाहिताभिः
प्रकीर्णतीरां वरवेदिकाभिः ॥ २६ ॥
सौरभ्यलुब्धभ्रमरो(८)पगीतै-
र्हिरण्यहंसावलिकेलिलोलैः ।
चामीकरीयैः कमलैर्विनिद्रैः
च्युतैः परागैः (६)परिपिङ्गतोयाम् ॥२७॥
कुतूहलाद्द्रष्टुमुपागताभिः
(१)तीरस्थिताभिः (२)सुरसुन्दरीभिः ।

तथा हिरण्मयीभिः स्वर्णमयीभिः सिकताभिः वालुकाभिः । तथा माणिक्यानि गर्भेषु मध्येषु यासां तथोक्ताभिः माणिक्यमुक्ताभिरित्यर्थः । उपाहिताभिः विरचिताभिः उच्चैः महतीभिः वरवेदिकाभिः श्रेष्ठवेदिभिः प्रकीर्णानि व्याप्तानि तीराणि सैकतभूमयः यस्याः तथाभूताम् ॥ २६ ॥

सौरभ्येति ॥ पुनः कीदृशीम् । सौरभ्यलुब्धैः सौगन्ध्यलम्पटैः भ्रमरैः कर्तृभिः उपगीतैः सम्स्तूयमानैरित्यर्थः । हिरण्यहंसानां सुवर्णमरालानां याः आवल्यः श्रेणयः तासां या केलिः क्रीडा तया । हेतौ तृतीया । लोलैः चञ्चलैः चामीकरीयैः सुवर्णनिर्मितैः विनिद्रैः प्रस्फुटितैः कमलैः पद्मैः सहिताम् अतएव च्युतैः कमलपतितैः परागैः पुष्परजोभिः । करणैः । परिपिङ्गतोयां पीतजलाम् ॥ २७ ॥

कुतूहलादिति ॥ पुनः किंप्रकाराम् । कुतूहलात् कौतुकात् हेतोः द्रष्टुं प्रेक्षितुम् उपागताभिः आगताभिः । अतएव तीरस्थिताभिः तटवर्तिभिः । अतएव अभ्युर्मिराजि ऊर्मिराजौ ।

---

(७) उपोहिताभिः । (८) मदकीर्णैः । (६) परिपिञ्जतोयाम् ।
(१) तीरे स्थिताभिः । (२) सुरकन्यकाभिः

(३)अम्बुभिराजि प्रतिबिम्बिताभि-
र्मुदं दिशन्तीं व्रजतां जनानाम् ॥ २८ ॥

ननन्द (४)सद्यश्चिरकालदृष्टां
विलोक्य (५)शक्रः सुरदीर्घिकां ताम् ।
अदर्शयत्सादरमद्रिपुत्री-
महेशपुत्राय (६)ततः पुरोगः ॥ २९ ॥

स कार्तिकेयः पुरतः (७)परीतः
सुरैः समस्तैः सुरनिम्नगां ताम् ।

विभक्त्यर्थेऽव्ययीभावः । तरङ्गाभ्यन्तरे प्रतिबिम्बिताभिः सञ्जात-प्रतिबिम्बाभिः सुराणां सुन्दरीभिः देवकामिनीभिः । कारणे तृतीया । व्रजतां गच्छतां जनानां सम्बन्धिनीं मुदं हर्षं दिशन्तीं ददतीं जनयन्तीमित्यर्थः ॥ २८ ॥

ननन्देति । शक्रः महेन्द्रः । कर्ता । चिरकालात् बहु-दिवसात् अनन्तरं दृष्टाम् अवलोकितां तां पूर्वोक्तां सुर-दीर्घिकां स्वर्गगङ्गां मन्दाकिनीं कर्मभूतां विलोक्य दृष्ट्वा सद्यः दर्शनक्षणमेव ननन्द हृष्टचित्तो बभूव । बहुकालदृष्टस्याभीष्ट-वस्तुनो हर्षोत्पादकत्वादिति भावः । ततः स्वदर्शनानन्तरं पुरोगः संमुखवर्ती सन् अद्रिपुत्रीमहेशयोः पार्वतीहरयोः सम्बन्धिने पुत्राय तनयाय आदरेण सह वर्तमानं यथा तथा अदर्शयत् दर्शितवान् । तामिति कर्मपदमूह्यम् ॥ २९ ॥

स इति । कृत्तिकानां षट्संख्यकानाम् अपत्यं पुमान् कार्तिकेयः । कर्ता । समस्तैः सकलैः सुरैः देवैः कर्तृभिः परीतः परिवेष्टितः सन् समस्तदेवैः सहेत्यर्थः । पुरतः संमुखे स्थिता-

---

(३) अम्बुभिराजीः, अम्बुभिराजि । (४) शक्रः । (५) सद्यः । (६) सुरः । (७) पुरीशः ।

अपूर्वदृष्टा(८)मवलोकमानः
(९)सविस्मयः स्मेरविलोचनोऽभूत् ॥ ३० ॥

उपेत्य तां (१)तत्र किरीटकोटि-
न्यस्ताञ्जलिर्भक्तिपरः कुमारः।
गीर्वाणवृन्दैः (२)प्रणुतां प्रणुत्य
नम्रेण मूर्ध्ना (३)मुदितो ववन्दे ॥ ३१ ॥

(४)प्रवर्तितस्मेरसरोजराजिः
पुरः परीरम्भमिलन्महोर्मिः।

मिति शेषः। तां सुराणां देवानां सम्बन्धिनीं निम्नगां नदीं मन्दाकिनीम् अदृष्टपूर्वां प्रागनवलोकिताम् अवलोकमानः पश्यन् सन्। दृष्ट्वेत्यर्थः। विस्मयेन आश्चर्येण सह वर्तमानः सविस्मयः तथा स्मेरविलोचनः सोल्लासनयनः अभूत् बभूव ॥ ३० ॥

उपेत्येति। कुमारः। कर्ता। तां मन्दाकिनीं कर्मभूताम् उपेत्य तत्समीपं गत्वेत्यर्थः। तत्र मन्दाकिन्यां भक्तिपरः भक्तिप्रवणः भक्तियुक्त इत्यर्थः। अतएव किरीटानां मुकुटानां कोटिषु अग्रेषु न्यस्तः रचितः अञ्जलिः येन तथोक्तः। तथा मुदितः हृष्टचित्तः सन् नम्रेण अवनतेन मूर्ध्ना मस्तकेन। करणेन। गीर्वाणानां देवानां वृन्दैः समूहैः। कर्तृभिः। प्रणुतां प्रकर्षेण स्तुतां तां प्रणुत्य स्तुत्वा ववन्दे नमश्चकार ॥ ३१ ॥

प्रवर्तितेति। प्रवर्तिताः चालिताः स्मेराः विकासिताः सरोजानां पङ्कजानां राजयः पङ्क्तयः येन तथोक्तः। पद्मसङ्गादस्य सौगन्ध्योक्तिः। तथा परीरम्भः आश्लेषः तेन मिलन्त्यः परस्परं संयुक्तीभवन्त्यः महोर्मयः प्रबलतरङ्गाः यस्य तथोक्तः।

---

(८) दृष्ट्वा लोकमानः। (९) सविस्मय। (१) रत्नकिरीट।
(२) प्रणताम्। (३) नमितः, प्रणतः। (४) प्रपाटित।

कपोलपालिश्रमवारिहारी
भेजे गुहं (५)तं सरितः समीरः ॥ ३२ ॥
ततो (६)व्रजन्नन्दननामधेयं
लीलावनं (७)जम्भजितः पुरस्तात् ।
विभिन्नभग्नो(८)द्धृतशालसंघं
प्रेक्षाञ्चकार स्मरशत्रुसूनुः ॥ ३३ ॥
सुरद्विषोपप्लुतमेव(९)मेतत्
वनं बलस्य द्विषतो गतश्रि ।

मन्दोर्मिसम्पर्कादस्य शैत्योक्तिः। तथा कपोलपालिषु गण्डस्थलीषु जातानां श्रमवारीणां श्रमजनितस्वेदविन्दूनां हारी नाशकः। अनेन विशेषणेनास्य मान्द्योक्तिः। सरितः मन्दाकिन्याः सम्बन्धी समीरः वायुः। कर्ता। पुरः अग्रतः स्थितमिति शेषः। तं गुहं कार्तिकेयं भेजे सेवितवान्। सौगन्ध्यादित्रिविधगुणयुक्तवायुसेवनेनास्य सुखं जातमिति भावः ॥ ३२ ॥

तत इति। ततः मन्दाकिनीदर्शनानन्तरं व्रजन् गच्छन् स्मरशत्रोः हरस्य सम्बन्धी सूनुः पुत्रः। कर्ता। पुरस्तात् संमुखे स्थितमिति शेषः। नन्दनम् आनन्दजनकं नामधेयं संज्ञा यस्य तथोक्तम्। जम्भं जम्भासुरं जयति नाशयतीति जम्भजित् तस्य। जिधातोः कर्तरि क्विप्। महेन्द्रस्य सम्बन्धि लीलायाः क्रीडायाः वनम् उद्यानम्। कर्मभूतम्। विभिन्नः विघूर्णितः भग्नः शतखण्डीकृतः उद्धृतः उत्पाटितश्च शालसंघः शालवृक्षसमूहः यस्य यथाभूतं प्रेक्षाञ्चकार दृष्टवान् ॥ ३३ ॥

सुरेति ॥ स कार्तिकेयः। कर्ता। बलस्य बलासुरस्य कर्म

(५) स्वःसरितः। (६) व्रजात्। (७) वज्रभृतः।
(८) उद्धतशाखि। (९) एव।

इत्थं विचिन्त्यारुणलोचनोऽभूत्

भ्रूभङ्ग(१)दुष्प्रेक्ष्यमुखः (२)स कोपात् ॥३४॥

निर्लूनलीलोपवनामपश्यत्

(३)दुःसञ्चरीभूतविमानमार्गाम् ।

विध्वस्त(४)सौधप्रचयां (५)कुमारो

विश्वैकसाराममरावतीं सः ॥ ३५ ॥

भूतस्य द्विषतः हन्तुः महेन्द्रस्य सम्बन्धि एतत् संमुखवर्ति वनं क्रीड़ोद्यानं सुरद्विषा तारकेण एवम् उक्तप्रकारेण उपप्लुतम् उपद्रुतम् अतएव गता नष्टा श्रीः शोभा यस्य तथाभूतम् इत्थम् अनेन प्रकारेण विचिन्त्य कोपात् तारककृतोपद्रवजनित-क्रोधादित्यर्थः। इतोः अरुणे रक्तवर्णे लोचने नयने यस्य तथाभूतः। तथा भ्रूभङ्गेन भ्रुकुटीभङ्ग्या दुष्प्रेक्ष्यं प्रेक्षितुमशक्यं मुखं यस्य तथोक्तः अभूत् बभूव ॥ ३४ ॥

निर्लूनेति ॥ सः कुमारः कार्तिकेयः। कर्ता। निर्लूनं निःशेषेण कर्तितं लीलायाः क्रीड़ायाः सम्बन्धि उपवनम् उद्यानं यस्याः तथोक्ताम्। तथा अदुःसञ्चरः दुःसञ्चरः भूतः दुःसञ्चरीभूतः। अभूततद्भावे च्विप्रत्ययः। दुर्गमीभूत इत्यर्थः। तारकभयसङ्कुलत्वादिति भावः। विमानानां देवयानानां सम्बन्धी मार्गः पन्था यस्याः तथाभूताम्। तथा विध्वस्ताः विचूर्णिताः सौधानां राजभवनानां प्रचयाः संघाः यस्याः तादृशीम्। "सौधोऽस्त्री राजसदनम्" इत्यमरः। तथा विश्वेषु भुवनेषु एकसाराम् अद्वितीयोत्कर्षाम् अमरावतीं देवनगरीं अपश्यत् दृष्टवान् ॥ ३५ ॥

---

(१) दुष्प्रेक्ष्यमुखः। (२) च। (३) असञ्चरी। (४) सौध्यप्रचयाम्।
(५) प्रभ्रष्टविश्वैकसाराम्, प्रनष्टविश्वैकसाराम्, प्रनष्टा-खिलैकसाराम्।

आविर्भवद्बाल(६)दृर्वाञ्चितानां
तदीयलीलागृहदीर्घिकाणाम्।
(७)स दुर्दशां वीक्ष्य (८)विरोधिजातां
विषादवैलक्ष्यभरं बभार ॥ ४० ॥

तद्दन्तिदन्तक्षत(९)हैमभित्ति
सुतन्तुजालाकुलरत्नजालम्।

च्छिन्नानि चामीकरस्य सुवर्णस्य पङ्कजानि पद्मानि यासां तथाभूतानाम्। तथा दिशां पूर्वादीनां सम्बन्धिनः ये दन्तिनः ऐरावतप्रभृतयः गजाः तेषां यः दानद्रवः मदजलक्षरणं तेन दूषितानां कलुषीकृतानां विपक्षीकृतानामित्यर्थः। तथा हिरण्यैः सौवर्णैः राजहंसव्रजैः राजहंससमूहैः वर्जितानां रहितानाम् परिगृहीतत्वादिति भावः। तथा विदीर्णाः स्फोटिताः पाटिता इत्यर्थः। वैदूर्याणां रत्नभेदानां मण्यः शिलाः यासां तथाभूतानाम्। तथा आविर्भवद्भिः उदयमानैः जायमानैरित्यर्थः। बालदूर्वैः शष्पैः अञ्चितानां व्याप्तानां युक्तानामित्यर्थः। तस्य इन्द्रस्य इमाः तदीयाः इन्द्रसम्बन्धिन्यः याः लीलायैः क्रीडार्थं गृहदीर्घिकाः भवनवापिकाः तासां सम्बन्धिनीम्। विरोधाः विवादाः सन्त्येषां विरोधिनः अरयः तेभ्यो जाताम् उत्पन्नां दुर्दशां हीनावस्थां वीक्ष्य अवलोक्य स कुमारः। कर्ता। विषादः खेदश्च वैलक्ष्यं लज्जा च तयोः भरम् आतिशय्यं बभार। मयि विद्यमानेऽपि स्वर्गस्य दुर्दशेयमिति कुमारस्य लज्जाशोकहेतुरिति भावः। इति युग्मकम् ॥ ३९ । ४० ॥

तदिति ॥ पुरोगतेन अग्रयायिना सुरेन्द्रेण देवेन्द्रेण। कर्त्रा। स कुमारः। मुख्यकर्मभूतः। तस्य तारकासुरस्य ये

---

(६) दूर्वाहृतानाम्। (७) सुदुर्दशाम्। (८) विरोधिजा ताम्। (९) हेमभित्तिम्, गेहभित्ति।

निन्ये सुरेन्द्रेण पुरोगतेन
स वैजयन्ताभिधमात्मसौधम् ॥ ४१ ॥
निर्दिष्टवर्त्मा विबुधेश्वरेण
सुरै: समग्रैरनुगम्यमान:।
स प्राविशत् (१)तं विविधाश्मरश्मि-
च्छिन्नेन सोपानपथेन सौधम् ॥ ४२ ॥
निसर्गकल्पद्रुम(२)तोरणां तं
(३)स पारिजातप्रसव(४)स्रगाढ्यम्।

दन्तिन: गजा: तेषां सम्बन्धिभि: दन्तै: दशनै: कृता: हेम्न: सुवर्णस्य भित्तय: कुड्यानि यस्य तथोक्तम्। तथा सुतन्तूनां शोभनलूतासूत्राणां जालै: पुञ्जै: आकुलानि व्याकुलानि रत्नानां मणीनां सम्बन्धीनि जलानि गवाक्षा: यस्य तथाभूतम्। तथा वैजयन्तं अभिधा आख्या यस्य तथोक्तं आत्मन: स्वस्य सौधम्। गौणकर्मभूतम्। निन्ये प्रापित:। नीधातुर्द्विकर्मक: ४१

निर्दिष्टेति॥ स कार्तिकेय:। कर्ता। विबुधेश्वरेण देवेन्द्रेण। कर्तृभूतेन। निर्दिष्टम् इतो गन्तव्यमिति प्रदर्शितं वर्त्म मार्ग: यस्य तथोक्त:। तथा समग्रै: सकलै: सुरै: देवै:। कर्तृभि:। अनुगम्यमान: अनुसरणं क्रियमाण: सन्। सुरै: सहेत्यर्थ:। विविधा: विचित्रा: ये अश्मान: रत्नविशेषा: तेषां सम्बन्धिभि: रश्मिभि: किरणै: छिन्नेन भिन्नेन हीनेनेति यावत्। तारकेण सोपानखचितरत्नस्खलितत्वादिति भाव:। सोपानानाम् आरोहणानां य: पन्था मार्ग: तेन। "आरोहणं स्यात् सोपानम्" इत्यमर:। तं सौधं राजभवनं कर्मभूतं प्राविशत् प्रविवेश ॥४२॥

निसर्गेति॥ स कार्तिकेय:। कर्ता। निसर्गेण स्वभावत:

(१) तद्विविधात्मरश्मिच्छन्नेन, तं विविधेन रत्नाच्छन्नेन।
(२) तोरणाढ्यम्, तोरणान्तम्। (३) सुपारिजात।
(४) स्रजाढ्यम्।

दिव्यैः (५)कृतस्वस्त्ययनं मुनीन्द्रै-

रन्तः(६)प्रविष्टप्रमदं प्रपेदे ॥ ४३ ॥

पादौ महर्षेः किल कश्यपस्य

कुलादिभूतस्य सुरासुराणाम् ।

प्रदक्षिणीकृत्य कृताञ्जलिः (७)सन्

षड्भिः शिरोभिः (८)स नतैर्ववन्दे ॥४४॥

स देवमातुर्जगदेकवन्द्यौ

पादौ तथैव प्रणनाम कामम् ।

श्रमायासेनेत्यर्थः। कल्पद्रुमाः कल्पवृक्षाः एव तोरणानि बहिर्द्वाराणि यस्य तादृशम्। तथा पारिजातानां देववृक्षभेदानां सम्बन्धिनीभिः प्रसवानां पत्रपुष्पाणां स्रग्भिः मालाभिः आढ्यं सहितं रञ्जितमित्यर्थः। तथा दिवि भवैः दिव्यैः स्वर्गस्थैः मुनीन्द्रैः कश्यपप्रभृतिभिः। कर्तृभिः। कृतं विहितं स्वस्त्ययनं स्वस्तिवाक्यं मङ्गलपाठ इति यावत्। यस्मिन् तथाभूतम्। तथा अन्तः मध्ये प्रविष्टाः कुमारदर्शनार्थं गृहाभ्यन्तरं गता इत्यर्थः। प्रमदाः देवनार्यः यस्य तादृशं तं सौधम्। कर्मभूतम्। प्रपेदे प्राप्तवान् ॥ ४३ ॥

पादाविति ॥ स कार्तिकेयः। सुरासुराणां देवदैत्यानां सम्बन्धिनः कुलस्य वंशस्य आदिभूतस्य प्रथमबन्धोः तस्य कश्यपस्य महर्षेः महामुनेः सम्बन्धिनौ पादौ चरणयुगं प्रदक्षिणीकृत्य कृतः रचितः अञ्जलिः येन तथोक्तः सन् बद्धाञ्जलिपूर्वकमित्यर्थः। नतैः प्रवणतैः षड्भिः षट्संख्यकैः शिरोभिः मस्तकैः करणैः ववन्दे प्रणनाम नमश्चकारेत्यर्थः ॥४४॥

स इति ॥ स शैलस्य हिमाचलस्य सुता कन्या तस्या

---

(५) कृतस्वस्त्ययनः। (६) कुमारः, प्रविश्य।

(७) सः। (८) विनतैः।

मुनेः कलत्रस्य च तस्य भक्त्या
प्रह्वीभवन् शैलसुतातनूजः ॥ ४५ ॥
स कश्यपः सा जननी सुराणां
तमेधयामासतुराशिषा (८)द्वौ ।
(१)तया (२)यया नैकजगज्जिगीषु
र्जेता मृधे तारक(३)मुग्रवीर्यम् ॥ ४६ ॥
(४)स्वदर्शनार्थं समुपेयुषीणां
(५)सुदेवताना(६)मदितिस्थितानाम् ।

तनूजः तनयः कुमारः। देवानां सुराणां मातुः जनन्याः तस्य मुनेः कश्यपस्य कलत्रस्य सहधर्मिण्याः अदितेः सम्बन्धिनौ जगदेकवन्द्यौ जगत्केवलनमस्करणीयौ पादौ चरणौ। कर्म-भूतौ। तथैव मुनिप्रणामप्रकारेणैव भक्त्या श्रद्धया अप्रह्वः प्रह्वः नम्रः भवन् प्रह्वीभवन् अवनतः सन्। अभूततद्भावे च्विप्रत्ययः। कामं सम्यक् यथायोग्यमित्यर्थः। प्रणनाम नमस्कृतवान् ॥४५॥

स इति॥ स कश्यपः कश्यपाभिधो मुनिः सा सुराणां देवानां सम्बन्धिनी जननी माता च द्वौ। कर्तृभूतौ। यया आशिषेति शेषः। मृधे संग्रामे न एकजगतां त्रिभुवनाना-मित्यर्थः। जिगीषुं जेतुमिच्छुं जेतारमिति यावत्। उग्रं प्रबलं वीर्यं बलं यस्य तथोक्तं तारकं जेता जेष्यति। कुमार इति कर्तृपदमूह्यम्। तया आशिषा आशीर्वादेन तं कुमारम्। कर्मभूतम्। एधयामासतुः वर्धयाञ्चक्रतुः ॥ ४६ ॥

स्वेति॥ स कार्तिकेयः। कर्ता। स्वस्य आत्मनः दर्शनाय स्वदर्शनार्थं कुमारं द्रष्टुमित्यर्थः। समुपेयुषीणां समुपस्थितानां

---

(८) द्वे। (१) यया, तया। (२) अनया, यया। (३) उग्रवीर्यः। (४) तद्दर्शनार्थम्। (५) स देवतानाम्। (६) अदितिः सुतानाम्।

पादौ ववन्दे (७)पतिदेवतास्ता-
माशीर्वचोभिः (८)पुनरभ्यनन्दन् ॥४७॥
पुलोमपुत्रीं विबुधाधिभर्तु-
स्ततः (९)शचीं नाम कलत्र(१)मेषः ।
नमश्चकार स्मरशत्रुसूनु-
स्तमाशिषा सा (२)समुपाचरच्च ॥ ४८ ॥
(३)अथादितीन्द्रप्रमदाः समेताः
(४)ता (५)मातरः सप्त घनप्रमोदाः ।

प्राप्नुवतीमामित्यर्थः । अदितिं सुरजननीं श्रितानाम् अदित्यनुगतानां सु शोभनाः याः देवताः देव्यः तासां सम्बन्धिनौ पादौ चरणौ । कर्मभूतौ । ववन्दे प्रणनाम । पतयः स्वामिन एव देवताः यासां तथोक्ताः । पतिव्रता इत्यर्थः । कर्त्र्यः । पुनः तं कार्तिकेयम् । कर्मभूतम् । आशीर्वचोभिः "त्वं जयी भव" इत्यादिभिः आशीर्वादैः अभ्यनन्दन् आमन्दयाञ्चक्रुः ॥ ४७ ॥

पुलोमेति ॥ ततः तदनन्तरम् एष स्मरशत्रोः कामारे हरस्य सम्बन्धी सूनुः पुत्रः । कर्ता । विबुधानां सुराणां अधिभर्तुः अधिनायकस्य इन्द्रस्य कलत्रं पत्नीं शचीं नाम शचीनाम्नीं पुलोम्नः ऋषेः पुत्रीं कन्याम् । कर्मभूताम् नमश्चकार प्रणनाम । सा पुलोमपुत्री च आशिषा आशीर्वादैः करणेन तं कार्तिकेयं समुपाचरत् समवर्धयत् ॥ ४८ ॥

अथेति ॥ अथ अनन्तरम् आदितेः देवमातुः सम्बन्धिन

(७) विनयेन ताः । (८) गुहम् । (९) शची ।
(१) अत्र । (२) समुपाचचार ।
(३) अदितिप्राग्रमुखाः समेताः, अदितीन्द्रप्रमदासमेताः अदितीन्द्रप्रमुखाः समेताः ।
(४) ताः, तम् । (५) मातृकाः ।

उपेत्य भक्त्या (६)नमते (७)महेश-
पुत्राय तस्मै ददुराशिषः (८)प्राक् ॥४८॥
समेत्य सर्वे(९)ऽपि मुदं दधाना
महेन्द्रमुख्यास्त्रिदिवौकसो(१)ऽथ ।
आनन्दकल्लोलितमानसं (२)तं
(३)समभ्यषिञ्चन् पृतनाधिपत्ये ॥ ५० ॥
सकलविबुधलोकः स्वस्तनिःशेषशोकः
कृतरिपुविजयाशः प्राप्तयुद्धावकाशः ।

इन्द्रस्य भर्तुः काश्यपस्य सम्बन्धिन्यः प्रमदाः दितिप्रभृतयोऽपराः पत्न्य इत्यर्थः । ताः प्रसिद्धाः ब्राह्म्योप्रभृतयः सप्तमातरः । कर्त्र्यः । घनः निविड़ः प्रमोदः हर्षः यासां तथोक्ताः । तथा समेताः मिलिताः सत्यः उपेत्य आगत्य भक्त्या श्रद्धया भक्तिपूर्वकमित्यर्थः । नमते प्रणामं कृतवते तस्मै महेशस्य हरस्य सम्बन्धिने पुत्राय कार्त्तिकाय प्राक् प्रथमम् आशिषः आशीर्वादान् ददुः दत्तवत्यः ॥ ४८ ॥

समेत्येति ॥ अथः अनन्तरं मुदम् आह्लादं दधानाः धारयन्तः सर्वे महेन्द्रमुख्याः देवेन्द्रप्रभृतयः त्रिदिवौकसः स्वर्गवासिनः सुराः अपि । कर्त्तारः । आनन्देन हर्षेण कल्लोलितं जाततरङ्गं मानसं चित्तं यस्य तथोक्तं तं कार्त्तिकेयं पृतनानां सेनानां आधिपत्ये आध्यक्षत्वे समभ्यषिञ्चन् अभिषिक्तं कृतवन्तः ॥ ५० ॥

सकलेति ॥ अनन्तम् असीमं वीर्यं शक्तिः यस्य तथोक्तेन तेन हरस्य सम्बन्धिना सुतेन पुत्रेण कार्त्तिकेयेन । कर्त्रा । अखिलाः समस्ताः ये विबुधाः देवाः तेषां सम्बन्धिनीनां

---

(६) नमति । (७) स्म शर्वपुत्राय । (८) ताः ।
(९) मुदमादधानाः । (१) अत्र । (२) तं । (३) तमभ्यषिञ्चन् ।

अजनि हरसुतेनाग्र्यवीर्येण तेना-
खिलविबुधचमूनां प्राप्य लक्ष्मीमनूनाम् ॥५१॥

---

## चतुर्दशः सर्गः ।

रणोत्सुकेनान्धकशत्रुसूनुना
(१)समं प्रयुक्तैस्त्रिदशै(२)र्जिगीषुणा ।

चमूनां सेनानां सम्बन्धिनीं न नूना अनूना अहीना तां संपूर्णामित्यर्थः । लक्ष्मीं श्रियं प्राप्य आसाद्य सेनापतिर्भूत्वा स्थितेनेति शेषः । सकलानां समस्तानां विबुधानां सुराणां लोकः समूहः । कर्मभूतः । कृता प्राप्ता रिपोः तारकासुरस्य सम्बन्धिनी विजयस्य पराजयस्य आशा आकाङ्क्षा येन तथाभूतः । तथा प्राप्तः लब्धः युद्धाय युद्धार्थम् अवकाशः अवसरः समय इत्यर्थः । येन तथाविधः । अतएव ध्वस्तः विनष्टः निःशेषः समग्रः शोकः दुःखं तारकोपद्रवजनित इति भावः । यस्य तथाभूतः अजनि अकारि । देवाः कुमारं सेनापतिं प्राप्य सर्वथा शत्रुजये आश्वस्ता बभूवुरिति भावः ॥ ५१ ॥

इति श्रीब्रजमोहनकृतया मोहिनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
कुमारसैनापत्याभिषेको नाम त्रयोदशः सर्गः ।

---

रणोत्सुकेनेति ॥ रणे युद्धे विषये यः उत्सुकः व्यग्रः रणोत्कण्ठितचित्त इत्यर्थः । तेन तथा जिगीषुणा जेतुमिच्छुना जयाकाङ्क्षिणेति यावत् । अन्धकस्य अन्धकाभिधेयस्य दैत्यस्य

---

(१) अथ समम् । (२) जयेप्सुना ।

महासुरं (३)तारकसंज्ञकं द्विषं
प्रसह्य हन्तुं समनह्यत द्रुतम् ॥ १ ॥
स दुर्निवारं मनसोऽतिवेगिनं
जयश्रियः (४)सन्नयनं सुदुःसहम् ।
विजित्वरं नाम (५)तदा महारथं
धनुर्धरः शक्तिधरो(६)ऽध्यरोहयत् ॥ २ ॥

: शत्रुः अरिः विनाशकत्वादिति भावः। तस्य महादेवस्य
: सूनुः तनयः तेन कार्तिकेयेन। कर्त्रा। प्रयुक्तैः नियुक्तैः
ादशैः सुरैः देवराजप्रभृतिभिः समं सह तारकः
ज्ञा नाम यस्य तथोक्तं तारकाभिधेयं महासुरं पराक्रान्त-
रं द्विषं शत्रुं प्रसह्य बलेन हन्तुं मारयितुं द्रुतं सत्वरं
था तथा समनह्यत उद्यतम्। भावे लङ्प्रयोगः। वृत्तमत्र
र्गे वंशस्थविलम् ॥ १ ॥
स इति ॥ तदा तस्मिन् काले स कार्तिकेयः। कर्तृभूतः।
: शक्तिर्नाम अस्त्रभेदः तत् धरतीति तथोक्तः सन् शक्तिधारी
त्यर्थः। दुर्निवारं प्रबलं मनसः चित्तादपि अतिवेगो
अतेऽस्य अतिवेगिनम् अतिवेगवन्तं तथा जयस्य श्रीः
श्रीः तस्याः जयश्रियः। कर्मभूतायाः। सन्नयनं सङ्गमनं
सम्पादकमित्यर्थः। तथा सुदुःसहं सुदुःखेनापि सोढु-
क्यम्। अपराजितत्वादिति भावः। तथा विजित्वरं
पेण जयशीलं नाम महारथं महास्यन्दनम्। कर्मभूतम्।
ध्यरोहयत् आरूढः ॥ २ ॥

---

(३) तारकसंज्ञितं द्विषम्, तारकमूर्जितद्विषम्।
(४) सङ्गमनम्, संयमनम्। (५) ततः। (६) अध्यरोहत।

सुरालयश्रीविपदां निवारणं
सुरारि(७)सम्पत्परिताप(८)कारणम् ।
केनापि दध्रेऽस्य (९)विरोधिदारणं
सुचारु चामीकरघर्मवारणम् ॥ ३ ॥
(१)शरच्छरच्चन्द्रमरीचि(२)पाण्डुरैः
(३)स वीज्यमानो वरचारुचामरैः ।
पुरःसरैः किन्नरसिद्धचारणैः
(४)रणोत्सुकस्तूयत वाग्भि(५)रुल्बणैः ॥४॥

सुरेति ॥ सुराणां देवानां यः आलयः स्वर्गः तस्य सम्ब न्धिनी या श्रीः लक्ष्मीः तस्याः विपदाम् आपदाम् अरिकृता नामिति शेषः। निवारणं नाशकम्। तथा सुराणां देवानां य अरिः शत्रुः तारकासुरः तस्य सम्बन्धिन्याः सम्पदः श्रियः परितापस्य सन्तापस्य विनाशस्येति भावः। कारणम्। अतएव विरोधोऽस्ति येषां ते विरोधिनः शत्रवः तान् दारयतीति दारणं विनाशनं सु अतिशयेन चारु मनोहरं चामीकरस्य स्वर्णस्य सम्बन्धी यः घर्मः आतपः तं वारयतीति घर्मवार छत्रम्। कर्मभूतम्। केनापि। सुरेणेति पदमूह्यम् कर्त्रा। अस्य कार्तिकेयस्य। मूर्ध्नीति पदमध्याहार्यम्। द धृतम् ॥ ३ ॥

शरदिति ॥ उल्बणैः उच्चध्वनिभिरित्यर्थः। पुरः अग्रे सरन्ति गच्छन्तीति तथोक्तैः किन्नराश्च सिद्धाश्च चारणाश्च तैः देवयोनि भेदैः। कर्तृभिः। शरदि चरतः उद्यतः चन्द्रस्य सम्बन्धि ये मरीचयः किरणाः तद्वत् पाण्डुरैः शुभ्रैः वरचारुचाम

(७) संसत्। (८) वारणम्। (९)विरामदारणम्
(१) शरच्चलत्। (२) रोचिभिः। (३) सवीज्यमानः
(४) रणोत्सुकः, स वसमुखः। (५) उल्बणैः।

प्रयाणकालोचितचारुवेशभृद्
वज्रं वहन् पर्वतपक्षदारणम्।
(७)ऐरावतं स्फाटिकशैलसोदरं
ततोऽधिरुह्य द्युपतिस्तमन्वगात्॥ ५॥

तमन्वगच्छद्गिरिशृङ्गसोदरं
(८)मदोद्धतं मेषमधिष्ठितः शिखी।
विरोधिविद्वेषरुषाधिकं ज्वलन्
(९)महोमहीयस्तरमायुधं दधत्॥ ६॥

श्रेष्ठमनोहरचामरैः। करणैः। वीज्यमानः। तथा रणेच्छुः युद्धार्थी स कार्तिकेयः। कर्मभूतः। वाग्भिः प्रस्तूयत स्तुतः॥४॥

प्रयाणेति॥ ततः अनन्तरं प्रयाणस्य संग्रामयात्रायाः यः कालः समयः तत्र उचितः उपयुक्तः यः चारुः सुन्दरः वेशः नेपथ्यं तं बिभर्ति धारयतीति तथाभूतः। भृधातोः क्विप्प्रत्ययः। तथा पर्वतानाम् अचलानां सम्बन्धिनां पक्षाणां कर्मभूतानां दारणं छिदं वज्रं वहन् धारयन् धृतवज्रास्त्र इत्यर्थः। द्युपतिः दिवः स्वर्गस्य पतिः इन्द्रः। कर्ता। स्फाटिकस्य स्फटिकमयस्य शैलस्य पर्वतस्य कैलासस्य सोदरं सहोदरं समानमित्यर्थः। ऐरावतम्। कर्मभूतम्। अधिरुह्य ऐरावतारोहणं कृत्वेत्यर्थः। तं कार्तिकेयम्। कर्मभूतम्। अन्वगात् अन्वगच्छत् अनुसृतवानिति यावत्॥ ५॥

तमिति॥ गिरेः पर्वतस्य यत् शृङ्गं तस्य सोदरं तुल्यमित्यर्थः। तथा मदेन मत्ततया उद्धतं उद्धुरं मेषं निजवाहनम्। कर्मभूतम्। अधिष्ठितः तत्रासीन इत्यर्थः। अधिपूर्वात्

---

(७) ऐरावणम्। (८) मदोद्धुरम्, मदोद्धतम्।
(९) महामहोजस्तरसा युधेदधे, महो महीयस्तरमादधद्युधि।

(१)अथेन्द्रनीलाचलचण्डविग्रहं
विषाणविध्वस्तमहा(२)पयोधरम् ।
(३)अधिष्ठितः कासरमुद्धरं मुदा
(४)वैवस्वतो दण्डधरस्त(५)मन्वगात् ॥७॥
(६)मदोद्धतं प्रेतमथाधिरूढवां-
स्तमन्धकद्वेषितनूज(७)मन्वगात् ।

स्थाधातोः कर्तरि क्तः। तथा विरोधो विद्यते येषां ते विरोधिनः अरयः तेषु विद्वेषेण अरिकृतात्याचारेण जातया रुषा कोपेन हेतुना अधिकं भृशं यथा तथा ज्वलन् उद्दीप्तः। तथा महसा तेजसा महीयस्तरं महत्तरम् आयुधम् आग्नेयास्त्रं दधत् धारयन्। शिखा ज्वलास्ति यस्य शिखी अनलः। कर्ता। तं कुमारम् अन्वगच्छत् अनुससार ॥ ६ ॥

अथेति ॥ अथ अग्न्यनुसरणानन्तरम् इन्द्रनीलाचलवत् नीलगिरिवत् चण्डः भयङ्करः विग्रहः देहः यस्य तथाभूतम्। तथा विषाणाभ्यां शृङ्गाभ्यां विध्वस्ताः विपर्यस्ताः विचूर्णिता इति यावत्। महान्तः पयसां धराः मेघाः येन तथोक्तम्। अतिबलवत्त्वादिति भावः। तथा उद्धरं मदोत्कटं कासरं महिषं निजवाहनम् अधिष्ठितः तत्रोपविष्ट इत्यर्थः। वैवस्वतः सूर्यतनयः यमः। कर्ता। दण्डस्य निजशस्त्रस्य धरः धृतदण्डास्त्रः सांनत्यर्थः। तं कार्त्तिकेयम्। कर्म। अन्वगात् अनुसृतवान् ॥ ७ ॥

---

(१) नन्विन्द्रनीलाचलचण्डविग्रहे, नवेन्द्रनीलोच्चितचण्डविग्रहम्। (२) शिलोच्चये।
(३) स्थितोऽतिमत्ते महिषेऽसुभीषणः, अधिष्ठितः कासरमुद्धतं मुदा। (४) रणोत्सुकः। (५) अभ्यगात्।
(६) मदोद्धतः प्रेतवराधिरोहणः, मदोद्धतप्रेतवराधिरूढः।
(७) अभ्यगात्।

महासुरद्वेषविशेषभीषणः
सुरोषणश्चण्डरणाय नैर्ऋतः ॥ ८ ॥
(८)नवोद्यदम्भोधरघोरदर्शने
(९)युद्धाय रूढो (१)मकरे (२)महत्तरे ।
दुर्वारपाशो वरुणो (३)रणोल्बण-
स्तमन्वियाय त्रिपुरान्तकात्मजम् ॥ ९ ॥

मदोद्धतमिति ॥ अथ यमानुगमनानन्तरं महान् यः असुरः दैत्यः तारकः तस्मिन् द्वेषविशेषेण रोषभेदेन भीषणः भयोत्पादकः । तथा सुरोषणः अतिकुपितः नैर्ऋतः राक्षसः दक्षिणपश्चिमकोणाधिपतिरित्यर्थः । कर्ता । मदोद्धतं मदोन्मत्तं प्रेतं कौणपं निजवाहनमित्यर्थः । कर्मभूतम् । अधिरूढवान् अधिष्ठितवान् सन् चण्डं भीषणं यत् रणं युद्धं तस्मै अन्धकस्य द्वेषो घातकः महादेवः तस्य सम्बन्धिनं तनूजं कुमारम् अन्वगात् अन्वगच्छत् ॥ ८ ॥

नवेति ॥ रणाय युद्धार्थम् उल्बणः दुर्मदः वरुणः पश्चिमदिक्पतिरित्यर्थः । कर्ता । नवोद्यतः नूतनोदयमानस्य अम्भसां जलानां धरस्य मेघस्येव घोरं भयङ्करं दर्शनं यस्य तथाभूते महत्तरे अतिबलवति मकरे रूढः उपविष्टः । तथा दुर्वारः वारयितुमशक्यः पाशः निजायुधं यस्य तादृशः सन् युद्धाय युद्धार्थं युद्धं कर्तुमित्यर्थः । तं पूर्वोक्तं त्रिपुरान्तकात्मजं हरतनयम् । कर्मभूतम् । अन्वियाय अन्वगच्छत् ॥ ९ ॥

---

(८) नवोदयाम्भोधरघोरदर्शनः, नवोदयस्तोरणघोरदर्शनम्, नवोदयास्तोरणघोरदर्शनम् ।
(९) युधेऽधिरूढः, युद्धोपरूढः । (१) मकरम् ।
(२) महत्तरम् । (३) रणोल्बणम् ।

दिगम्बरा(४)धिक्रमणोल्बणं क्षणात्
मृगं महीयांसमरुद्धविक्रमम् ।
अधिष्ठितः सङ्गरकेलि(५)लालसो
मरुन्महेशात्मज(६)मन्वगाद्द्रु(७)द्रुतम् ॥१०॥
विरोधिनां (८)शोणितपारणैषिणीं
गदामनूनां नरवाहनो वहन् ।
महाहवाम्भोधि(९)विगाहनोद्धतं
यियासु(१)मन्वागमदीशनन्दनम् ॥ ११ ॥

दिगिति ॥ दिशां पूर्वादीनां तथा अम्बरस्य आकाशस्य यत् अधिक्रमणम् आक्रमणं तत्र उल्बणम् उत्कटम् । तथा अरुद्धः दुर्निवारः विक्रमः पराक्रमः यस्य तथोक्तम् । तथा महीयांसं महत्तरं मृगं स्ववाहनमिति शेषः । अधिष्ठितः आरूढः मरुत् वायुः पश्चिमोत्तरदिक्पतिरित्यर्थः । सङ्गरः युद्धमेव केलिः लीला तत्र लालसः व्यग्रः सन् क्षणात् अविलम्बेनैव महेशात्मजं हरतनयं कार्त्तिकेयम् । कर्म । द्रुतं सत्वरं यथा तथा अन्वगात् अनुसृतवान् ॥ १० ॥

विरोधिनामिति ॥ विरोधः शत्रुता विद्यते येषां तथोक्तानां शत्रूणां शोणितस्य रक्तस्य सम्बन्धिनी या पारणा पानं ताम् इच्छति वाञ्छतीति तथोक्ताम् अनूनां महत्तरां गदां वहन् धारयन् नरवाहनः मानवयानः कुवेरः । कर्त्ता । महान् गुरुतरः आहवः युद्धमेव अम्भोधिः वारिनिधिः तत्र विगाहनाय निमज्जनार्थं उद्धतं महायुद्धं कर्त्तुमुद्यतमित्यर्थः । अतएव

---

(४) अद्रिक्रमण । (५) लालसम् । (६) मभ्यगात् । (७) ध्रुवम् ।
(८) विग्रह । (९) विगाहमानः । (१) अभ्यागमत् ।

महाहि(२)निर्बद्धजटाकलापिनो
ज्वलत्त्रिशूल(३)प्रबलायुधा (४)युधि।
(५)रुद्रास्तुषाराद्रि(६)सखं महावृषं
ततोऽधिरूढास्तमयुः पिनाकिनः ॥ १२ ॥

अन्येऽपि सन्नह्य (७)महारणोत्सव-
श्रद्धालवः स्वर्गिगणास्तमन्वयुः।
स्ववाहनानि (८)प्रबलान्यधिष्ठिताः
प्रमोदविस्मेरमुखाम्बुजश्रियः ॥ १३ ॥

यियासुं जिगमिषुं ईशस्य हरस्य सम्बन्धिनं नन्दनं कार्त्तिकेयम्। कर्म। अन्वागमत् अन्वगच्छत् ॥ ११ ॥

महाहीति ॥ ततः अनन्तरं पिनाकाः पिनाकाभिधेयधनूंषि सन्ति येषां ते पिनाकिनः रुद्राः रुद्रसंज्ञका एकादशसंख्यकाः। कर्तारः। महान्तः तीक्ष्णविषाः ये अहयः सर्पाः तैः। करणैः। निर्बद्धाः संयताः जटाकलापाः जटासमूहाः विद्यन्ते येषां तथाभूताः। तथा ज्वलत् दीप्तिमत् त्रिशूलं त्रिशूलाख्यं प्रबलं भीषणं आयुधं अस्त्रं येषां तादृशाः। तथा तुषाराद्रिः हिमालयः सखा सदृशः यस्य तथोक्तं शुभ्रत्वादिति भावः। महान्तं महत्तरं वृषं अधिरूढाः स्ववाहनभूतं महावृषे उपविष्टा इत्यर्थः। सन्तः युधे युद्धार्थं युद्धं कर्तुमित्यर्थः। तं कार्त्तिकेयं अयुः अन्वगच्छन् ॥ १२ ॥

अन्येऽपीति ॥ महान् प्रबलः यः रणः संग्रामः स एव उत्सवः सहर्षव्यापारः तत्र श्रद्धालवः अनुरागवन्तः। अतएव प्रमोदेन भविष्यत्संग्रामजनितानन्देन विस्मेरा विशेषेण दीप्ति-

(२) निबद्ध। (३) प्रवरायुधाः। (४) युधि। (५) रुद्रा। (६) समम्। (७) महामहोत्सव, महामहोत्सवाः। (८) प्रवराणि।

उद्दण्डहैमध्वजदण्डसंकुलाः
(८)स्फुरद्विचित्रातपवार(१)णोज्ज्वलाः ।
(२)चलद्घनस्यन्दनघोषभीषणाः
करीन्द्रघण्टारव(३)चण्डचीत्कृताः ॥१४॥
स्फुरद्विचित्रायुधकान्ति(४)मण्डलै-
रुद्योतिताशावल(५)याम्बरान्तराः ।
दिवौकसां सोऽनुवहन्महाचमूः
पिनाकपाणेस्तनयस्ततो ययौ ॥ १५ ॥

मती मुखाम्बुजानां मुखकमलानां श्रीः शोभा येषां तथाभूताः अन्ये अपरेऽपि स्वर्गिगणाः देववृन्दाः । कर्तारः । सवेगं समुद्यम्य प्रबलानि बलवन्ति स्ववाहनानि अधिष्ठिताः अधिरूढाः सन्तः तं कार्त्तिकेयं अन्वयुः अनुजग्मुः ॥ १२ ॥

अथ श्लोकद्वयेन युग्मकमाह—

उद्दण्डेति ॥ स्फुरदिति च ॥ ततः तदनन्तरं उद्दण्डैः उद्धूतदण्डैः हैमैः सुवर्णस्य ध्वजदण्डैः पताकायष्टिभिः संकुलाः व्याप्ताः । तथा स्फुरद्भिः प्रस्फुरद्भिः विचित्रैः विविधाकृतिभिः आतपवारणैः छत्रैः उज्ज्वलाः उद्भासमानाः । तथा चलतां धावतां घनानां मेघानामिव स्यन्दनानां रथानां घोषेण ध्वनिना भीषणाः भयोत्पादकाः । तथा करीन्द्राणां गजपतीनां सम्बन्धी यः घण्टारवः घण्टाध्वनिः तेन चण्डानि उग्राणि श्रुतिकठोराणीत्यर्थः । चीत्कृतानि कोलाहलानि यासां तथाभूताः । तथा स्फुरन्ति दीप्तिमन्ति तथा विचित्राणि विविधानि यानि आयुधानि अस्त्राणि तेषां कान्तिमण्डलैः

---

(८) चलत् । (१) उल्बणाः । (२) घनाघनाः ।
(३) चक्रिः । (४) कन्दलैः । (५) अम्बरा वराः ।

कोलाहलै(७)रुच्छलतां दिवौकसां
महाचमूनां गुरुभिर्ध्वजव्रजैः ।
घनैर्निरुच्छ्वासमभू(८)दनन्तरं
दिङ्मण्डलं व्योमतलं महीतलम् ॥१६॥
सुरारिलक्ष्मीपरिकम्पहेतवो
दिक्चक्रवालप्रतिनादमेदुराः ।

प्रभासमूहैः उद्योतितं उद्दीपितं आशावलयं दिङ्मण्डलं, अम्बरान्तरं आकाशावकाशश्च याभिः तथोक्ताः । दिवौकसां स्वर्गनिवासिनां देवानां सम्बन्धिनीः महाचमूः महासैन्यानि अनुवहन् नीत्वेत्यर्थः । पिनाकः पिनाकाभिधेयं धनुः पाणौ हस्ते यस्य स पिनाकपाणिः हरः तस्य तनयः पुत्रः । कर्ता । ययौ संग्रामार्थमिति भावः ॥ १४ ॥ १५ ॥

कोलेति ॥ दिङ्मण्डलं, व्योमतलं गगनमण्डलं, महीतलं भूमितलञ्च । कर्तृ । कोलाहलेन चीत्कृतेन उच्छलतां धावतां दिवौकसां स्वर्गवासिनां सुराणां सम्बन्धिनीनां महतीनां चमूनां सेनानां गुरुभिः महद्भिः घनैः निविडैः ध्वजव्रजैः पताकावृन्दैः अनन्तरं अनवकाशं तथा निरुच्छ्वासं निरुद्धप्राणं अभूत् बभूव । अत्र प्रतीयमानोत्प्रेक्षा ॥ १६ ॥

सुरारीति ॥ सुराणां देवानां ये अरयः शत्रवः असुरा इत्यर्थः । तेषां लक्ष्म्याः सम्पदः परिकम्पस्य चापल्यस्य हेतवः कारणानि । तथा दिक्चक्रवालेषु दिङ्मण्डलेषु यः प्रतिनादः प्रतिध्वनिः तेन मेदुराः सुस्निग्धाः पुष्टा इति भावः । तथा नभोऽन्तस्य गगनाभ्यन्तरस्य कुक्षिम्भरयः गगनोदरव्यापिन

---

(७) उच्छलता । (८) मनन्तराम् ।

नभोऽन्तकुक्षिम्भरयो (६)घनाः स्वना
निहन्यमानैः पटहैर्वितेनिरे ॥ १७ ॥
प्रमथ्यमा(१)नाम्बुधिगर्जितर्जनैः
(२)सुरारिनारीगणगर्भपातनैः ।
नभश्चमूधूलिकुलै(३)रिवाकुलं
ररास गाढं पटहप्रतिस्वनैः ॥ १८ ॥
(४)क्षुण्णं रथैर्वाजिभिराहतं खुरैः
करीन्द्रकर्णैः परितः प्रसारितम् ।

इत्यर्थः । तथा घनाः गम्भीराः स्वनाः ध्वनयः । सेनानामिति भावः । कर्मभूताः । विहन्यमानैः वाद्यमानैः । सैनिकैरिति कर्तृपदमूह्यम् । पटहैः रणवाद्यविशेषैः । कर्तृभूतैः । वितेनिरे विस्तृतीकृताः ॥ १७ ॥

प्रमथ्यमानेति ॥ नभः गगनमण्डलम् । कर्तृ । चमूनां सैन्यानां सम्बन्धिभिः धूलिकुलैः रजःपुञ्जैः आकुलं व्याकुलमिव स्थितं प्रमथ्यमानस्य मन्दराद्रिणा विलोड्यमानस्य अम्बुधेः सागरस्य गर्जैः गर्जितस्य कर्मभूतस्य तर्जनैः जयकारिभिः । तथा सुराणां देवानां ये अरयः शत्रवः असुरा इत्यर्थः । तेषां सम्बन्धिनीनां नारीगणानां स्त्रीसमूहानां गर्भपातनैः गर्भपातकारिभिः पटहानां रणवाद्यभेदानां प्रतिस्वनैः प्रतिध्वनिभिः गाढं भृशं यथा तथा ररास दध्वान । उत्प्रेक्षेयम् ॥ १८ ॥

क्षुण्णमिति ॥ काञ्चनस्य स्वर्णस्य शैलात् सुमेरोः जायते यत् तथोक्तं रजः धूलिः । कर्तृभूतम् । रथैः कर्तृभिः क्षुण्ण

---

(६) घनस्वनाः । (१) अर्णवगर्जितस्वनैः । (२) वरारि
(३) आकुलैः । (४) क्षिप्तम् ।

(५) धुतं ध्वजैः काञ्चनशैलजं रजो
वातैर्हतं व्योम (६)समारुहत् (७)क्रमात् ॥१९॥
खातं खुरै रथ्यतुरङ्गपुङ्गवैः
(८)उपत्यकाहाटकमेदिनीरजः।
गतं दिगन्तान् (९)मुखरैः समीरणैः
(१)सुविभ्रमं भूरि बभार भूयसा ॥ २० ॥
अधस्तथोर्ध्वं पुरतोऽथ पृष्ठतो-
ऽभितोऽपि चामीकररेणुरुच्चकैः।

चूर्णितम्। तथा वाजिभिः घोटकैः। कर्तृभिः। खुरैः शफैः। करणैः। आहतं कुट्टितम्। तथा करीन्द्राणां गजपतीनां सम्बन्धिभिः कर्णैः श्रवणैः। कर्तृभिः। परितः चतुर्दिक्षु प्रसारितं सञ्चालितम्। तथा ध्वजैः पताकाभिः। कर्तृभिः। धुतं कम्पितम्। तथा वातैः पवनैः। कर्तृभिः। हतं ताड़ितं सत् क्रमात् व्योम गगनम्। कर्मभूतम्। समारुहत् आरूढम् ॥ १९ ॥

खातमिति॥ रथ्याभिः रथयोजिताभिः तुरङ्गपुङ्गवैः अश्वश्रेष्ठैः। कर्तृभिः। खुरैः शफैः। करणैः। खातं विदलितं उपत्यकायाः पर्वतासन्नायाः हटकमेदिन्याः सुवर्णभूमेः सम्बन्धि रजः धूलिः। कर्तृ। मुखरैः शब्दायमानैः समीरणैः वायुभिः दिगन्तान् गतं विस्तारितम्। अतएव भूरि प्रचुरं सत् भूयसा बाहुल्येन सुविभ्रमं अतिभ्रान्तिं बभार धृतवत् ॥ २० ॥

अध इति॥ महता पवनेन। कर्त्रा। आहतः ताड़ितः।

---

(५) धूतं घनैः। (६) ससार तत्, समासदत्।
(७) क्षणात्। (८) उपत्यकानां कनकस्थलीरजः।
(९) प्रखरैः। (१) दाहभ्रमम्।

चमूषु सर्पन्महदाहतोऽहरन्
(२)नवीनसूर्य्यस्य च कान्तिवैभवम् ॥ २१ ॥
(३)बलोद्धृतं काञ्चनभूमिजं रजो
बभौ दिगन्तेषु (४)नभःस्थले स्थितम् ।
अकालसन्ध्याघनराग(५)पिङ्गलं
घनं घनानामिव (६)वृन्दमुद्यतम् ॥ २२ ॥
(७)हेमावनीषु प्रतिबिम्बमात्मनो
मुहुर्विलोक्याभिमुखं महागजाः ।

अतएव चमूषु सेनासु अधः ऊर्द्ध्वं पुरतः अग्रतः पृष्ठतः तथा अभितः सर्वतः सर्पन् धावन् उच्चैः महान् चामीकररेणुः स्वर्णपरागः। कर्त्ता। नवीनः नवोदितः। ताम्रवर्ण इति भावः। यः सूर्य्यः तस्य सम्बन्धिन्याः कान्तेः शोभायाः वैभवं सम्पदं अहरत् हृतवान् ॥ २१ ॥

बलेति ॥ बलैः सैन्यैः देवानामिति भावः। कर्तृभिः। उद्धृतं उत्क्षिप्तं काञ्चनस्य सुवर्णस्य या भूमिः तस्याः जायते यत् तथोक्तं रजः। कर्तृ। नभःस्थले गगनमण्डले दिशां आकाशानां अन्तेषु प्रान्तभागेषु स्थितं सत् अकाले सन्ध्याव्यतिरिक्तसमये सन्ध्यायाः घनः गाढ़ः यः रागः लौहित्यं तेन पिङ्गलं पिञ्जरं तथा घनं निविड़ं तथा उद्यतं उत्थितं घनानां मेघानां वृन्दं समूह इव बभौ दिदीपे। उपमालङ्कारः ॥२२॥

हेमेति ॥ महान्तः गजाः महागजाः सेनाकरीन्द्राः। कर्त्तारः। हेम्नः काञ्चनस्य अवनीषु भूमिषु अभिमुखं संमुख·

(२) तत्कालबालातपवैभवं बहु, तत्कालबालारुणवैभवं बहु।
(३) वातोद्धतम्, बलोद्धतम्। (४) नभस्तले।
(५) पिञ्जितम्। (६) दण्डम्। (७) हैमावनीषु।

रसातलोत्तीर्ण(८)गजभ्रमात् क्रुधा
दन्तप्रकाण्ड(९)प्रहृतानि तेनिरे ॥ २३ ॥
सुजातसिन्दूरपरागपिञ्जरैः
कलं चलद्भिः सुरसैन्यसिन्धुरैः।
शुद्धासु चामीकरशैलभूमिषु
(१)नादृश्यत स्वं प्रतिविम्बमग्रतः ॥ २४ ॥
इति क्रमेणामरराजवाहिनी
महाहवा(२)म्भोधिविलासलालसा।

पतितं आत्मनः स्वस्य प्रतिविम्बं प्रतिकृतिं विलोक्य निरीक्ष्य रसातलात् पातालात् उत्तीर्णानां उत्थितानां गजानां सम्बन्धी यः भ्रमः भ्रान्तिः तस्मात् हेतोः क्रुधा रोषेण मुहुः वारंवारं दन्तैः प्रकाण्डं प्रशस्तं यथा तथा प्रहृतानि प्रहारान्, तेषु प्रतिकृतिष्विति भावः। तेनिरे विस्तारयामासुः। कृतवन्त इत्यर्थः। भ्रान्तिमानलङ्कारोऽत्र ॥ २३ ॥

सुजातेति ॥ सुजातेन सुन्दरेण सिन्दूरस्य रक्तचूर्णकविशेषस्य रागेण रजसा पिञ्जरैः पीतरक्तैः। तथा कलं मधुरं यथा तथा चलद्भिः धावद्भिः सुरसैन्यानां देवसेनानां सिन्धुरैः करिभिः। कर्तृभिः। शुद्धासु स्वच्छासु चामीकरस्य स्वर्णस्य यः शैलः सुमेरुः तस्य भूमिषु अग्रतः संमुखं स्वं प्रतिविम्बं पतितमिति भावः। कर्मभूतम्। न अदृश्यत न अवलोकितः तुल्यवर्णत्वादिति भावः ॥ २४ ॥

इतीति ॥ अमरराजस्य देवेन्द्रस्य सम्बन्धिनी वाहिनी सेना। कर्त्री। महान् प्रबलः आहवः रण एव अम्भोधिः

---

(८) गजभ्रमेण ते। (९) प्रहृतानि, प्रकृतानि।
(१) व्यदृश्यत। (२) आरम्भ।

अवातरत्काञ्चनशैलतो द्रुतं
(३)कोलाहलाक्रान्तविधूतकन्दरा ॥२५॥
(४)महाचमूस्यन्दनचण्डचीत्कृतै-
र्विलोल(५)घण्टेभपतेश्च बृंहितैः।
सुरेन्द्रशैलेन्द्रमहागुहाशयाः
सिंहा (६)महत् स्वप्नसुखं न तत्यजुः ॥२६॥
गम्भीरभेरीध्वनितैर्भयङ्करैः
(७)महागुहान्तप्रतिनादमेदुरैः।

सागरः तस्य विलासे व्यापारे लालसा व्यग्रा रणं कर्तुमुद्यता इत्यर्थः। तथा इति एवं क्रमेण प्रकारेण कोलाहलेन सेनाजातकलरवेण आक्रान्ता परिपूरिता विधूता कम्पिता च कन्दरा गुहा सुमेरोरिति भावः। यया तथोक्ता सती द्रुतं शीघ्रं काञ्चनशैलतः सुमेरोः अवातरत् अवरुरोह ॥ २५ ॥

महेति ॥ सुराणां देवानां इन्द्रस्य सम्बन्धिनः शैलेन्द्रस्य सुमेरोः सम्बन्धिन्यः महत्यः याः गुहाः गह्वराणि तासु शयाः जातशयनाः सिंहाः। कर्तारः। महतीनां प्रबलानां चमूनां सेनानां सम्बन्धिनां स्यन्दनानां रथानां चण्डानि अत्युत्कटानि यानि चीत्कृतानि ध्वनिभेदाः तैः, विलोलाः चञ्चलाः घण्टाः यस्मिन् तथोक्तस्य इभपतेः गजराजस्य ऐरावतस्येत्यर्थः। बृंहितैः करिकृतध्वनिभिश्च महत् अत्यन्तं स्वप्नस्य निद्रायाः सुखं स्वप्नजनितसुखमित्यर्थः। न तत्यजुः न जहुः। पशुराजत्वादिति भावः ॥ २६ ॥

---

(३) कोलाहलाहूतिविभूतकन्दरा, कोलाहलाकूतविधूतकन्दरा, कोलाहलाक्रान्तविधूतकन्दराः।

(४) महाचमूनां करिचण्ड। (५) घण्टाक्वणितोपबृंहितैः।

(६) महास्वप्न। (७) मुहुर्गुहान्तः।

महारथानां (८)गुरुनेमिनिःस्वनै-
रनाकुलैस्तैर्मृगराज(९)ताजनि ॥ १७ ॥
(१)समुत्थितेन त्रिदिवौकसां (२)महा-
चमूरवेणाद्रितटान्तदारिणा।
प्रपेदिरे केसरिणोऽधिकं मदं
(३)स्ववीर्यलक्ष्मीर्मृगराजतावशात् ॥ २८ ॥

गम्भीरेति ॥ तैः पूर्वोक्तैः सिंहैः। कर्तृभिः। महतीनां गुहानां गह्वराणाम् अन्तः मध्ये यः प्रतिनादः प्रतिध्वनिः तेन मेदुरैः पुष्टैः। तथा गम्भीराभिः भेरीभिः रणवाद्यविशेषैः ध्वनितैः पूरितैरित्यर्थः। अतएव भयङ्करैः भयोत्पादकैः, महारथानां महास्यन्दनानां सम्बन्धिभिः गुरवः महान्तः ये नेमीनां चक्रप्रान्तानां निःस्वनाः ध्वनयः तैः। अपीति शेषः। अनाकुलैः अचञ्चलैः सद्भिः मृगराजस्य भावः तत्ता मृगराजता मृगपतित्वम्। कर्मभूता। अजनि उत्पादिता मृगराजशब्द अन्वर्थः कृत इति भावः ॥ २७ ॥

समुत्थितेनेति ॥ केसरिणः मृगेन्द्राः। कर्तारः। समुत्थितेन प्रसरता। तथा अद्रितटान्तस्य अचलतटभागस्य दारिणा विदारकेण। त्रिदिवौकसां स्वर्गवासिनां देवानां सम्बन्धिनीनां महतीनां प्रबलपराक्रान्तानां चमूनां सेनानां सम्बन्धिना रवेण कलकलध्वनिना स्ववीर्यस्य निजपराक्रमस्य लक्ष्मीः श्रीः यस्यां तथाभूतायाः मृगराजतायाः मृगाधिपतित्वस्य वशात् हेतोः अधिकं मद गर्वम्। कर्मभूतम्। प्रपेदिरे प्राप्तवन्तः। सेनाकलरवमाकर्ण्य सिंहा भृशं गर्विता बभूवुरित्यर्थः ॥ २८ ॥

---

(८) गुरुनादनिःस्वनैः। (९) अपि विम्।
(१) समुच्छ्रितेन। (२) चमूरवेण तेन। (३) स्ववीरलक्ष्मी।

भिया सुरानीकविमर्दजन्मना
विदुद्रुवुर्दूरतरं द्रुतं मृगाः ।
गुहागृहान्ता(४)द्बहिरेव (५)हेलया
तस्थु(६)र्विशङ्कं नितरां मृगाधिपाः ॥२९॥

(७)विलोकिताः कौतुकिनामरावती-
जनेन (८)जुष्टप्रमदेन दूरतः ।
सुराचलप्रान्त(९)भुवः प्रपेदिरे
(१)सुविस्तृतायाः प्रसरं (२)सुसैनिकाः ॥३०॥

भियेति ॥ मृगाः हरिणप्रभृतयः । कर्तारः । सुरानीकानां देवसैन्यानां विमर्दन संघर्षेण जन्म उत्पत्तिः यस्याः तथोक्तया भिया शङ्कया । इतौ तृतीया । द्रुतं सत्वरं यथा तथा दूरतरं प्रदेशं विदुद्रुवुः पलायिताः । तथा मृगाधिपाः मृगेन्द्राः । कर्तारः । गुहागृहान्तात् गह्वरभवनप्रदेशात् हेलया अवलीला-क्रमेण बहिः बाह्यदेशे गुहागृहस्येति भावः । एत्य आगत्य नितरां भृशं विशङ्कं निर्भयं यथा तथा तस्थुः स्थिताः ॥ २९॥

विलोकिता इति ॥ कौतुकं दर्शनौत्सुक्यमस्ति यस्य तथोक्तेन । तथा जुष्टः प्राप्तः प्रमदः प्रकृष्टाह्लादः येन तादृशे-नेत्यर्थः । अमरावत्याः सुरनगर्याः सम्बन्धिना जनेन कर्त्रा । दूरतः दूरप्रदेशात् अवलोकिताः निरीक्षिताः । शोभनाः सैनिकाः सेनासंक्रान्तपुरुषाः । कर्तारः । सु अति-शयेन विस्तृतायाः विशालायाः सुराचलस्य सुमेरोः या प्रान्तभ

(४) अभिसृत्य। (५) लीलया। (६) विनिःशङ्कतराः।
(७) विलोकिता। (८) जातप्रमदेन, दृष्ट प्रमदेन।
(९) भुवि। (१) सुविस्तृतायाम्। (२) न सैनिकाः

(३)पीतासितारक्तसितैः सुराचल-
(४)प्रान्तस्थितैर्धातुरजोभिरम्बरम्।
(५)अयत्नगन्धर्वपुरोदयभ्रमं
बभार (६)भूम्नोत्पतितैरितस्ततः ॥३१॥

(७)महास्वनः सैन्यविमर्दसम्भवः
कर्णान्त(८)कूलङ्कषतामुपेयिवान्।
पयोनिधेः क्षुब्धतरस्य (९)वर्द्धनो
बभूव भूम्ना भुवनोदरम्भरिः ॥ ३२ ॥

पर्यन्तभूमिः तस्याः सम्बन्धिनं प्रसरं प्रदेशम्। कर्मभूतम्। प्रपेदिरे आसवन्तः ॥ ३० ॥

पीतेति ॥ अम्बरं नभस्तलम्। कर्तृ। पीतैः पीतवर्णैः, असितैः कृष्णैः, आरक्तैः ईषद्रक्तवर्णैः, सितैः शुक्लैश्च। तथा सुराचलस्य सुमेरोः प्रान्तस्थितैः उपरिस्थितैः। तथा इतस्ततः समन्तात् भूम्ना प्राचुर्येण उत्पतितैः उत्थितैः उड्डीनैरिति यावत्। धातूनां गैरिकप्रभृतीनां रजोभिः रेणुभिः अयत्नेन अनायासेन गन्धर्वाणां सम्बन्धिनः पुरस्य नगर्याः सम्बन्धिनः उदयस्य आविर्भावस्य भ्रमं भ्रान्तिम्। कर्मभूतम्। बभार धृतवत्। अत्र भ्रान्तिमानलङ्कारः ॥ ३१ ॥

महास्वन इति ॥ सैन्यानां सैन्यकर्तृकाणां यः विमर्दः संघर्षः तस्मात् सम्भवः जन्म यस्य तथोक्तः। तथा कर्णान्तस्य श्रवणविवरस्य कूलं कषति भिनत्तीति तथोक्तस्य भावः तत्ताम् उपेयिवान् गतवान् कर्णविवरं पूरयन्नित्यर्थः। तथा क्षुब्धतरस्य

---

(३) पीतासितं रक्तसितम्। (४) प्रान्तोत्थितैः।
(५) अखर्वं। (६) सुतराम्, नितराम्।
(७) रवः प्रमत्ताहतभेरिसम्भवः।
(८) कूलङ्कषताम्। (९) मन्थनः।

महागजानां गुरुबृंहितै(१)स्ततैः
सुहेषितैर्घोरतरैश्च वाजिनाम् ।
(२)घनै रथानां गुरुचण्डचीत्कृतै-
स्तिरोहितोऽभूत्पटहस्य निःस्वनः ॥ ३३ ॥
महासुराणामवरोधयोषितां
कचाक्षिपक्ष्मस्तनमण्डलेषु (३)च ।

अतिचञ्चलस्य आलोड़ितत्वादिति भावः। पयोनिधेः समुद्रस्य समुद्रादित्यर्थः। अत्र सम्बन्धविवक्षया पञ्चमीस्थाने षष्ठीप्रयोगः। वर्धनः पयोनिध्यपेक्षया वृद्धिं लभमान इत्यर्थः। महान् अत्युच्चः स्वनः शब्दः। भूम्ना बाहुल्येन भुवनस्य सम्बन्धि उदरं भरतीति भुवनोदरम्भरिः भूगर्भपूरकः बभूव जातः। अत्र उपमानभूतात् समुद्रात् सैन्यशब्दस्याधिक्यात् व्यतिरेकालङ्कारः। लक्षणमस्य दर्पणे मृग्यम् ॥ ३२ ॥

महेति ॥ पटहस्य रणवाद्यविशेषस्य सम्बन्धी निःस्वनः ध्वनिः। कर्ता। ततैः विस्तारं गतैः महान्तः ये गजाः ऐरावतप्रभृतयः तेषां गुरुबृंहितैः महाशब्दैः। तथा वाजिनां घोटकानां घोरतरैः अतिभनायकैः सुहेषितैः सुष्ठु हेषाशब्दैः। तथा रथानां स्यन्दनानां घनैः गम्भीरैः गुरूणि उच्चैः चण्डानि भयङ्कराणि च यानि चीत्कृतानि चीत्कारशब्दाः तैः। करणैः। तिरोहितः विलुप्तः अभूत् जातः। गजादिशब्दैः अन्तर्हितत्वात् पटहशब्दो न श्रूयते इति भावः ॥ ३३ ॥

महेति ॥ सुराणां देवानां सैन्यात् सेनायाः जायते उत्पद्यते यत् तत् सुरसैन्यजम्। जनधातोः कर्तरि डप्रत्ययः। रजः रेणुः। कर्तृ। क्षणेन क्षणकालेनैव महान्तः ये असुराः दैत्याः तारकप्रभृतयः तेषां सम्बन्धिनीनाम् अवरोधे अन्तःपुरे याः

(१) शतैः, च तैः। (२) स्वनैः। (३) च तम्।

ध्वजेषु नागेषु रथेषु वाजिषु
क्षणेन तस्थौ सुरसैन्यजं रजः ॥ ३४ ॥
(४)घनैर्विलोक्य स्थगितार्कमण्डले-
श्चमूरजोभिर्निचितं (५)नभःस्थलम् ।
(६)अयायि हंसैरभि मानसं घन-
भ्रमेण सानन्दमनर्ति केकिभिः ॥ ३५ ॥
(७)सान्द्रैः सुरानीकरजोभिरम्बरे
नवाम्बुदानीक(८)निभैरभिश्रिते ।

योषितः नार्यः तासां सम्बन्धिषु कचाः केशाः, अक्षिपक्ष्माणि नयनलोमानि, स्तनमण्डलानि पयोधरमण्डलानि च तेषु। तथा ध्वजेषु पताकासु, नागेषु ऐरावतप्रभृतिषु, रथेषु स्यन्दनेषु, वाजिषु अश्वेषु च तस्थौ स्थितम्। सैन्योत्थापितरेणुभिः सेनासंक्रान्तसर्वमावृतमभूदित्यर्थः ॥ ३४ ॥

घनैरिति ॥ घनैः निविडैः। तथा स्थगितम् अन्तर्हितम् अर्कमण्डलं सूर्यमण्डलं यैः तादृशैः चमूरजोभिः सेनारेणुभिः। कर्तृभिः। निचितम् आवृतं नभःस्थलम्। कर्मभूतम्। विलोक्य निरीक्ष्य हंसैः। कर्तृभिः। घनस्य मेघस्य यः भ्रमः भ्रान्तिः तेन हेतुना अभिमानसं मानसं मानससंज्ञकं सरोवरम् अभिलक्ष्येत्यर्थः। अयायि अगामि। वर्षायां हंसानां मानससरोगमनस्य कविसमयसिद्धत्वादिति भावः। तथा केका मयूरध्वनिः विद्यते येषां तथोक्तैः मयूरैः। कर्तृभिः। आनन्देन हर्षेण सह वर्तमानं सानन्दं यथा तथा अनर्ति नृत्यम् अकारि घनभ्रमेणेति शेषः। उभयत्र भ्रान्तिमानलङ्कारः ॥ ३५ ॥

सान्द्रैरिति ॥ अम्बरे गगने सान्द्रैः निविडैः नवानां नूत-

---

(४) चलैः। (५) नभस्तलम्। (६) अयापि, अवापि।
(७) सान्द्रे। (८) विलासिभिः श्रिते, निभैरभिस्तुते।

चकासिरे (१)स्वर्णमया महाध्वजाः
परिस्फुरत्तत्तडितां गणा इव ॥ ३६ ॥
विलोक्य धूलीपटलैर्भृशं भृतं
द्यावापृथिव्योरलमन्तरं महत् ।
किमूर्ध्वतोऽधः (१)किमधस्त ऊर्ध्वतो
रजोऽभ्युपैतीति जनैरतर्क्यत ॥ ३७ ॥
नोर्ध्वं न चाधो न पुरो न पृष्ठतो
न पार्श्वतोऽभूत् खलु (२)चक्षुषोर्गतिः ।

मोदितानाम् अम्बुदानां जलदानां सम्बन्धि यत् अनीकं चय
तेन निभैः तुल्यैः सुरानीकानां रजोभिः रेणुभिः । कर्तृभि
अभिश्रिते परिवृते सति । भावाधिकरणमत्र । स्वर्णमय
सुवर्णनिर्मिताः महाध्वजाः महापताकाः । कर्तारः । परिस
न्तः परितः दीप्यमानाः सन्तः । अतएव तडितां विद्यु
गणाः समूहा इव चकासिरे दिदीपिरे । उपमालङ्कारः ॥३
विलोक्येति ॥ जनैः लोकैः । कर्तृभिः । धूलीनां रज
पटलैः पुञ्जैः । कर्तृभिः । भृशम् अत्यन्तं यथा तथा भृत
आवृतं द्यावापृथिव्योः अन्तरीक्षभूतलयोः सम्बन्धि मह
विस्तृतम् अन्तरम् अवकाशं विलोक्य दृष्ट्वा । रजः । कर्तृ
अलम् आधिक्येन ऊर्ध्वतः ऊर्ध्वदेशात् अधः निम्नदेशे कि
अथवा अधस्तः निम्नदेशात् ऊर्ध्वतः उपरिभागे किम् अभ्
पैति अभियातीति अतर्क्यत पर्यालोचितम् ॥ ३७ ॥
नेति ॥ प्राणिनां जीवानां सम्बन्धिनः गणस्य समूह
चक्षुषोः नयनयोः गतिः । कर्त्री । सर्वतः चतुर्दिक्षु सूचीना

(१) स्वर्णमयध्वजव्रजाः, स्वर्णमया ध्वजव्रजाः ।
(१) अधस्तत । (२) चक्षुषः ।

(३) सूच्यग्रभेद्यैः पृतना(४)रजश्चयैः
(५)आच्छादिता प्राणिगणाय सर्वतः ॥३८॥

दिगन्त(६)दन्त्यावलिदानहारिभि-
र्विमानरन्ध्रप्रतिनादमेदुरैः ।
अनेक(७)वाद्यध्वनितैरनारतै-
र्जगर्ज गाढं (८)गुरुभिर्नभस्तलम् ॥३९॥

भुवं विगाह्य प्रययौ महाचमूः
(९)क्वचिन्न मान्ती (१)महतीं दिवं खलु ।

ग्रैः अग्रभागैः भेद्यैः भेदयोग्यैः घनैरित्यर्थः । पृतनारजश्चयैः नारेणुपुञ्जैः । कर्तृभिः । आच्छादिता आवृता सती । ऊर्ध्वम् उपरिभागे न, अधः निम्नभागे च न, पुरः संमुखे न, पृष्ठतः पश्चाद्भागे न तथा पार्श्वतः पार्श्वभागे न खलु अभूत् । सर्वं नोत्क्षिप्तरजःपुञ्जैः रुद्धदृष्टयो बभूवुरिति भावः ॥ ३८ ॥

दिगिति ॥ नभस्तलम् अन्तरीक्षम् । कर्तृ । दिशां पूर्वादीनाम् अन्तेषु प्रान्तदेशेषु ये दन्तिनः गजाः तेषाम् आवलीनां श्रेणीनां यत् दानं दानवारि तस्य हारिणां शोषकाणाम् । तथा विमानानां देवयानानां रन्ध्रेषु विवरेषु यः प्रतिनादः प्रतिध्वनिः तेन मेदुरैः पुष्टैः पूरितैरित्यर्थः । तथा अनारतैः निरन्तरैः । तथा गुरुभिः अत्युच्चैः अनेकेषां वाद्यानां वाद्ययन्त्राणां ध्वनितैः शब्दैः गाढं भृशं यथा तथा जगर्ज ध्वनितवत् । आकाशं सैन्यचारणवाद्ययन्त्रशब्देन प्रतिध्वनितं बभूवेति भावः ॥ ३९ ॥

भुवमिति ॥ महाचमूः महासेना । कर्त्री । भुवं भूतलं

---

(३) सूच्यग्रभिन्नैः । (४) रजोभरैः, रजोभिः ।
(५) सुनिर्भरम्, सुनिर्भरैः । (६) दन्तावल । (७) वाद्य ।
(८) गुरुमंस्वरादिव । (९) ततः ।
(१) दिवमभ्यगात्ततः ।

सुसङ्कुलायामपि तत्र (२)निर्भरात्
किं कान्दिशीकत्वमवाप नाकुला ॥ ४० ॥

उद्दामदान(३)द्विपवृन्दबृंहितै-
र्नितान्तमुत्तुङ्गतुरङ्गहेषितैः ।
(४)चलद्घनस्यन्दननेमिनिस्वनै-
रभून्निरुच्छ्वास(५)मिवाकुलं (६)जगत् ॥४१॥

विगाह्य निर्भरात् सङ्कीर्णीकृत्येत्यर्थः । क्वचिदपि भूतलस्थ-स्थाने इत्यर्थः । न मान्ती खलु न मानं गच्छन्तीव । अत्र खलुशब्द उत्प्रेक्षावाची । महतीम् अतिविस्तृतां दिवं स्वर्गम् । कर्मभूतम् । प्रययौ जगाम । अत्रापि तस्यां दिव्यपि निर्भरात् संघर्षातिरेकादित्यर्थः । इतो तृतीया । सु अतिशयेन सङ्कुलायां सङ्कीर्णायां सत्याम् । भावाधिकरणमत्र । आकुला, एवं सङ्कीर्णायां दिवि कथं स्थातव्यमिति उत्कण्ठिता सती । कान्दिशीकस्य भयद्रुतस्य भावः तत्त्वं कान्दिशीकत्वं किं न अवाप प्राप्तवती । अपितु प्रापैव । "कान्दिशीको भयद्रुतः" इत्यमरः । उत्प्रेक्षालङ्कारः ॥ ४० ॥

उद्दामेति ॥ जगत् भूतलम् । कर्तृ । उद्दामदानाः उच्छृङ्खलाः ये द्विपाः ऐरावतप्रभृतयः गजाः तेषां सम्बन्धीनि यानि वृन्दानि समूहाः तेषां बृंहितैः बृंहितध्वनिभिः । तथा उत्तुङ्गानाम् अत्युन्नतानां तुरङ्गाणां घोटकानां हेषितैः हेषाध्वनिभिः । तथा चलतां गच्छतां घनानां जलदानामिव स्यन्दनानां रथानां सम्बन्धिन्यः याः नेमयः चक्रप्रान्ताः तासां निस्वनैः ध्वनिभिः नितान्तं भृशं निरुच्छ्वासमिव निरुद्धप्राणमिव आकुलं व्याकुलम् अभूत् ॥ ४१ ॥

---

(२) निर्भरा विकान्दिशीकत्वम् । (३) द्विपबृंहितैः शतैः । (४)चलद्रुत । (५) अथ । (६) नभः, तत् ।

महागजानां गुरुभिस्तु गर्जितै-
विलोलघण्टारणितै (७)रणोल्वणैः ।
(८)वीरप्रणादैः प्रमदप्रमेदुरै-
र्वाचालतामादधिरेतरां दिशः ॥ ४२ ॥

दन्तीन्द्र(९)दानद्रववारिवीचिभिः
सद्योऽपि नद्यो (१)बहुधा पुपूरिरे ।
(२)धारारजोभिस्तुरगैः क्षतैर्भृता
याः पङ्कतामेत्य रथैः स्थलीकृताः ॥ ४३ ॥

महेति ॥ दिशः पूर्वादयः। कर्त्र्यः। महतां गजानां करिणां गुरुभिः अत्युच्चैः गर्जितैः गर्जनैः। तथा विलोलाः चञ्चलाः याः घण्टाः तासां रणितैः शब्दैः। तथा रणेषु संग्रामेषु उल्वणैः उत्कटैः प्रमदानाम् महानन्दानां शत्रूनामिति भावः। प्रमेदुरैः प्रणाशकारिभिः वीराणां पराक्रान्तयोधानां प्रणादैः ध्वनिभिः। करणैः। वाचालतां मुखरत्वम्। कर्मभूताम्। आदधिरे धृतवत्यः ॥ ४२ ॥

दन्तीति ॥ दन्तीन्द्राणां गजपतीनां सम्बन्धिनः ये दानस्य मदस्य सम्बन्धिनः द्रवाः स्रुतयः ते एव वारीणि जलानि तेषां वीचिभिः प्रवाहैः। कर्तृभिः। नद्यः। कर्मभूताः। सद्यः तत्क्षणमेव बहुधा नानाप्रकारेण पुपूरिरे पूरिताः। याः नद्यः पूरिता इति शेषः। तुरगैः अश्वैः। कर्तृभिः। क्षतैः उत्खनितैः धारायाः प्रान्तभूमेः रजोभिः रेणुभिः

---

(७) रणोल्वलैः। (८) वीरप्रभेदैः।
(९) दानाम्बुधि, दानद्रुत। (१) बहुताः।
(२) धरारजोभिस्तुरगक्षतैर्भृतं वाः पङ्कतामेत्य रजस्स्थलीकृतम्, धारा रजोभिस्तुरगैः क्षितिर्भृता या पङ्कतामेत्य रथैः स्थलीकृता।

(३)निम्नाः प्रदेशाः स्थलतामुपागमन्
निम्नत्वमुच्चैरपि (४)सर्वतश्च ते।
तुरङ्गमाणां व्रजतां खुरैः (५)क्षता
रथैर्गजेन्द्रैः परितः (६)समीकृताः ॥ ४४ ॥

नभोदिगन्तप्रतिघोषभीषणै-
र्महामहीभृत्तटदारणोल्बणैः।
(७)पयोधिनिर्धूननकेलिभिर्जगत्
बभूव भेरी(८)ध्वनितैः समाकुलम् ॥४५॥

भृताः व्याप्ताः सत्यः पङ्कस्य भावः तत्ताम्। कर्मभूताम्। एत्य आसाद्य रथैः स्यन्दनैः। कर्तृभिः। स्थलीकृताः स्थलत्वं प्रापिताः। एतेन हस्त्यादीनामसंख्यत्वं प्रतिपादितमिति भावः॥ ४३॥

निम्ना इति॥ व्रजतां धावतां तुरङ्गमाणाम् अश्वानां खुरैः शफैः क्षताः चूर्णिताः। तथा रथैः स्यन्दनैः गजेन्द्रैः गजपतिभिश्च। कर्तृभिः। असमाः समाः सम्पद्यमानाः कृताः समीकृताः। अभूततद्भावे च्विप्रत्ययः। समतां प्रापिता इत्यर्थः। निम्नाः प्रदेशाः निम्नभूमयः। कर्तारः। स्थलस्य समभूमेर्भावः स्थलत्वम्। कर्मभूतम्। तथा सर्वतः चतुर्दिक्षु उच्चैः उन्नता अपि ते प्रदेशाः। कर्तारः। निम्नत्वं निम्नभावम्। कर्मभूतम्। उपागमन् प्राप्तवन्तः॥ ४४॥

नभ इति॥ जगत् भूतलम्। कर्तृ। नभसि गगने दिशां पूर्वादीनाम् अन्तेषु मध्येषु च यः प्रतिघोषः प्रतिशब्दः तेन भीषणैः भयानकैः। तथा महतां महीभृतां पर्वतानां तटानां

---

(३) निम्नप्रदेशाः। (४) सर्वतः स्थलम्, सर्वतस्थलाः।
(५) क्षितौ। (६) समीकृता।
(७) प्रयोविनिर्धूननकेलिभिः, पयोधिनिर्धूतककेलिभिः।
(८) स्वनितैः।

इतस्ततो वात(६)विधूतचञ्चलैः
(१)नीरन्ध्रिताशागमनैर्ध्वजांशुकैः ।
(२)लक्षैः क्वणत्काञ्चनकिङ्किणीकुलै-
रमज्जि धूलीजलधौ (३)नभोगते ॥ ४६ ॥
घण्टारवै रौद्रतरै(४)र्निरन्तरं
विसृत्वरैर्गर्जरवैः सुभैरवैः ।

तटस्थभूमीनां दारणे विदारणे उल्बणैः समर्थैः उद्भटैरिति यावत् । तथा पयोधीनां समुद्राणां यत् निर्धूननं कम्पनं तदेव केलिः क्रीड़ा येषां तथोक्तैः भेरीणां रणवाद्ययन्त्राणां ध्वनितैः शब्दैः । करणैः । समाकुलं परिपूर्णमित्यर्थः । अभूत् बभूव ॥ ४५ ॥

इतस्ततेति । इतस्ततः चतुर्दिक्षु वातेन वायुना । कर्त्रा । विधूनितानि कम्पितानि अतएव चञ्चलानि अस्थिराणि तैः । तथा नीरन्ध्रितं रन्ध्रशून्यं सान्द्रमित्यर्थः । यथा तथा आशासु पूर्वादिदिक्षु गमनं चलनं येषां तथोक्तैः । तथा क्वणन्ति शब्दं कुर्वन्ति काञ्चनकिङ्किणीनां स्वर्णनिर्मितक्षुद्रघण्टानां कुलानि समूहाः येषां तथाभूतैः । तथा लक्षैः लक्षसंख्यकैः असंख्यैरिति भावः । ध्वजानां अंशुकैः । कर्तृभिः । नभोगते आकाशस्थिते धूलीजलधौ रेणुसागरे अमज्जि निमग्नैः भूतम् ॥ ४६ ॥

घण्टेति ॥ मत्ताः मदस्राविणः ये द्विपाः गजाः ऐरावतप्रभृतयः तेषां सम्बन्धिभिः रौद्रतरैः अतिभयङ्करैः घण्टारवैः गललम्बमानघण्टाशब्दैरित्यर्थः । तथा निरन्तरं सर्वदा

---

(६) विधूति । (१) आरोधिताशा ।
(२) लक्षक्वणत्, चलत्क्वणत् । (३) नभोगतैः ।
(४) निरन्तरैः ।

(५)मत्तद्विपानां प्रथयाम्बभूविरे
न वाहिनीनां पटहस्य निःस्वनाः ॥४७॥

करालवाचाल(६)मुखा(७)श्चमूस्वनैः
(८)ध्वस्ताम्बरा वीक्ष्य दिशो रजस्वलाः।
तिरोबभूवे (९)महनैर्दिनेश्वरो
रजोऽन्धकारैः परितः कुतोऽप्यसौ ॥ ४८ ॥

विसृत्वरैः प्रसरद्भिः सु अतिशयेन भैरवैः भयङ्करैः गर्जरवैः गर्जनध्वनिभिः बृंहितैरित्यर्थः। कर्तृभिः। वाहिनीनां रण-सेनानां सम्बन्धिनः पटहस्य रणवाद्यविशेषस्य निःस्वनाः कलकलध्वनयः। कर्मभूताः। न प्रथयाम्बभूविरे प्रकटीकृताः न श्रूयन्ते इत्यर्थः ॥ ४७ ॥

करालेति। चमूनां सैन्यानां स्वनैः चमूकृतकलकल-ध्वनिभिरित्यर्थः। करणैः। करालानि भयङ्कराणि घदर्श-नीयानीत्यर्थः। तथा वाचालानि मुखरितानि मुखानि प्रान्तभागाः यासां तथोक्ताः। तथा ध्वस्तं रजःपूरितमित्यर्थः। अम्बरम् आकाशं वसनञ्चेति ध्वन्यते। यासां तादृशाः। तथा रजस्वलाः रजोयुक्ताः ऋतुमतीश्चेति ध्वन्यते। दिशः पूर्वादीः। कर्मभूताः। वीक्ष्य अवलोक्य असौ दिनेश्वरः दिनमणिः सूर्यः। कर्म। परितः चतुर्दिक्षु महनैः सान्द्रैः रजांस्येव अन्धकाराः तैः। कर्तृभिः। कुतोऽपि तिरोबभूवे तिरोगमितः। रजस्वलादर्शनस्याशास्त्रीयत्वादिति भावः। अत्र समासोक्ति-रलङ्कारः। "समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः। व्यव-हारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः" इति तल्लक्षणात् ॥४८॥

---

(५) मदद्विपानाम्। (६) मुखैः,-खैः। (७) चमूरवैः।
(८) ध्वस्ताम्बराः, ध्वस्तां धराम्। (९) बहले, बहुले।

आक्रान्तपूर्वा रभसेन सैनिकै-
र्दिगङ्गना व्योमरजोऽभिदूषिता।
भेरीरवाणां प्रतिशब्दितैर्घनै-
र्जगर्ज गाढं (१)घनमत्सरादिव ॥ ४९ ॥
गुरुसमीरसमीरितभूधरा
इव गजा गगनं विजगाहिरे।
गुरुतरा (२)इव वारिधरा रथा
भुव (३)मितीह (४)विवर्त (५)इवाभवत् ॥५०॥

आक्रान्तेति॥ दिगेव अङ्गना नारी। कर्त्री। सैनिकैः। कर्तृभिः। रभसेन बलेन पूर्वम् आक्रान्ता धर्षिता आक्रान्त-पूर्वा। एतेन परपुरुषसंसर्गो ध्वन्यते। अतएव व्योमरजोभिः गगनरजोभिः अभिदूषिता सती। ऋतुमतीति ध्वन्यते। घनैः गभीरैः भेरीरवाणां प्रतिशब्दितैः प्रतिध्वनिभिः। करणैः। घनः महान् यः मत्सरः द्वेषः तस्मादिव गाढं भृशं यथा तथा जगर्ज गर्जितवती। उत्प्रेक्षेयम्॥ ४९॥

गुरुसमीरेति॥ गजाः करिणः। कर्तारः। गुरुसमीरेण महावायुना। कर्त्रा। समीरिताः परिचालिताः भूधराः पर्वता इव गगनम्। कर्मभूतम्। तथा रथाः गुरुतराः अतिमहान्तः वारीणां जलानां धराः मेघा इव भुवं भूतलम्। कर्मभूतम्। विजगाहिरे अवगाहनं कृतवन्तः। इति अनेन प्रकारेण इह युद्धगमने विवर्तः विपर्यास इव अभवत् जातः। उत्प्रेक्षेयम्। वृत्तमत्र द्रुतविलम्बितम्। तदुक्तम्—"द्रुतविलम्बितमाह नभौ भरौ" इति॥ ५०॥

---

(१) गुरुमत्सरादिव। (२) बहुवारिभराघनाः।
(३) अतीव। (४) समन्तः। (५) इवाभवन्।

(६)बलवदसुरलोकानल्प(७)कल्पान्तकाले
निरवधय इवाम्भोराशयो (८)घोरघोषाः ।
गुरुतरपरिमज्जद्भूभृतो देवसेनाः
(९)ववृधुरपि (१)सुपूर्णा व्योमभूम्यन्तराले ॥५१॥

बलवदिति ॥ बलवन्तः महान्तः ये असुरलोकाः देवजनाः तेषां सम्बन्धी यः अनल्पः महान् कल्पान्तकालः प्रलयसमयः तस्मिन् । निर्नास्ति अवधिः सीमा येषां ते निरवधयः । तथा घोरः विकटः घोषः स्वनः येषां तादृशाः । तथा गुरुतराः अतिमहान्तः परिमज्जन्तः अवगाहमानाः भुवं पृथिवीं बिभ्रति धारयन्ति ये तथोक्ताः पर्वताः येषु तथोक्ताः अम्भसां जलानां सम्बन्धिनः राशयः समुद्रा इव देवानां सुराणां सम्बन्धिन्यः सेनाः सैनिकाः । कर्त्र्यः । व्योम्नः गगनस्य भूमेः पृथिव्याश्च सम्बन्धिनि अभ्यन्तरे मध्यप्रदेशे सु अतिशयेन पूर्णाः परिपूर्णा अपि ववृधुः वृद्धिं गतवत्यः । उपमालङ्कारः । मालिनीवृत्तमेतत् । तदुक्तम्—"ननमयययुतेयं मालिनी भोगिलोकैः" इति ॥ ५१ ॥

इति श्रीचेतमोहनकृतया मोहिनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये देवसेनाप्रयाणं नाम चतुर्दशः सर्गः ।

---

(६) वरतरसुर । (७) संहारकाले ।
(८) घोरघोराः । (९) ववृधुः ।
(१) सुपूर्णव्योमभूम्यन्तरालाः, समाना व्योम्नि भूम्यन्तराले ।

## पञ्चदशः सर्गः।

सेनापतिं नन्दनमन्धकद्विषो
(१)युधे पुरस्कृत्य बलस्य शत्रवः।
सैन्यैरुपैतीति सुरद्विषां पुरो-
ऽभूत् किंवदन्ती (२)हृदयप्रकम्पिनी ॥१॥

(३)चमूप्रभुं मन्मथमर्दनात्मजं
(४)विजित्वरीभिर्विजयश्रिया श्रितम्।
श्रुत्वा सुराणां पृतनाभि(५)रागतं
(६)चित्ते चिरं चुक्षुभिरे महासुराः ॥२॥

सेनेति ॥ अन्धकम् अन्धकासुरं द्वेष्टि हन्तीति अन्धकद्विट्। अन्धकोपपदात् द्विषधातोः क्विप्प्रत्ययः। तस्य शिवस्य नन्दनं तनयं सेनापतिं पुरस्कृत्य अग्रे स्थापयित्वा बलस्य बलासुरस्य शत्रुरेव शात्रवः। स्वार्थेऽण्प्रत्ययः। इन्द्रः। कर्ता। युधे योद्धुं सैन्यैः स्वसेनाभिः। सह इति पदमूह्यम्। उपैति उपागच्छति। इति एवंप्रकारा हृदयस्य चित्तस्य प्रकम्पिनी भाविविपत्पातादिति भावः। किंवदन्ती जनश्रुतिः। कर्त्री। सुरद्विषां देवहन्तॄणां पुरः संमुखतः अभूत् जाता। सर्वत्र प्रचारित्यर्थः ॥ १ ॥

चमूप्रभुमिति ॥ मन्मथस्य कामस्य। कर्मभूतस्य। मर्दनस्य हन्तुः शिवस्य सम्बन्धिनम् आत्मजं तनयं चमूप्रभुं सेनापतिं श्रिया विजित्वरीभिः विशेषेण जययुक्ताभिः सुराणां देवानां

---

(१) युद्धे। (२) हृदयस्य कम्पिनी। (३)चमूपतिम्। (४) विजित्वराभिः। (५) आहृतम्, आगमम्। (६) चित्तैः।

समेत्य दैत्याधिपतेः(७)पुरे स्थिताः
किरीटबद्धाञ्जलयः प्रणम्य ते ।
न्यवेदयन्मन्मथ(८)शत्रुसूनुना
युयुत्सुना (६)जम्भजितं (१)सहागतम् ॥३॥
दासीकृताशेषजगत्त्रयं (२)न मां
जिगाय युद्धे कतिशः शचीपतिः ।

सम्बन्धिनीभिः पृतनाभिः सेनाभिः। सार्धमिति पदमध्याहार्यम् । विजयस्य पराजयस्य श्रिया लक्ष्म्या। कत्रर्या। श्रितं युक्तं तथा आगतम् उपस्थितं श्रुत्वा आकर्ण्य महान्तः प्रबलपराक्रान्ताः असुराः दैत्याः। कर्तारः। चित्ते अन्तःकरणे चिरं बहुक्षणं चुक्षुभिरे चोभं प्राप्तवन्तः भीता बभूवुरित्यर्थः ॥ २ ॥

समेत्येति ॥ समेत्य मिलित्वा ते पूर्वोक्ताः महासुराः। कर्तारः। दैत्याधिपतेः असुरनायकस्य तारकासुरस्य पुरः संमुखे स्थिताः। तथा किरीटेषु मस्तकेषु बद्धाः रचिताः अञ्जलयः यैः तथोक्ताः सन्तः प्रणम्य नमस्कृत्य युयुत्सुना योद्धुमिच्छुना युद्धार्थिनेति यावत्। मन्मथशत्रुसूनुना शम्भुपुत्रेण कार्तिकेयेन सह सार्धम् आगतम् उपस्थितं जम्भं जम्भासुरं जयति नाशयतीति जम्भजितम्। जम्भोपपदाज्जि धातोः क्विप्। इन्द्रम्। कर्मभूतम्। न्यवेदयन् विज्ञापयामासुः ॥ ३ ॥

दासीति ॥ शच्याः शचीनाम्न्याः नार्याः पतिः स्वामी इन्द्रः युद्धे संग्रामे कतिशः बहुशः अदासं दासं किङ्करं सम्पद्यमानं कृतं दासीकृतं जगतां भुवनानां त्रयं येन तथोक्तम्। अभूततद्भावे च्विप्रत्ययः। माम्। अजेयमिति भावः। न जिगाय न

(७) पुरः।   (८) कुसुमशत्रुना, शत्रुसूनुम्।
(६) जम्भजिता।   (१) समागतम्।   (२) तु, नु।

गिरीशपुत्रस्य बलेन साम्प्रतं
भुवं विजे(३)तेति (४)स काकुतोऽहसत् ॥ ४ ॥

ततः क्रुधा विस्फुरिता(५)धराधरः
स तारको दर्पितदोर्बलो(६)द्धतान् ।
(७)युधे त्रिलोकीजयकेलिलालसः
सेनापतीन् सन्नहनार्थमादिशत् ॥ ५ ॥

महाचमूनामधिपाः समन्ततः
संनह्य सद्यः सुतरामुदायुधाः ।

जेतुं शक्ताकेत्यर्थः । साम्प्रतम् अधुना गिरीशपुत्रस्य हरतनयस्य सम्बन्धिना बलेन भुवं निःसंशयं यथा तथा विजेता विजेष्यते इति काकुतः भिन्नकण्ठध्वनिना अहसत् हास्यं कृतवान् न विजेतेति भिन्नकण्ठरवेणोवाचेत्यर्थः ॥ ४ ॥

तत इति । ततः अनन्तरं त्रिलोक्याः त्रिभुवनस्य जयकेली जयलीलायां जयकर्मणीत्यर्थः । लालसः व्यग्रः जितजगत्त्रय इत्यर्थः । स पूर्वोक्तः तारकः तारकासुरः । कर्ता । क्रुधा रोषेण विस्फुरितः विकम्पितः धराधरः निम्नोष्ठः यस्य तथोक्तः सन् युधे युद्धार्थं युद्धं कर्तुमित्यर्थः । दर्पितं महत् यत् दोष्णां हस्तानां सम्बन्धि बलं तेन उद्धतान् गर्वितान् सेनापतीन् सैन्याध्यक्षान् । कर्मभूतान् । सन्नहनार्थं समुद्योगार्थं आदिशत् आज्ञापितवान् ॥ ५ ॥

महेति । सद्यः आज्ञाक्षणमेव समन्ततः चतुर्दिक्षु संनह्य सज्जीभूत्वा सुतरां भृशं यथा तथा उत् उद्धृतानि आयुधानि अस्त्राणि यैः तथोक्ताः । महाचमूनां महासेनानां

(३) इव, एव । (४) वचाकुतोऽहसत् । (५) ·अधरपल्लवः ।
(६) बलान्, निनाद् । (७) युधे ।

तस्थुर्विनम्रक्षितिपालसङ्कुले
(८)तदङ्गनद्वारवरप्रकोष्ठके ॥ ६ ॥
स द्वारपालेन पुरः प्रदर्शितान्
कृतानतीन् (९)बाहुवरानधिष्ठितान् ।
महाहवाम्भोधिविधूननोद्धतान्
(१)ददर्श (२)राजा (३)पृतनाधिपान् (४)बहून् ॥ ७ ॥
(५)बली बलारातिबलातिशातनं
दिग्दन्ति(६)नादद्रवनाशनक्षमम् ।

सम्बन्धिनः अधिपाः अध्यक्षाः । कर्तारः । विनम्रैः अवनतैः पराजितत्वादिति भावः । क्षितिपालैः नृपतिभिः सङ्कुले आकीर्णे । तस्य तारकस्य यत् अङ्गनस्य चत्वरस्य द्वारं प्रवेशद्वारं तस्य सम्बन्धिनि वरे श्रेष्ठे प्रकोष्ठके अवकाशे तस्थुः स्थितवन्तः । प्रभुप्रतीक्षयेति भावः ॥ ६ ॥

स इति ॥ स राजा तारकासुरः । कर्ता । द्वारपालेन द्वाररक्षकेण । कर्त्रा । पुरः संमुखतः प्रदर्शितान् अयमयमिति ज्ञापितान् । तथा कृता नतिः प्रणामो यैः तथाभूतान् । तथा बाहुषु वरान् श्रेष्ठान् महाबाहून् । तथा महान् प्रबलः यः आहवः युद्धं स एव अम्भोधिः समुद्रः तस्य यत् विधूननं विलोडनं तेन उद्धतान् गर्वितान् । तथा बहून् अनेकान् । पृतनानां सैन्यानां अधिपान् अध्यक्षान् । तथा अधिष्ठितान् संमुखे अवस्थितान् ददर्श अवलोकयामास ॥ ७ ॥

बलीति ॥ अथ अनन्तरं बलस्य बलासुरस्य सम्बन्धि

(८) तदङ्गणद्वारि बहिःप्रकोष्ठके, तदङ्गणद्वारबहिःप्रकोष्ठके
(९) बाहुवरान् । (१) ममन्द । (२) दैत्यः, पश्यन् ।
(३) पृतनामुखान् । (४) निजान् । (५) ततः ।
(६) दानद्रवनाशनक्षमम्, दानद्रवतानिरासनम् ।

(७)महीधराम्भोधिनिवारितक्रमं
ययौ रथं घोरमथाधिरुह्य सः ॥ ८ ॥
युगक्षयक्षुब्धपयोधिनिःस्वना-
श्चलत्पताकाकुलवारितातपाः ।
धरारजोग्रस्तदिगन्तभास्कराः
(८)पतिं प्रयान्तं पृतनास्तमन्वयुः ॥ ९ ॥

अरातेः शत्रोः इन्द्रस्य यत् बलं वीर्यं तस्य । कर्मभूतस्य । शातनं नाशनम् । तथा दिशां पूर्वादीनां सम्बन्धिनः ये दन्तिनः गजाः ऐरावतप्रभृतयः तेषां यः नादः बृंहणं तस्य द्रवस्य मदस्रावस्य । कर्मभूतस्य । नाशनः विनाशकः स्वनः शब्दो यस्य तादृशम् । तथा महीधराः पर्वताः अम्भोधयः समुद्राश्च तैः । कर्तृभिः । न वारितः वारयितुमशक्यः क्रमः गमनं यस्य तथोक्तम् । तथा घोरं भयानकं रथम् । कर्मभूतम् । अधिरुह्य आरुह्य । बलमस्यास्तीति बली बलवान् स तारकः । कर्ता । ययौ जगाम ॥ ८ ॥

युगेति ॥ युगस्य कल्पस्य क्षये अवसाने क्षुब्धः क्षोभं गतः यः पयोधिः सागरः तस्येव निःस्वनः निर्घोषः यासां तथाभूताः । तथा चलन्त्यः स्फुरन्त्यः याः पताकाः ध्वजाः ताभिः आकुलं यथा तथा वारिताः नाशिताः आच्छादिता इत्यर्थः । आतपाः सूर्यकिरणाः याभिः तथोक्ताः । तथा धरायाः पृथिव्याः सम्बन्धिभिः रजोभिः रेणुभिः । करणैः । ग्रस्ताः आवृताः दिशां पूर्वादीनां अन्ताः अवकाशाः भास्करः सूर्यश्च याभिः तथाभूताः पृतनाः तारकसंक्रान्तसेनाः । कर्त्र्यः । प्रयान्तं गच्छन्तं योद्धुमिति भावः । पतिं नायकं तं तारकम् । कर्म । अन्वयुः अनुसृतवन्तः अनुगमनं चक्रुरित्यर्थः ॥ ९ ॥

---

(७) महीधराम्भोध्यनिवारित, महीधराम्भोधिनिवारित ।
(८) प्रति प्रयातुम्, प्रतिप्रयातम् ।

चमूरजः प्राप दिगन्तदन्तिनां
महासुरस्याभिसुरं (२)प्रसर्पिणः।
दन्तप्रकाण्डेषु सितेषु शुभ्रतां
कुम्भेषु (१)दानाम्बुघनेषु पङ्कताम् ॥ १० ॥

महीभृतां कन्दरदारणोल्बणै-
स्तद्वाहिनीनां पटहस्वनैर्घनैः।
(२)उद्वेलिताश्चुक्षुभिरे महार्णवा
नभःस्रवन्ती सहसा(३)व्यवर्धत ॥ ११ ॥

चमूरज इति ॥ सुरान् देवान् अभि प्रतीत्यर्थः। अभिशब्दयोगे द्वितीया। प्रसर्पिणः गच्छतः, महतः असुरस्य तारकस्य सम्बन्धि चमूरजः सेनारेणुः। कर्तृ। दिशां पूर्वादीनां सम्बन्धिनां दन्तिनां गजानाम् ऐरावतप्रभृतीनां सितेषु शुभ्रेषु दन्तानां दशनानां प्रकाण्डेषु शाखासु शुभ्रतां सितत्वं तथा दानानां मदवारीणां यानि अम्बूनि जलानि तैः घनेषु निबिडेषु कुम्भेषु पङ्कस्य कर्दमस्य भावः पङ्कत्वं प्राप गतम् ॥ १०।

महीति। महार्णवाः महासमुद्राः। कर्तारः। महीं पृथिवीं बिभ्रति ये ते महीभृतः पर्वताः। भृधातोः कर्तरि क्विप्प्रत्ययः। तेषां सम्बन्धिनः कन्दरस्य गुहायाः कर्मभूतस्य दारणाः विदारिणः अतएव उल्बणाः अत्युत्कटाः तैः। तस्य तारकासुरस्य याः वाहिन्यः सेनाः तासां घनैः मन्द्रैः पटहानां वाद्यभेदानां स्वनैः ध्वनिभिः उद्वेलिताः अतिक्रान्तवेलाः सन्तः चुक्षुभिरे क्षोभं प्राप्तवन्तः चञ्चलाः बभूवुरित्यर्थः। तथा नभसः आकाशस्य स्रवन्ती गङ्गा मन्दाकिनीत्यर्थः। कर्त्री। सहसा तत्क्षणमेव अभ्यवर्धत वृद्धिं गता ॥ ११ ॥

---

(२) प्रसर्पतः। (१) दानाम्बुधरेषु।
(२) उद्वेजिताः। (३) व्यवर्धत।

सुरारिनाथस्य महाचमूस्वनै-
र्विगाह्यमाना तुमुलैः सुरापगा।
अभ्युच्छ्रितै(४)रूर्मिशतैश्च वारिजै-
रचालयन्नाक(५)निकेतनावलीम्॥ १२॥
अथ प्रयाणाभिमुखस्य नाकिनां
(६)द्विषः पुरस्तादशुभोपदेशिनी।
(७)अगाधदुःखाम्बुधिमध्यमज्जनं
बभूव चोत्पातपरम्परा वत॥ १३॥

सुरेति॥ सुराणां देवानाम् आपगा नदी। कर्त्री। सुरारिनाथस्य दैत्यपतेः तारकस्य सम्बन्धिभिः तुमुलैः सङ्कुलैः महाचमूनां महासेनानां स्वनैः निर्घोषैः। कर्तृभिः। विगाह्यमाना आलोड्यमाना सती। वारिजैः पद्मैः सह वर्तमानैरिति शेषः। था अभ्युच्छ्रितैः अभ्युन्नतैः कूलमिति शेषः। ऊर्मिशतैः तसंख्यकतरङ्गैः नाकस्य स्वर्गस्य यत् निकेतनं भवनं तस्य सम्बन्धिनीम् आवलीं श्रेणीम् अचालयत् चालितवती आर्द्रीकारेत्यर्थः॥ १२॥

अथेति॥ अथ अनन्तरं प्रयाणे युद्धयात्रायाम् अभिमुखस्य उद्यतस्य, नाकोऽस्ति येषां तेषां स्वर्गवासिनां देवानां सम्बन्धिनः द्विषः शत्रोः तारकस्य पुरस्तात् अग्रतः अशुभस्य मङ्गलस्य कर्मभूतस्य उपदेशिनी शंसिनी तथा अगाधः अत-

(४) ऊर्मिशतैरवारितैः। (५) निकेतनावलीः।

(६) द्विषः पुरस्तादशुभोघदायिनी, पताकिनीं प्रत्यसुरेस्य हि।

(७) अगाधदुःखाम्बुधिमध्यमज्जनं बभूव चोत्पाततति विंतती, मुहुर्महारिष्टपरम्परा परा परापतन्मृत्युमहापतानी।

(८)आगामिदैत्याशनकेलिकाङ्क्षिणी
(९)कुपक्षिणां घोरतरा परम्परा ।
दधौ पदं व्योम्नि सुरारिवाहिनी-
रुपर्युपर्येत्यनिवारितातपा ॥ १४ ॥

मुहु(१)र्विभग्नातपवारणध्वज-
स्खलद्वराधूलिकुलाकुलेक्षणः ।
(२)धुताश्वमातङ्गमहारथाकरा-
नवेक्षणोऽभूत्प्रसभं प्रभञ्जनः ॥ १५ ॥

लक्षणार्थः यः दुःखाम्बुधिः दुःखसागरः तस्मिन् मज्जनं मज्जनहेतुः, उत्पातस्य अशुभस्य परम्परा आवली बभूव च। वर्त्तति खेद-सूचकमव्ययम् ॥ १३ ॥

आगामीति ॥ घोरतरा अतिभयानका। भविष्यदमङ्गल-सूचनादिति भावः। तथा आगामिनः भाविनः दैत्यानाम् असुराणाम् अशनकेलेः मांसभक्षणक्रीड़ायाः मांसभोजन-कर्मण इत्यर्थः। काङ्क्षिणी प्रार्थिनी, कुपक्षिणाम् अमङ्गल-सूचकपक्षिकुलानां सम्बन्धिनी परम्परा श्रेणी। कर्त्री। सुराणां देवानाम् अरीणां शत्रूणां वाहिनीः सेनाः उपरि उपरि एत्य आगत्य निवारितः आहृतः आतपः सूर्यकिरणः यया तथोक्ता सती व्योम्नि गगने पदं स्थानं दधौ खे विचचारेत्यर्थः ॥ १४ ॥

मुहुरिति ॥ प्रभञ्जनः वायुः। कर्त्ता। मुहुः पुनःपुनः प्रसभं सहसा च विभग्नाः विशेषेण भग्नाः आतपवारणाः छत्राः

---

(८) भविष्यदैत्याशनकेलिकामिनी। (९) खपक्षिणाम्।

(१) विभिन्न।

(२) धुताश्वमातङ्गमहारथव्रजोऽनवेक्षणोऽभूत्, अनाश्वमातङ्गमहारथव्रजानवेक्षमाणः।

सद्योविभिन्नाञ्जनपुञ्ज(३)तेजसः
मुखैर्विषाग्निं विकिरन्त उच्चकैः ।
पुरः (४)पथोऽतीत्य महाभुजङ्गमा
भयङ्कराकारभृतो भृशं ययुः ॥ १६ ॥

मिलन्महाभीमभुजङ्गभीषणां
प्रभुर्दिनानां परिवेषमादधौ ।
महासुरस्य द्विषतो(५)ऽतिमत्सरा-
(६)द्विवान्तमासूचयितुं भयङ्करः ॥१७॥

तथा ध्वजाः पताकाः येन तथोक्तः । तथा चलन्ति यानि धरा-धूलिकुलानि पृथिवीरजःपुञ्जानि तैः । करणैः । आकुलानि व्याकुलानि ईक्षणानि नयनानि लोकानामिति भावः । येन तथाभूतः । तथा धुताः कम्पिताः ये अश्वाः घोटकाः, मातङ्गाः गजाः, महारथाः महास्यन्दनाश्च तेषाम् आकरस्य समूहस्य अनवेक्षणः अदर्शनः अदर्शनकारीत्यर्थः । अभूत् जातः । अशुभलक्षणमेतत् ॥ १५ ॥

सद्य इति ॥ भयङ्कराकारं भीषणभोगं बिभ्रति ये तथोक्ताः । भृधातोः क्विप्प्रत्ययः । महान्तः भुजङ्गमाः सर्पाः । कर्तारः । विभिन्नस्य मर्दितस्य अञ्जनपुञ्जस्येव तेजो येषां तथोक्ताः । तथा मुखैः वदनैः । करणैः । उच्चकैः महान् विष एव अग्निः अनलः तं विकिरन्तः विशेषेण वमन्तः सन्तः पुरः अग्रतः पथः मार्गान् अतीत्य उल्लङ्घ्य भृशं शीघ्रं ययुः जग्मुः ॥ १६ ॥

मिलदिति । दिनानां प्रभुः दिनेश्वरः सूर्यः । कर्ता । द्विषतः शत्रुभूतस्य, महतः प्रबलस्य असुरस्य तारकस्य अति-मत्सरात् अतिद्वेषादिव अन्तं विनाशम् आसूचयितुं कथयितुं

---

(३) सन्निभाः । (४) परोत्थान ।
(५) नु मत्सरात्, न मत्सरात् ।
(६) आत्तमात्मं प्रयतुर्भयङ्करम्, आत्तमात्मप्रयतुर्भयङ्कराः ।

त्विषामधीशस्य (७)पुरोऽधिमण्डलं
शिवाः समेताः परुषं ववासिरे ।
(८)सुरारिराजस्य रणान्तशोणितं
प्रसह्य पातुं द्रुतमुत्सुका इव ॥ १८ ॥
दिवापि तारास्तरला(९)स्तरस्विनीः
परापतन्तीः परितो(१)ऽथ वाहिनीः ।
विलोक्य (२)लोको मनसा (३)व्यचिन्तयत्
(४)प्राणव्ययान्तं व्यसनं सुरद्विषः ॥ १९ ॥

भयङ्करः भीषणः सन्, मिलन् कुण्डलीभवन् महाभीमः अतिभीषणः यः भुजङ्गः सर्पः स इव भीषणः तथोक्तः परिवेषं परिधिम् आदधौ धृतवान् । कुलकमेतत् ॥ १७ ॥

त्विषामिति ॥ शिवाः शृगाल्यः । कर्तारः । त्विषाम् अधीशस्य तेजोनिधेः मार्तण्डस्य पुरः अग्रतः अधिमण्डलं मण्डलाकारेण समेताः सङ्गताः सत्यः सुरारिराजस्य दैत्यपतेः तारकस्य सम्बन्धि रणान्तशोणितं संग्रामावसानरुधिरं प्रसह्य सहसा पातुं पानं कर्तुं द्रुतं सत्वरम् उत्सुका इव उत्कण्ठिता इव परुषं कर्कशं यथा तथा ववासिरे शब्दं कृतवत्यः ॥ १८ ॥

दिवापीति ॥ अथ अनन्तरं लोकः तत्रत्यजनः दिवापि दिनेऽपि तरलाः चञ्चलाः तथा तरः वेगोऽस्ति यासां तथोक्ताः ताराः नक्षत्राणि । कर्मभूताः । वाहिनीः सेनाः परितः समन्ततः । परितःशब्दयोगे द्वितीया । परापतन्तीः परापतनशीलाः विलोक्य निरीक्ष्य मनसा चित्तेन सुरद्विषः तारका

---

(७) पुरोऽभिमण्डलम् । (८) सुराधिराजस्य ।
(९) तदानिशम् । (१) अभिवाहिनीम् ।
(२) लोकाः । (३) व्यचिन्तयन् ।
(४) प्राणात्ययान्तम् ।

(५)ज्वलद्भिरुच्चैरभितः प्रभाभरै-
रुद्भासिताशेषदिगन्तराम्बरम् ।
रवेण रौद्रेण (६)हृदन्तदारणं
पपात वज्रं नभसो निरम्बुदात् ॥ २० ॥
ज्वलद्भिरङ्गार(७)चयैर्नभस्तलं
ववर्ष गाढ़ं सह शोणिताखिभिः ।
(८)धूमं ज्वलन्त्यो व्यसृज(९)न्मुखे रजो
दधुर्दिशो रासभकण्ठधूसरम् ॥ २१ ॥

मुरस्य प्राणव्ययः प्राणविनाशः अन्तः अवसानं यस्य तथोक्तं व्यसनम् उत्पातं व्यचिन्तयत् विशेषेण चिन्तयामास ॥ १८ ॥

ज्वलद्भिरिति ॥ वज्रम् अशनिः । कर्तृ । अभितः चतुर्दिक्षु उच्चैः भृशं यथा तथा ज्वलद्भिः, प्रभायाः तेजसः भरैः पुञ्जैः । कर्तृभिः । उद्भासितं प्रदीपितम् अशेषं समग्रं दिशां पूर्वादीनाम् अन्तरम् अवकाशः, अम्बरं गगनञ्च यस्य तथाभूतम् । तथा रौद्रेण भीषणेन रवेण ध्वनिना हृदन्तस्य हृदयस्य दारणं विदारणं सत्, न सन्ति अम्बुदाः जलदाः यत्र तथोक्तात् नभसः गगनतलात् पपात पतितम् । अकारणरजःपातोऽशुभसूचकः इति भावः ॥ २० ॥

ज्वलद्भिरिति ॥ नभस्तलम् आकाशम् । कर्तृ । शोणिताखिभिः रुधिरकङ्कालैः, तथा ज्वलद्भिः प्रज्वलद्भिः अङ्गाराणाम् अलातानां चयैः पुञ्जैः सह सार्धम् । सहयोगे तृतीया । गाढं भृशं यथा तथा ववर्ष अवर्षत् । तथा दिशः पूर्वादयः । कर्त्र्यः । ज्वलन्त्यः दीप्यमानाः सत्यः मुखैः । करणैः । धूमम् । कर्मभूतम् । व्यसृजन् ससृजुः । तथा रासभस्य गर्दभस्य सम्बन्धि कण्ठं

(५) ज्वलद्भिः । (६) दिगन्तदारणम् ।
(७) भरैः । (८) धूम्रम् । (९) मुखे ।

निर्घातघोषो (१)गिरिशृङ्गशातनो
(२)घनोऽम्बराशाकुहरोदरम्भरिः ।
बभूव (३)भूम्ना श्रुतिभित्तिभेदनः
प्रकोपिकालार्जित(४)गर्जितर्जनः ॥ २२ ॥
(५)स्खलन्महेभं (६)प्रपतत्तुरङ्गमं
परस्पराश्लिष्टजनं समन्ततः ।

ग्रीवा तद्वत् धूसरं धूसरवर्णं रजः रेणुं दधुः धृतवत्यः ॥ २१ ॥

निर्घातेति ॥ घनः मेघः । कर्तृभूतः । निर्घातः अधःपतनशीलो मरुताहतो वायुसम्भव आकाशोत्थितशब्दभेदः स इव घोषः शब्दः यस्य तथोक्तः । तथा गिरिशृङ्गाणां पर्वतशिखराणाम् । कर्मभूतानाम् । शातनः विदारकः । तथा अम्बरस्य गगनस्य आशानां पूर्वादीनां दिशाञ्च यत् कुहरं रन्ध्रं तदेव उदरं तद्बिभर्त्ति पूरयतीति तादृशः । तथा भूम्ना आधिक्येन श्रुतिः कर्णशष्कुली सैव भित्तिः कुड्यं तस्य । कर्मभूतस्य । भेदनः विदारकः । तथा प्रकोपोऽस्ति यस्य तेन अतिरुष्टेन कालेन यमेन । कर्त्रा । अर्जिता उपार्जिता कृतेत्यर्थः । या गर्जिः गर्जनं तस्य । कर्मभूतस्य । तर्जनः भर्त्सनः सन् बभूव उदियायेत्यर्थः ॥ २२ ॥

स्खलदिति ॥ द्वेष्टीति द्विट् तथोक्तस्य । द्विषधातोः कर्तरि क्विप् । शत्रोः तारकासुरस्य बलं सैन्यम् । कर्तृ । प्रक्षुभ्यन् सञ्चलन् अम्भोधिः सागरः तथा विभिन्नः विभेदं विश्लेषं गच्छन् भूधरः अचलः यस्मात् तथोक्तात्, अवनेः पृथिव्याः प्रकर्षेण कम्पात् विधूननात् हेतोः । भूकम्पनस्य दुरुत्पातसूचकत्वा-

(१) गिरिशृङ्गघातनः, गिरिशृङ्गशातनैः ।
(२) धराम्बराशाकुहरोदरम्भरिः, घनैर्वराशाकुहरोदरम्भरिः । (३) भूमा । (४) गर्जितस्तनः, गर्जितर्जनः ।
(५) चलन् । (६) प्रपतत्तुरङ्गमम् ।

(७)प्रक्षुभ्यदम्भोधिविभिन्न(८)भूधरात्
(९)बलं त्विषोऽभूद्ध्वनि(१)प्रकम्पात् ॥२३॥
ऊर्ध्वीकृतास्या रविदत्तदृष्टयः
समेत्य सर्वे सुरविद्विषः पुरः ।
श्वानः स्वरेण श्रवणान्त(२)शातिना
मिथो रुदन्तः करुणेन निर्ययुः ॥ २४ ॥
(३)अपीति पश्यन् परिणामदारुणां
(४)महत्तमां गाढ़मरिष्टसन्ततिम् ।

दिति भावः । स्खलन्तः पतनं गच्छन्तः महेभाः महाकरिणः यस्य तादृशम् । तथा प्रपतन्तः प्रस्खलन्तः तुरङ्गमाः घोटकाः यस्य तथोक्तम् । तथा समन्ततः चतुर्दिक्षु परस्परम् अन्योन्यम् आश्लिष्टाः उपर्युपरि पतिता इत्यर्थः । जनाः पदातयः यस्य तथोक्तम् अभूत् जातम् ॥ २३ ॥

ऊर्ध्वीकृतेति ॥ सर्वे अनेके श्वानः सारमेयाः । कर्तारः । सुराणां देवानाम् । कर्मभूतानाम् । विद्विषः शत्रोः तारकासुरस्य पुरः अग्रतः समेत्य सङ्गत्य ऊर्ध्वीकृतानि उच्चीकृतानि आस्यानि मुखानि यैः तथोक्ताः । तथा रवौ मार्तण्डे दत्ता स्थापिता दृष्टिः यैः तादृशाः । तथा करुणेन कातरतासूचकेन अतएव श्रवणान्तस्य कर्णविवरस्य शातिना विदारकेण श्रवणकठोरेण इत्यर्थः । स्वरेण शब्देन । करणेन । मिथः अन्योन्यं रुदन्तः क्रन्दन्तः सन्तः निर्ययुः निर्जग्मुः ॥ २४ ॥

अपीति ॥ असुरः दैत्यः तारकासुरः । कर्तृभूतः । दुर्दैवदष्टः

---

(७) संक्षुभ्यत । (८) भूधरम् । (९) पुरः ।
(१) प्रकम्पनम्, प्रकम्पतः । (२) पातिना ।
(३) इति प्रपश्यन् । (४) महत्तराम् ।

दुर्दैव(५)दृष्टो न (६)खलु (७)न्यवर्तत

क्रुधा प्रयाणव्यवसायतोऽसुरः ॥ २५ ॥

अरिष्टमाशङ्क्य विपाकदारुणं

(८)निवार्यमाणो(९)ऽपि बुधै(१)र्महासुरः ।

पुरः प्रतस्थे महतां वृथा भवे-

दसद्ग्रहान्धस्य (२)हितोपदेशनम् ॥ २६ ॥

दुरदृष्टहतः अतएव गाढ़ं भृशं यथा तथा परिणामे उत्तरकाले दारुणां भयङ्करीं तथा महत्तमां अत्यन्तमहतीं अनिष्टानां उत्पातानां सन्ततिं परम्परां पश्यन् अवलोकयन् सन्नपि क्रुधा कोपेन हेतुना प्रयाणस्य प्रस्थानस्य यः व्यवसायः उद्योग तस्मात्। पञ्चमीस्थाने तस्प्रत्ययः। न न्यवर्तत न निवृत्ते खलु ॥ २५ ॥

अरिष्टमिति ॥ महान् प्रबलः असुरः दैत्यः तारकासुरः। कर्ता। अरिष्टं पूर्वोक्तोत्पातं विपाकदारुणं उत्तरकालभयङ्करं आशङ्क्य विभाव्य बुधैः मन्त्रिप्रभृतिभिः पण्डितजनैः। कर्तृभिः। निवार्यमाणः युद्धस्याकर्तव्यतया निषिध्यमानः सन्नपीत्यर्थः। पुरः अग्रतः। युद्धार्थमिति भावः। प्रतस्थे जगाम। अर्थान्तरन्यासेन तत्कारणमाह— महतामिति। हीति पदमूह्यम्। तथाहि महतां महद्भिः कृतमित्यर्थः। असद्ग्रहेण कुग्रहेण अन्धस्य जड़ीकृतबुद्धेः सम्बन्धिनः हितस्य मङ्गलस्य उपदेशनं उपदेशः। कर्तृ। वृथा विफलं भवेत् स्यात् ॥ २६ ॥

अथ चितावित्यादिभिः पञ्चभिः श्लोकैः पञ्चमहोत्पातानाह—

---

(५) दृष्टः। (६) खलः। (७) निवर्तते।
(८) निवार्यमाणैः। (९) विबुधैः, विविधैः।
(१) महासुरैः। (२) हितोपदेशना, हितोपदेशिता।

क्षितौ निरस्तं प्रतिकूलवायुना
तदीयचामीकरघर्मवारणम् ।
रराज मृत्योरिव पारणाविधौ
प्रकल्पितं (३)हाटकभाजनं महत् ॥ २७ ॥

विजानता भावि शिरो(४)निकृन्तनं
(५)प्रज्ञेन शोकादिव तस्य मौलिना ।
मुहुर्गलद्भिस्तरलैरलन्तरा-
मरोदि मुक्ताफलबाष्पविन्दुभिः ॥ २८ ॥

क्षिताविति ॥ प्रतिकूलेन प्रतीपेन वायुना प्रभञ्जनेन । कर्त्रा । क्षितौ धरातले निरस्तं पातितम् । निःपूर्वादसधातोः कर्मणि क्तप्रत्ययः । तस्येदं तदीयं तत्सम्बन्धि चामीकरस्य सुवर्णस्य सम्बन्धि, घर्मं आतपं वारयतीति तथोक्तं स्वर्णनिर्मितातपत्रमित्यर्थः । कर्तृ ॥ मृत्योः यमस्य सम्बन्धी यः पारणाविधिः भोजनक्रियाव्यापारः तस्मिन् प्रकल्पितं विरचितं महत् विस्तृतं, हाटकस्य सुवर्णस्य पात्रमिव रराज दिदीपे । उत्प्रेक्षालङ्कारः ॥ २७ ॥

विज्ञेति ॥ प्रकृष्टं जानातीति प्रज्ञः । प्रपूर्वात् ज्ञाधातोर्डप्रत्ययः । तेन पण्डितेन । अतएव भावि भविष्यत्, शिरसः मस्तकस्य निकृन्तनं छेदनम् । कर्मभूतम् । विजानता बुध्यमानेन तस्य तारकासुरस्य सम्बन्धिना मौलिना किरीटेन । कर्त्रा । शोकात् भाविप्रभुमस्तकच्छेदनदुःखादित्यर्थः । हेतौ तृतीया । मुहुः पुनःपुनः गलद्भिः पतद्भिः तथा तरलैः चञ्चलैः

---

(३) राजतपानभाजनम् । (४) विकर्तनम् ।
(५) सत्तेन, प्रज्ञेन ।

निवार्यमाणैरभितोऽनुयायिभि-
र्गृहीतुकामैरिव तं मुहुर्मुहुः ।
अपाति गृध्रै(६)रभि मौलिमाकुलै-
(७)र्भविष्यदेतन्मरणोपदेशिभिः ॥ २९ ॥

सद्योनिकृत्ताञ्जन(८)सोदरद्युतिं
फणामणिप्रज्वलदंशुमण्डलम् ।
निर्यद्विषो(९)ल्कानलगर्भफूत्कृतं
ध्वजे जनस्तस्य महाहिमैक्षत ॥ ३० ॥

मुक्ताफलैरेव बाष्पबिन्दुभिः अनवरतं भृशं यथा तथा परोदि-तमिव । उत्प्रेक्षालङ्कारः । उत्पातोऽयमिति भावः ॥ २८

निवार्येति ॥ भविष्यन् भावी यः एष तारकः तस्य मरणस्य मृत्योः उपदेशिभिः बोधयद्भिः । तथा आकुलैः मक्षणार्थं व्यग्रैरित्यर्थः । गृध्रैः मांसाशिपक्षिभेदैः । कर्तृभिः । तथा अभितः समन्ततः अनुयायिभिः अनुसरद्भिः । अतएव मुहुर्मुहुः वारंवारं निवार्यमाणैः निषिध्यमानैरपि । भृत्यैः कर्तृभिरिति शेषः । तम् । कर्मभूतम् । ग्रहीतुम् आदातुं कामः अभिलाषः येषां तथोक्तैरिव । उत्प्रेक्षेयम् । मौलिं किरीटम् अभि अभिमुखं मौलिमुद्दिश्येत्यर्थः । अपाति पतितम् । भावे लुङ् । अपरोत्पातोऽयम् ॥ २९ ॥

सद्य इति ॥ जनः लोकः । कर्ता । "लोकस्तु भुवने जने" इत्यमरः । तस्य तारकासुरस्य सम्बन्धिनि ध्वजे पताकायां ध्वजोपरीत्यर्थः । सद्यः तत्क्षणमेव निकृत्तस्य पातितस्य सद्योजातत्वादुज्ज्वलस्येत्यर्थः । अञ्जनस्य कज्जलस्य सोदर

---

(६) अभिमौलि चाकुलैः । (७) तदात्मनश्चाशुभमपायदर्शिभिः
(८) सोदरं क्वचित् । (९) उल्कानल ।

(१)रथाश्वकेशावलिकार्ष्ण(२)चामरं
ददाह बाणासन(३)बाणबाणधीन्।
(४)अकाण्डतश्चण्डतरो हुताशन-
स्तस्यातनुस्यन्दन(५)धूर्य्यगोचरः ॥ ३१ ॥
(६)इत्याद्यरिष्टैरशुभोपदेशिभि-
र्विहन्यमानोऽप्यसुरः पुनःपुनः।

सदृशी द्युतिः कान्तिः यस्य तथोक्तं, कज्जलवत् कृष्णवर्ण-मित्यर्थः। तथा फणानाम् आभोगानां सम्बन्धिनः ये मणयः रत्नानि तैः। करणैः। प्रज्वलत् दीप्तिमत् अंशुमण्डलं किरण-जालं यस्य तथाभूतम्। तथा निर्यत् निर्गच्छत् विषं गरलमेव उल्कानलः गर्भे मध्ये येषां तथोक्तानि फूत्कृतानि फूत्काराः यस्य तादृशं, महान् यः अहिः सर्पः तम्। कर्मभूतम्। ऐक्षत दृष्टवान्। अन्योऽयं महोत्पातः ॥ ३० ॥

रथेति ॥ तस्य तारकासुरस्य सम्बन्धी यः अतनुः महान् स्यन्दनः रथः तस्य यः धूर्य्यः अग्रप्रदेशः तस्य गोचरः तत्स्थित इत्यर्थः। तथा चण्डतरः अतिभीषणः, हुतं घृतादि अश्नातीति हुताशनः अनलः। कर्त्ता। अकाण्डतः असमये। रथानां स्यन्दनानाम्, अश्वानां घोटकानाञ्च सम्बन्धिन्याः केशावल्याः, कार्ष्णचामराणाञ्च समाहारः तत्। प्राण्यङ्गत्वादेकवचनम्। तथा बाणः शरः अस्यते क्षिप्यतेऽनेन बाणासनं धनुः। करणे ल्युट्। बाणाः शराः, बाणधिः तूणीरश्च तथोक्तान्। कर्म-भूतान्। ददाह भस्मीचकार। अयमेको महोत्पातः ॥ ३१ ॥

इतीति ॥ मदान्धः गर्व्वोद्धतः असुरः तारकः। कर्त्ता। अशु-भानाम् अमङ्गलानाम्। कर्मभूतानाम्। उपदेशिभिः सूचकैः।

---

(१) रथस्य। (२) चामरान्। (३) बालबालधीन्।
(४) अखण्डनः। (५) धूर्य्युगोद्गतः।
(६) इत्याद्यनिष्टैः, इत्यादिरिष्टैः।

यदा मदान्धो (७)न गताद्व्यवर्तता-
(८)म्बरात्तदाभून्महतां सरस्वती ॥ ३२ ॥
मदान्ध मा गा भुजदण्डचण्डिमा-
वलेपतो (६)मन्मथहन्तृसूनुना ।
सुरैः (१)सनाथेन पुरन्दरादिभिः
समं समन्तात् (२)समरं विजित्वरैः ॥३३॥
(३)गुहोऽसुरैः षड्दिनजातमात्रको
निदाघधामेव निशातमोभरैः ।

इत्यादिभिः पूर्वोक्तैः परिष्टैः महोत्पातैः । कर्तृभिः । पुनःपुनः वारंवारं यथा तथा विहन्यमानः ताड्यमानोऽपि सन् यदा गतात् गमनात् युद्धयात्राया इत्यर्थः । भावे क्तप्रत्ययः । न न्यवर्तत न पराङ्मुखो बभूव । तदा अम्बरात् गगनात् महतां देवानां सम्बन्धिनी सरस्वती वाणी अभूत् बभूव ॥ ३२ ॥

मदान्धेति ॥ हे मदान्ध मदगर्वित । त्वमिति कर्तृपदमूह्यम् । भुजदण्डयोः बाहुदण्डयोः यः चण्डिमा प्रचण्डत्वं तेन अवलेपात् गर्वात् हेतोः । पञ्चमीस्थाने तसप्रत्ययः । विजित्वरैः विजयशीलैः, पुरन्दरः इन्द्रः आदिः प्रथमः येषां तथोक्तैः सुरैः देवैः समन्तात् परितः सनाथेन युक्तेन, मन्मथहन्ता हरः तस्य सम्बन्धिना सूनुना कुमारेण समं सह समरं संग्रामम् । कर्मभूतम् । कर्तुमित्यर्थः । मा गाः मा याहि ॥३३॥

गुह इति ॥ निशायाः रजन्याः यत् तमः अन्धकारः तस्य सम्बन्धिभिः भरैः संघैः । कर्तृभिः । निदाघधामा उष्णरश्मिरिव ।

---

(७) न च विन्यवर्तत, न गतः स वर्त्मना ।
(८) अम्बरे । (६) मन्मथशत्रु ।
(१) सनाथैस्त्रिदिवेश्वरादिभिः, सनाथैस्त्रिदशेश्वरादिभिः ।
(२) समरे । (३) महासुरैः, सुरासुरैः ।

(१)विषह्यते (२)नाभिमुखो (३)हि सङ्गरे
कुत(४)स्त्वया (५)तस्य समं विरोधिता ॥३४॥
अभ्रंलिहैः शृङ्गशतैः समन्ततो
(६)दिक्चक्रवालैः स्थगितस्य भूभृतः।
क्रौञ्चस्य रन्ध्रं (७)विशिखेन निर्ममे
येनाहवस्तस्य सह त्वया कुतः ॥३५॥

असुरैः दैत्यैः। कर्तृभिः। सङ्गरे संग्रामे अभिमुखः, षट्सु दिनेषु जात एव षड्दिनजातमात्रकः। अल्पार्थे कप्रत्ययः। अत्यल्पवयस्क इत्यर्थः। गुहः कार्तिकेयः। कर्मभूतः। नहि विषह्यते नैव सोढुं शक्यते। त्वया सामान्यदैत्येनेत्यर्थः। समं सार्धं तस्य गुहस्य, विरोधिनः शत्रोः भावः तत्ता। कर्त्री। कुतः कथम्। न सम्भवेदित्यर्थः। प्रबलेन सह शत्रुतानर्थकरीति भावः। उपमालङ्कारः ॥ ३४ ॥

अभ्रमिति ॥ येन गुहेन। कर्त्रा। अभ्रं गगनं लिहन्ति स्पृशन्तीति तथोक्तैः, शृङ्गशतैः शतसंख्यकशृङ्गैः। तथा दिशां पूर्वादीनां सम्बन्धिभिः चक्रवालैः मण्डलैः स्थगितस्य आच्छादितदिङ्मण्डलस्येत्यर्थः। क्रौञ्चस्य क्रौञ्चसंज्ञकस्य भूभृतः अचलस्य सम्बन्धि रन्ध्रं छिद्रम्। कर्मभूतम्। विशिखेन एकमात्रशरेणेत्यर्थः। करणेन। निर्ममे कृतम्। कर्मणि लट्। त्वया सह। सहयोगे तृतीया। तस्य पर्वतरन्ध्रकारिण इत्यर्थः। गुहस्य सम्बन्धी आहवः युद्धं कुतः। न सम्भवेदिति भावः ॥ ३५ ॥

---

(१) विमुह्यते। (२) सोऽभिमुखम्, योऽभिमुखम्।
(३) न। (४) त्वियम्। (५) तेन।
(६) दिक्चक्रवालस्थगितस्य, दिक्चक्रवालस्थगतस्य।
(७) सशरैर्विनिर्ममे येनाहवे तेन कुतः समो भवान्।

लब्ध्वा धनुर्वेदमनङ्गविद्विष-

स्त्रिःसप्तकृत्वः समरे महीभुजाम् ।

(८)कृत्वाभिषेकं रुधिराम्बुभिर्घनैः

स्वक्रोधवह्निं शमयाम्बभूव यः ॥ ३६ ॥

न जामदग्न्यः क्षयकालरात्रिकृत्

स क्षत्रियाणां समराय वल्गति ।

येन त्रिलोकी(९)सुभटेन तेन ते

कुतो(१)ऽवकाशः सह (२)विग्रहग्रहे ॥३७॥

अथ श्लोकद्वयेन युग्मकमाह—

लब्ध्वेति ॥ नेति च ॥ नास्ति अङ्गं देहो यस्य तथोक्तः कामः तस्य कर्मभूतस्य विद्विषः हन्तुः हरस्य सकाशादिति शेषः । धनुर्वेदं संग्रामविद्याम् । कर्मभूतम् । लब्ध्वा आसाद्य त्रिसप्तकृत्वः एकविंशतिवारं समरे संग्रामे महीभुजां पृथिवीपालयितॄणां राज्ञां सम्बन्धिभिः घनैः सान्द्रैः रुधिराणि शोणितान्येव अम्बूनि जलानि तैः । करणभूतैः । अभिषेकं स्नानं पितृतर्पणमित्यर्थः । कर्मभूतम् । कृत्वा सम्पाद्य स्वस्य आत्मनः सम्बन्धी क्रोधः कोप एव वह्निः अनलः तं पितृनिधनजनितमित्यर्थः । कर्मभूतम् । शमयाम्बभूव निर्वापितवान् । तथा क्षत्रियाणां क्षत्रियजातीनां क्षयस्य नाशस्य कालरात्रिं प्रलयं करोतीति तथाभूतः स जामदग्न्यः । कर्त्ता । येन कार्त्तिकेयेन सह साधम् । सहार्थे तृतीया । समराय युद्धाय समरं कर्त्तुमित्यर्थः । न वल्गति धावति समर्थो भवतीत्यर्थः । तेन त्रिलोक्याः त्रिभुवनस्य सम्बन्धिना सुभटेन

---

(८) कृताभिषेकः । (९) तिलकेन ।

(१) अवकाशौ, अवकेशी । (२) विग्रहग्रहः ।

त्यजाशु (३)गर्वं मदमूढ माऽस्म गाः
स्मरारिसूनोर्वरशक्तिगोचरम्।
तमेव नूनं शरणं व्रजाधुना
(४)जगत्सुवीरं (५)स चिराय जीव तत्॥३८॥

श्रुत्वेति वाचं वियतो (६)गरीयसीं
क्रोधादहङ्कारपरो महासुरः।
प्रकम्पिताशेषजगत्त्रयोऽपि (७)स-
(८)न्नकम्पतोच्चैर्दिव(९)मभ्यधाच्च सः॥३९॥

सुवीरेण गुहेन सह माधं ते तव सम्बन्धिनि विग्रहस्य समरस्य ग्रहे निर्बन्धे विषये अवकाशः उद्यमः कुतः कथम्, तेन सह विग्रहो न कर्तव्य इत्यर्थः॥ ३६॥ ३७॥

त्यजेति॥ हे मदमूढ गर्वान्ध। त्वमिति कर्तृपदमाहर्तव्यम्। आशु सत्वरं यथा तथा गर्वम् अहङ्कारम्। कर्मभूतम्। त्यज, गर्वं मा कुर्वित्यर्थः। स्मरस्य कामस्य सम्बन्धिनः अरेः शत्रोः हरस्य सम्बन्धिनः सूनोः तनयस्य वरायाः महत्याः शक्तेः बलस्य गोचरं विषयं मास्म गाः न गच्छ। मास्मशब्दयोगे लोट्स्थाने लुङ्, अमागमाभावश्च। अधुना इदानीं तं जगतां भुवनानां सम्बन्धिनं सुवीरम् अद्वितीयभटं नूनं निश्चितं यथा तथा शरणं रक्षितारं व्रज गच्छ। तत् तच्छरणागतत्वात् त्वं चिराय चिरकालं जीव दीर्घजीवी भवेत्यर्थः॥ ३८॥

श्रुत्वेति॥ स महान् प्रबलः असुरः दैत्यः तारकः। कर्ता। इति पूर्वोक्तां, वियतः आकाशस्य गरीयसीं महत्तरां वाचं वाक्यं श्रुत्वा आकर्ण्य अहङ्कारे दर्पे परः उद्धतः। अतएव

---

(३) दर्पम्। (४) जगत्प्रवीरम्। (५) सुचिराय।
(६) वरीयसीम्। (७) सः।
(८) नाकम्पत, प्राकम्पत। (९)अभ्यधात्ततः, अभ्यगात्ततः।

किं ब्रूथ (१)रे व्योमचरा महासुराः
(२)स्मरारिसूनुप्रतिपक्षवर्तिनः ।
मदीयबाणव्रण(३)वेदना हि सा-
धुना कथं (४)विस्मृतिगोचरीकृता ॥४०॥
(५)कटुस्वरैः प्रालपथाम्बरस्थिताः
शिशोर्बलात् षड्दिनजातकस्य किम् ।

प्रकम्पितं विधूनितम् अशेषाणां सर्वेषां जगतां त्रयं त्रिभुवनं येन तथोक्तोऽपि सन् क्रोधात् रोषात् हेतोः अकम्पत चकम्पे। क्रोधजनितकम्पनस्य चिरसिद्धत्वादिति भावः। दिवं गगनम्। आकाशस्थ जनानित्यर्थः। अभ्यधात् अब्रवीच ॥ ३९ ॥

किमिति ॥ स्मरस्य कामस्य सम्बन्धी यः अरिः शत्रुः हरः तस्य सम्बन्धिनः सूनोः तनयस्य कार्तिकेयस्य प्रतिपक्षे आनुकूल्ये वर्तन्ते तिष्ठन्ति ये तथोक्ताः। तत्सम्बोधने रे स्मरारिसूनुप्रतिपक्षवर्तिनः व्योमचराः आकाशविहारिणः महासुराः महान्तः देवाः। यूयमिति कर्तृपदमूह्यम्। किं वाक्यमिति शेषः। ब्रूथ कथयथ। युष्माभिरेवं न वक्तव्यमिति भावः। अधुना इदानीं सा प्राग्वर्तिनीत्यर्थः। मदीयानां मत्सम्बन्धिनां बाणानां शराणां यानि व्रणानि क्षतानि तेषां सम्बन्धिनी या वेदना ज्वाला सा। कर्मभूता। युष्माभिरिति कर्तृपदमूह्यम्। कथं हि विस्मृतेः विस्मरणस्य गोचरीकृता विषयीकृता। विस्मृतेत्यर्थः। मत्कृतव्रणवेदना युष्माभिर्न विस्मर्तव्येति भावः ॥ ४० ॥

कटुस्वरैरिति ॥ रे अम्बरस्थिताः गगनविहारिणः सुराः।

---

(१) हे। (२) मखारि। (३) वेदनामद्योऽधुनैव।
(४) विस्मृत्य गताः स्वपृष्ठतः।
(५) कटुस्वरैरारटथ, कटुस्वरैरीरयथ।

श्वानः (६)प्रमत्ता इव (७)कार्त्तिके निशि
स्वैरं वनान्ते मृगधूर्त्तका इव ॥ ४१ ॥

सङ्गेन वो (८)गर्भतपस्विनः शिशु-
र्वराक एषोऽन्तमवाप्स्यति ध्रुवम्।
(९)अतस्करस्तस्करसङ्गतो यथा
तद्वो निहन्मि प्रथमं ततो(१)ऽप्यमुम् ॥४२॥

यूयमिति कर्तृपदमूह्यम्। कार्त्तिके कार्त्तिकनाम्नि मासि। कालाधिकरणमेव। प्रमत्ताः मदोन्मत्ताः श्वानः कुकुरा इव। कार्त्तिके मासि शुनां मदोन्मत्तत्वं सर्वत्र प्रसिद्धमिति भावः। तथा निशि रजन्यां वनानाम् अरण्यानाम् अन्ते सीमायां मृगेषु पशुषु धूर्त्तकाः शृगाला इव, षड्दिनजातकस्य अवज्ञापात्रस्येत्यर्थः। शिशोः बालस्य कुमारस्य बलात् बलमवलम्ब्येत्यर्थः। यवर्थे पञ्चमी। कटुभिः कठोरैः स्वनैः नादैः। करणैः। किं कथं स्वैरं यथेच्छं यथा तथा प्रालपथ अनर्थकं वचः वदथेत्यर्थः। "प्रलापोऽनर्थकं वचः" इत्यमरः ॥ ४१ ॥

सङ्गेनेति ॥ तस्कराणां चौराणां सङ्गतः संसर्गात् हेतोः अतस्करः अचौरः यथा असाधुरिवेत्यर्थः। वः युष्माकम असाधूनामित्यर्थः। सम्बन्धिना सङ्गेन संसर्गेण हेतुना। गर्भ एव तपस्वी तस्य हरस्य सम्बन्धी एष वराकः निरपराध इत्यर्थः। शिशुः। कर्ता। ध्रुवं निश्चितं यथा तथा अन्तं नाशम् अवाप्स्यति लप्स्यते। तत् तस्मात् प्रथमम् अग्रे वः युष्मान्, ततः युष्मन्नाशानन्तरम् अमुं शिशुमपि निहन्मि विनाशयामि। अग्रे अधिकदोषिशासनस्यावश्यकत्वादिति भावः ॥ ४२ ॥

---

(६) प्रवृत्ताः। (७) कार्त्तिकीनिशि। (८) अगर्भतपस्विनः।
(९) अतस्करम्। (१) तु।

इतीरयत्युग्रतरं महासुरे
महाकृपाणं कलयत्यलं (२)क्रुधा ।
परस्परोत्पीड़ितजानवो भया-
न्नभश्चरा दूरतरं विदुद्रुवुः ॥ ४३ ॥

ततोऽवलेपाद्विकटं (३)विहस्य स
(४)व्यधत्त कोशादसिमुत्तमं बहिः ।
रथं द्रुतं प्रापय वासवान्तिकं
(५)नन्वित्यवोच(६)न्निजसारथिं (७)रथी ॥४४॥

इतीति ॥ नभसि आकाशे चरन्ति विहरन्ति ये तथोक्ताः सुराः। कर्तारः। महति बलवति असुरे दैत्ये तारके इति ईरयति वदति तथा उग्रतरम् अतिभयङ्करं महान्तं कृपाणम् असिं क्रुधा रोषेण कलयति धारयति सति। उभयत्र भावाधिकरणम्। भयात् तारकत्रासात् इतोः परस्परम् अन्योन्यं यथा तथा उत्पीड़िताः उद्धर्षिताः जानवः जानुपर्वाणि यैः तादृशाः सन्तः दूरतरम् अतिदूरवर्तिप्रदेशं विदुद्रुवुः पलायामासुः ॥ ४३ ॥

तत इति ॥ ततः अनन्तरम् अवलेपात् गर्वात् इतोः विकटम् उच्चैः यथा तथा विहस्य हास्यं कृत्वेत्यर्थः। रथोऽस्यास्तीति रथी स्यन्दनस्थः स तारकासुरः। कर्ता। उत्तमम् उत्कृष्टम् असिं कृपाणं कोशात् आवरणभेदात् बहिः बाह्यदेशे व्यधत्त कृतवान्। ननु भोः। त्वमिति कर्तृपदमूह्यम्। रथं स्यन्दनं ममेति शेषः। द्रुतं सत्वरं यथा तथा वासवस्य

---

(२) ध्रुवम्। (३) विकृष्य।
(४) अभिकोशमाधादसिमंशुभासुरम्। (५) वत।
(६) प्रति। (७) द्रुतम्।

मनोऽतिवेगेन रथेन सारथि-
प्रणोदितेन प्रचलन्महासुरः ।
ततः प्रपेदे सुरसैन्यसागरं
भयङ्कराकारमपारमग्रतः ॥ ४५ ॥

पुरः सुराणां (८)पृतनां प्रथीयसीं
विलोक्य वीरः पुलकं प्रमोदजम् ।
बभार (९)भूम्नाथ स बाहुदण्डयोः
प्रचण्डयोः सङ्गरकेलिकौतुकी ॥ ४६ ॥

इन्द्रस्य अन्तिकं समीपं प्रापय नय इति निजसारथिं स्वसूतम् अवोचत् उवाच ॥ ४४ ॥

मन इति ॥ ततः अनन्तरं महान् असुरः तारकः। कर्ता। मनसः चित्तादपि अति अधिकः वेगः जवः यस्य तथोक्तेन, सारथिना सूतेन। कर्त्रा। प्रणोदितेन सञ्चालितेन रथेन। करणेन। प्रचलन् गच्छन् सन् अग्रतः संमुखे, नास्ति पारः शेषो यस्य तथोक्तम्। तथा भयङ्करः भीषणः आकारः आकृतिर्यस्य तथाभूतम्, सुराणां देवानां सम्बन्धि यत् सैन्यं तस्य सागरं समुद्रम्। कर्मभूतम्। प्रपेदे आससाद ॥ ४५ ॥

पुर इति ॥ अथ अनन्तरं सुरसैन्यप्राप्तेः परमित्यर्थः। स वीरः पराक्रान्तशूरः। कर्ता। पुरः अग्रतः प्रथीयसीम् अतिविस्तीर्णां, सुराणां देवानां सम्बन्धिनीं पृतनां सेनां विलोक्य निरीक्ष्य सङ्गरकेलौ संग्रामक्रीड़ायां कौतुकम् उल्लासोऽस्ति अस्य तथोक्तः सन् प्रमोदात् हर्षात् जायते यत् तथोक्तं, प्रचण्डयोः दुर्दमयोः बाहुदण्डयोः सम्बन्धि पुलकं रोमाञ्चं भूम्ना आधिक्येन बभार धृतवान् ॥ ४६ ॥

---

(८) पृतनाः प्रथीयसीः। (९) भूम्ना बहु।

ततो (१)महेन्द्रस्य चरास्चमूचरा
रणान्तलीलारभसेन भूयसा ।
पुरः प्रचेलुर्मनसोऽतिवेगिनो
युयुत्सुभिः किं समरे विलम्ब्यते ॥ ४७ ॥

(२)पुरःस्थितं देवरिपोश्चमूचरा
(३)बलद्विषः सैन्यसमुद्र(४)मभ्ययुः ।
भुजं समुत्क्षिप्य (५)परेभ्य आत्मनो-
ऽभिधानमुच्चैरभितो न्यवेदयन् ॥ ४८ ॥

तत इति ॥ ततः अनन्तरं महेन्द्रस्य देवेन्द्रस्य सम्बन्धिनीषु चमूषु सेनासु चरन्ति वर्तन्ते ये तथोक्ताः । तथा मनसः चित्तादपि अतिवेगः अतिजवोऽस्ति येषां तथाभूताः । शीघ्रगामिन इत्यर्थः । चराः अपसर्पाः । कर्तारः । "अपसर्पश्चरः स्पशः" इत्यमरः । भूयसा अधिकेन, रणस्य संग्रामस्य अन्तेषु सीमासु या लीला विलासः तस्य रभसेन हर्षेण हेतुना । "रभसो वेगहर्षयोः" इत्यमरः । पुरः संमुखतः प्रचेलुः जग्मुः । तथाहि समरे संग्रामे युयुत्सुभिः योद्धुमिच्छद्भिः वीरैरिति शेषः । कर्तृभिः । किं कथं विलम्ब्यते, न विलम्बः क्रियते इत्यर्थः । अत्र समान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ॥ ४७ ॥

पुर इति ॥ देवानां सुराणां सम्बन्धिनः रिपोः शत्रोः तारकासुरस्य सम्बन्धिनः चमूषु सेनासु चरन्ति ये तथोक्ताः सैनिकपुरुषा इत्यर्थः । कर्तारः । पुरः अग्रे स्थितं संमुखस्थमित्यर्थः । बलस्य बलासुरस्य कर्मभूतस्य द्विषः हन्तुः इन्द्रस्य सम्बन्धिनं सैन्यं बलमेव समुद्रम् । कर्मभूतम् । अभ्ययुः अभि

(१) असुरेन्द्रानुचराः, सुरेन्द्रस्य चराः । (२) पुरःसराः । (३) सुरद्विषः । (४) अभ्यगुः । (५) सहेलमात्मनः ।

पुरोगतं दैत्यचमूमहार्णवं
दृष्ट्वा (६)परं चुक्षुभिरे (७)महासुराः ।
(८)पुरारिसूनोर्नयनैककोणके
(६)ममु(१)र्भटा (२)तस्य रणेऽवहेलया ॥४६॥

द्विषद्बलत्रास(३)विभीषिताश्चमूः
दिवौकसामन्धकशत्रुनन्दनः ।
अपश्यदुद्दिश्य (४)महारणोत्सवं
प्रसादपीयूषधरेण चक्षुषा ॥ ५० ॥

जगुः। तथा अभितः चतुर्दिक्षु भुजं हस्तं समुत्क्षिप्य समुत्थाप्य परेभ्यः अरिभ्यः आत्मनः निजस्य सम्बन्धि अभिधानं नाम रामभद्रोऽहमित्येवंरूपमित्यर्थः। उच्चैः तारं यथा तथा न्यवेदयन् विज्ञापयामासुः ॥ ४८ ॥

पुर इति ॥ पुरोगतं संमुखस्थितं, दैत्यानाम् असुराणां चमूं सेनामिव महान्तम् अतिविस्तृतम् अर्णवं समुद्रम् । कर्मभूतम्। दृष्ट्वा अवलोक्य महान्तः प्रबलपराक्रान्ताः सुराः देवाः। कर्तारः। परं भृशं यथा तथा चुक्षुभिरे क्षोभं गताः। भटाः असुरसैनिकाः। कर्तारः। तस्य पुरारेः हरस्य सूनोः तनयस्य रणे युद्धे अवहेलया अनायासेन विस्तारिते इत्यर्थः। नयनैककोणके नेत्रैकप्रान्ते ममुः स्थानं गताः इत्यर्थः। कुमारसमीपे तेषां सामान्यत्वादिति भावः ॥ ४९ ॥

द्विषदिति ॥ अन्धकस्य अन्धकनाम्नोऽसुरस्य यः शत्रुः अरिः हर इत्यर्थः। तस्य सम्बन्धी सूनुः तनयः कार्तिकेयः ।

---

(६) अभितः। (७) अखिलाः सुराः, अखिलाः स तु ।
(८) स्मरारिसूनोः। (६) ममौ। (१) भटः, पुरः।
(२) भाविरणे हि हेलया, भाति रणेऽवहेलया ।
(३) विसङ्कुलां चमूम्। (४) महाहवोत्सवम्, महाहवे बलम् ।

(५)उत्साहिताः शक्तिधरस्य दर्शनात्
मृधे महेन्द्रप्रमुखा (६)मखाशनाः ।
(७)अहं मृधे जेतुमरीनरीरमन्
न कस्य वीर्याय वरस्य सङ्गतिः ॥ ५१ ॥
परस्परं वज्रधरस्य सैनिका
द्विषोऽपि योद्धुं (८)स्वकरोद्धृतायुधाः ।

कर्ता। महान् प्रबलः यः रणः युद्धं तस्य उत्सवं आनन्दम्। कर्म। उद्दिश्य अभिलक्ष्य स्थितः सन् द्विषतः शत्रोः तारकासुरस्य यत् बलं सैन्यं तस्य यः त्रासः भयं तस्मात् विभीषिताः भयं प्राप्ताः, दिवौकसां देवानां चमूः सेनाः। कर्म। प्रसादः अनुग्रह एव पीयूषं अमृतं तस्य धरेण वाहिना चक्षुषा नेत्रेण। करणेन। अपश्यत् ददर्श ॥ ५० ॥

उत्साहिता इति। मृधे संग्रामे शक्तिं आयुधविशे धरतीति तथोक्तस्य कार्तिकेयस्य दर्शनात् अवलोकनात् हेतो उत्साहिताः उत्साहं प्राप्ताः, महेन्द्रः देवराजः प्रमुखः अग्र गामी येषां तथोक्ताः, मखं यज्ञहविः अश्नन्ति भुञ्जन्तीति ताद्दृशाः सुराः। कर्तारः। मृधे युद्धे अहं अरीन् शत्रू जेतुं, समर्थः नान्य इति वदन्तः सन्तः इति शेषः। अरीरमन् मेनिरे। अर्थान्तरन्यासेन तदेव समर्थयति—नेति। तथाहि। वरस्य श्रेष्ठस्य पुरुषस्य सङ्गतिः सम्पर्कः कस्य जनस वीर्याय बलार्थं वीर्यं कर्तुमित्यर्थः। न भवति। अपितु सर्वस्यैवेत्यर्थः। श्रेष्ठाश्रयेण हृतवीर्यस्यापि बलं वर्धते इति भावः ॥ ५१ ॥

परस्परमिति ॥ विजयैषिणः जयार्थिनः। अतएव स्वे निजानां सम्बन्धिभिः करैः हस्तैः। करणैः। उद्धृता

---

(५) उत्साहिनः। (६) सुधाशिनः। (७) अहंजुषः, अयमतः
(८) प्रवरोद्धृतायुधाः, प्रचुरोद्धतायुधाः।

(९)वैतालिकश्रावितताराविक्रमा-
भिधानमीयुर्विजयैषिणो रणे ॥ ५२ ॥

(१)संग्रामं प्रलयाय सन्निपततो वेलामतिक्रामतो
वृन्दारासुरसैन्यसागरयुग(२)स्याशेषदिग्व्यापिनः।
कालातिथ्यभुजो बभूव बहलः कोलाहलः क्रोषणः
शैलोत्तालतटीविघट्टनपटुर्ब्रह्माण्डकुक्षिम्भरिः॥५३

उद्गृहीतानि युधानि शस्त्राणि यैः तथोक्ताः। वज्रधरस्य इन्द्रस्य द्विषः शत्रवः तारकस्यापि सम्बन्धिनः सैनिकाः। कर्तारः। परस्परम् अन्योन्यं याद्धं युद्धं कर्तुं वैतालिकैः स्तुतिपाठकैः। कर्तृभिः। श्रावितं ज्ञापितमित्यर्थः। तारविक्रमस्य महापराक्रमस्य अभिधानं कीर्तनं यत्र तत् यथा तथा रणे संग्रामस्थले ईयुः गताः॥ ५२ ॥

संग्राममिति॥ प्रलयाय प्रलयं विध्वंसं कर्तुं संग्रामं युद्धं सन्निपततः समागच्छतः। अतएव वेलां सदाचरणरूपां मर्यादाम् अतिक्रमतः उल्लङ्घयतः। अतएव अशेषाः समस्ताः याः दिशः पूर्वादयः ताः व्याप्नोतीति तथोक्तस्य। तथा कालस्य यमस्य यत् आतिथ्यम् अतिथिसत्कारः तत् भुङ्क्ते इति तथोक्तस्य मरणायतस्येत्यर्थः। वृन्दाराणां देवानाम्, असुराणां दैत्यानाञ्च सम्बन्धिनी सैन्ये एव सागरौ समुद्रौ तयोः युगस्य युगलस्य सम्बन्धी बहलः महान् क्रोषणः शब्दायमानः तथा शैलानाम् अचलानाम् उत्तालाः उन्नताः याः तट्यः प्रदेशाः तासां विघट्टनं विदारणे पटुः पारगः, तथा ब्रह्माण्डस्य जगतः

(९) वैमानिकैः श्रावितमानसत्क्रमाभिधानम्, वैतालिकैः श्रावितनामविक्रमाः सोत्साहम्, वैतालिकश्रावितनामविक्रमाभिधानम्। (१) संग्रामप्रलयाय, संग्रामे प्रलयाय।
(२) स्याशेषदिग्व्यापिनः।

## षोड़शः सर्गः।

(१)अथान्योन्यं विमुक्तास्त्रशस्त्रजालै(२)र्भयङ्करैः।
युद्धमासीत् सुनासीरसुरारिबलयो(३)र्महत् ॥१॥
पत्तिः पत्तिमभीयाय रथाय रथिनं रथी।
तुरङ्गस्थं तुरङ्गस्थो दन्तिस्थं दन्तिनि स्थितः ॥२॥

कुक्षिम् उदरं बिभर्ति पूरयतीति तथोक्तः कोलाहलः कलकलशब्दः। कर्ता। बभूव जातः। शार्दूलविक्रीड़ितं वृत्तम्। तदुक्तम्—"सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीड़ितम्" इति ॥ ५३ ॥

इति श्रीकेशवमोहनकृतया मोहिनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
सुरासुरसैन्यसंघट्टो नाम पञ्चदशः सर्गः।

---

अथेति॥ अथ देवदैत्यमिलनानन्तरं भयं शङ्कां कुर्वन्ति उत्पादयन्तीति तथोक्तैः। तथा अन्योन्यं परस्परं विमुक्तानां प्रहर्तुं त्यक्तानां अस्त्राणां बाणादीनां शस्त्राणां सम्मोहनादीनां शराणाञ्च जालैः समूहैः। करणैः। सुनासीरस्य इन्द्रस्य, सुरारेः तारकस्य च बलयोः सैन्ययोः सम्बन्धि महत् भयङ्करं युद्धं समरः। कर्तृ। आसीत् अभूत् ॥ १ ॥

पत्तिरिति॥ पत्तिः पदातिः। कर्ता। पत्तिं पादचारिसैन्यम्। कर्मभूतम्। तथा रथी रथस्थः रथिनं रथारूढसैन्यमिति शेषः। तुरङ्गे तिष्ठतीति तरङ्गस्थः अश्वारोहैसैन्य इत्यर्थः। तुरङ्गस्थं अश्वारूढं नरमिति शेषः। तथा

---

(१) अथान्योन्य। (२) भयङ्करम्। (३) द्वयोः।

युद्धाय धावतां धीरं वीराणामितरेतरम् ।
वैतालिकाः (४)कुलाधीशा नामान्यलमुदाहरन् ॥ ३
(५) पठतां वन्दिवृन्दानां प्रवीरा विक्रमावलीम् ।
क्षणं विलम्ब्य चित्तानि ददुर्युद्धोत्सुकाः (६)पुरः ॥ ४

दन्तिनि गजे स्थितः गजारूढ़मैन्य इत्यर्थः । दन्तिनि तिष्ठतीति दन्तिस्थ गजस्थितं जनमित्यर्थः । रणाय रणार्थं युद्धं कर्तुमित्यर्थः । अभीयाय संमुखीनो बभूव । योद्धॄणां स्वजातीयैः सह युद्धस्य कर्तव्यत्वादिति भावः । बहुत्वभिया प्रत्येकं क्रियासम्बन्धः कर्तव्यः ॥ २ ॥

युद्धायेति ॥ कुलानां वंशानां अधीशाः स्वामिनः । आत्मकुलोचितविद्यायां अतिप्रवीणा इत्यर्थः । वैतालिकाः स्तुतिपाठकाः । कर्तारः । इतरेतरं अन्योन्यं युद्धाय युद्धार्थं युद्धं कर्तुमित्यर्थः । धीरं गभीरं यथा तथा धावतां गच्छतां वीराणां योद्धृगणानां सम्बन्धीनि नामानि वीरभद्रोऽयं धावतीत्यादीनीत्यर्थः । उदाहरन् उक्तवन्तः । स्वपरावज्ञानार्थमिति भावः ॥ ३ ॥

पठतामिति ॥ प्र प्रकृष्टाः वीराः योद्धारः, समरे युद्धे उत्सुकाः उत्कण्ठिताः । अतएव विक्रमाणां पराक्रमाणां आवलीं समाहारं पठतां स्तुवतां, साधु पराक्रान्तमिति पुनः-पुनः कथयतामित्यर्थः । वन्दिनां स्तुतिपाठकानां यानि वृन्दानि समूहाः तेषां पुरः संमुखे चित्तानि अन्तःकरणानि । कर्मभूतानि । क्षणं विलम्ब्य क्षणकालं विलम्बं कृत्वेत्यर्थः । ददुः दत्तवन्तः ॥ ४ ॥

---

(४) कुलाधीशनामानि ।

(५) पठिता वन्दिभिः श्रुत्वा प्रवीरविरुदावलीः, पठिता वन्दिवृन्देन प्रवीरविरुदावलीः, पठतां वन्दिवृन्दानां प्रवीरा विरुदावलिम् ।　　(६) अपि ।

संग्रामानन्दवर्धिष्णौ विग्रहे (७)पुलकाञ्चिते ।
आसीत्कवचविच्छेदो (८)वीराणां मिलतां मिथः॥५॥
निर्दयं खड्गभिन्नेभ्यः कवचेभ्यः (९)समुत्थितैः ।
आसन् व्योमदिशः(१)स्तूलैः पलितैरिव पाण्डुराः ॥६॥
खड्गा रुधिरसंलिप्ताश्चण्डांशुकरभासुराः ।
इतस्ततोऽपि वीराणां (२)विद्युतां वैभवं दधुः ॥७॥

संग्रामेति ॥ संग्रामस्य युद्धस्य यः आनन्दः उत्साहः तेन वर्धिष्णौ वर्धनशीले, अतएव पुलकैः रोमाञ्चैः अञ्चिते व्याप्ते, मिथः परस्परं यथा तथा मिलतां सङ्गच्छमानानां वीराणां योद्धृवर्गाणां सम्बन्धिनि विग्रहे देहे। जातिवाचकत्वादेकवचनम्। कवचानां वर्मणां विच्छेदः प्रभेदः। कर्ता। आसीत् बभूव ॥ ५ ॥

निर्दयमिति ॥ व्योम आकाशं दिशः पूर्वादयः, व्योमसहिता आशा इत्यर्थः। कर्तारः। निर्दयं निष्ठुरं यथा तथा खड्गैः करवालैः भिन्नेभ्यः विदीर्णेभ्यः कवचेभ्यः वारणेभ्यः सकाशात् समुत्थितैः उत्सृतैः तूलैः कर्पासैः। करणैः। पलितैरिव वार्धक्यजनितशौक्ल्यैरिव पाण्डुराः शुक्लवर्णाः आसन् बभूवुः। अत्रोत्प्रेक्षालङ्कारेण वस्तुध्वनिः ॥ ६ ॥

खड्गा इति ॥ वीराणां योद्धृणां खड्गाः करवालाः। कर्तारः। रुधिरेण शोणितेन। युद्धहतसैन्यानामिति भावः। संलिप्ताः संयुक्ताः। तथा इतस्ततः चतुर्दिक्षु चण्डाः तीक्ष्णाः अंशवः किरणाः यस्य तथोक्तस्य करैः सूर्यकिरणव्यतिकरैरित्यर्थः। भासुराः दीप्तिमन्तः सन्तः विद्युतां तड़िताम्। "तड़ित

---

(७) पुलकाङ्किते। (८) धीराणाम्। (९) समुच्छ्रितैः।
(१) स्थूलैः पतितैरिव पाण्डराः। (२) वैद्युतम्, विद्युतः।

विसृजन्तो मुखैर्ज्वाला भीमा इव भुजङ्गमाः ।
विसृष्टाः सुभटै (३)रुष्टैर्व्योम व्यानशिरे (४)शराः ८

(५)बाढं वपूंषि निर्भिद्य धन्विनां निघ्नतां मिथः ।
अशोणितमुखा भूमिं प्राविशन् दूरमाशुगाः ॥९॥

(६)निर्भिद्य दन्तिनः पूर्वं पातयामासुराशुगाः ।
पेतुः प्रवरयोधानां प्रीतानामाहवोत्सवे ॥ १० ॥

सौदामिनी विद्युत् चपला चञ्चलापि च" इत्यमरः । वैभवं तुल्यतां दधुः धृतवन्तः । विद्युद्वदिदीपिरे इत्यर्थः । अत्रोपमालङ्कारेण वस्तुध्वनिः ॥ ७ ॥

विसृजन्त इति ॥ शराः बाणाः । कर्तारः । रुष्टैः क्रुद्धैः, सु शोभनैः भटैः योद्धृभिः । कर्तृभिः । विसृष्टाः त्यक्ताः । तथा मुखैः अग्रभागैः । करणैः । ज्वालाः उल्काः । कर्मभूताः । विसृजन्तः त्यजन्तः । अतएव भीमाः भीषणाः भुजङ्गमाः सर्पा इव । उत्प्रेक्षेयम् । व्योम आकाशम् । कर्मभूतम् । व्यानशिरे व्याप्तवन्तः । अत्र वस्तुना वस्तुध्वनिः ॥ ८ ॥

बाढमिति ॥ आशु शीघ्रं यथा तथा गच्छन्तीति आशुगाः शराः । कर्तारः । मिथः परस्परं दूरम् अत्यन्तं निघ्नतां प्रहारं कुर्वतां, धन्वानि सन्ति येषां तथोक्तानां धनुर्धारिणां सम्बन्धीनि वपूंषि देहान् बाढं दृढं यथा तथा निर्भिद्य । अपिशब्दोऽध्याहार्यः । अशोणितानि शोणितसाहित्यरहितानि मुखानि अग्रभागाः येषां तथोक्ताः सन्तः, भूमिं भूतलम् । कर्मभूताम् । प्राविशन् । अत्र विरोधाभासेन वस्तुध्वनिः ॥९॥

निर्भिद्येति ॥ आहवः संग्राम एव उत्सवः आनन्दजनकव्यापारः तस्मिन् विषये प्रीतानां हृष्टचित्तानां संग्रामप्रवृत्तानामित्यर्थः । प्रवरयोधानां श्रेष्ठयोद्धृवर्गाणां सम्बन्धिनः

(३) तुष्टैः, तुङ्गाः । (४)असुराः ।
(५) गाढ़म् । (६) निर्भेद्य ।

ज्वलदग्निमुखैर्बाणैर्नीरन्ध्रैरितरेतरम् ।
उच्चैर्वैमानिका व्योम्नि (७)कीर्णे दूरमपासरन् ॥११

विभिन्नं धन्विनां बाणै(८)र्व्यथार्तमिव विह्वलम् ।
ररास विरसं व्योम (९)श्येनप्रतिरवच्छलात् ॥१२

चापैराकर्णमाकृष्टैर्विमुक्ता दूरमाशुगाः ।

आशुगाः शराः । कर्तारः । दन्ताः दन्ति येषां ते दन्तिनः गजाः तथोक्तान् । कर्मभूतान् । निर्भिद्य विदार्य पूर्वं प्रथमं पातयामासुः । पश्चात् भेदितदन्तिपतनानन्तरं स्वयं पेतुः पतिताः । अत्र वस्तुना वस्तुध्वनिः ॥ १० ॥

ज्वलदिति । ज्वलन् प्रज्वलन् यः अग्निः अनलः स मुखेषु अग्रेषु येषां तथोक्तैः । तथा इतरेतरम् अन्योन्यं निर्निर्गतानि रन्ध्राणि अवकाशाः येषां तथाभूतैः । परस्परसंघट्टितैरित्यर्थः । बाणैः शरैः । कर्तृभिः । उच्चैः भृशं यथा तथा कीर्णे आच्छादिते व्योम्नि गगने, विमानैः देवयानैः गच्छन्तीति वैमानिकाः देवाः विष्णुप्रभृतयः । कर्तारः । दूरं दूरवर्तिस्थानम् अपासरन् पलायिताः ॥ ११ ॥

विभिन्नमिति । व्योम आकाशम् । कर्तृ । धन्विनां धनुर्धारिणां सम्बन्धिभिः बाणैः शरैः विभिन्नं विदीर्णम् । अतएव व्यथया पीड़या आर्तं दुःखितम् । अतएव विह्वलं कातरम् इतिकर्तव्यताविमूढ़मित्यर्थः । सत्, श्येनानां पक्षिभेदानां सम्बन्धिनः प्रतिरवस्य प्रतिध्वनेः छलात् व्याजेन विरसं कर्कशं ररासेव चक्रन्देव । उत्प्रेक्षालङ्कारः ॥ १२ ॥

चापैरिति । आशु सत्वरं गच्छन्तीति आशुगाः बाणाः । कर्तृभूताः । आकर्णं कर्णपर्यन्तं यथा तथा आकृष्टैः आक-

---

(७) कीर्णैः । (८) यथार्थमिव विह्वलम्, वेश्याया इव विह्वलम्, विशाख इव विह्वली ।

(९) सेनापतिरवच्छलात्, सेनापतिरिव छलात् ।

अधावन् रुधिरास्वादलुब्धा इव रणैषिणाम् ॥१३

गृहीताः पाणिभिर्वीरैर्विकोशाः खड्गराजयः।
(१)कान्तिजालच्छलादाजौ व्यहसन् संमदादिव१४

खड्गाः शोणितसन्दिग्धा नृत्यन्तो वीरपाणिषु।
(२)रजोघने रणेऽनन्ते विद्युतां (३)वैभवं दधुः १५

रणैषिणां युद्धार्थिनां सम्बन्धिभिः चापैः धनुर्भिः। कर्तृभिः। विमुक्ताः परित्यक्ताः सन्तः, रुधिरस्य शोणितस्य यः आस्वादः भोजनं तत्र लुब्धाः लम्पटा इव दूरं दूरवर्तिस्थलम् अधावन् पलायिताः। उत्प्रेचेयम् ॥ १३ ॥

गृहीता इति॥ आजौ युद्धे वीरैः योद्धृभिः। कर्तृभिः। पाणिभिः हस्तैः। करणैः। गृहीताः धृताः। तथा वि विगताः कोशाः पिधानानि यासां तथोक्ताः, खड्गानां करवालानां राजयः पङ्क्तयः। कर्त्र्यः। कान्तीनां द्युतीनां यानि जालानि समूहाः तेषां छलात् व्याजेन संमदात् वयमेव शत्रुवधे योद्धृणां प्रधानसहाया इति हर्षात् व्यहसन्निव हास्यं चक्रुरिव। उत्प्रेचेयम् ॥ १४ ॥

खड्गा इति॥ खड्गाः करवालाः। कर्तारः। शोणितेन रक्तेन युद्धहतसैन्यानामिति भावः। सदिग्धाः संलिप्ताः। तथा वीराणां योद्धृणां पाणिषु हस्तेषु नृत्यन्तः नृत्यं कुर्वन्तः स्फुरन्त इत्यर्थः। सन्तः रजसा युद्धभूमिसमुत्थेनेत्यर्थः। घने निविड़े। तथा नास्ति अन्तः पारः यस्य तथोक्ते रणे संग्रामे विद्युतां तड़ितां सम्बन्धि वैभवं साद्दश्यम्। कर्मभूतम्। दधुः धृतवन्तः। विद्युद्वद्दिदीपिरे इत्यर्थः। अत्र पदार्थवृत्तिनिदर्शनालङ्कारः ॥ १५ ॥

---

(१) कान्तिजालच्छलादाजौ व्यहसन् समदा इव, कान्त्यानमच्छलादाजिर्व्यहसन् समदा इव, कान्त्या जनच्छलादानैर्व्यहसन् प्रमदा इव।

(२) रजोघनरणे।                    (३) विभ्रमम्।

कुन्तास्त्वकाशिरे चण्डमुल्लसन्तो (४)रणार्थिनाम् ।
(५)जिह्वाभोगा यमस्येव लेलिहाना (६)रणाङ्गणे१६

प्रज्वलत्कान्ति(७)चक्राणि चक्राणि वरचक्रिणाम् ।
(८)चण्डांशुमण्डलश्रीणि रणव्योमनि बभ्रमुः १७

केचि(९)द्धीरैः प्रणादै(१)श्च वीराणामभ्युपेयुषाम् ।
निपेतुः क्षोभतो (२)वाहादपरे मुमुहुर्मदात् ॥१८॥

कुन्ता इति ॥ कुन्ताः प्रासास्त्राणि । कर्तारः । रणस्य संग्रामस्य सम्बन्धिनि अङ्गणे चत्वरे चण्डम् उग्रं यथा तथा उल्लसन्तः स्फुरन्तः सन्तः । लेलिहानाः पुनःपुनः अतिशयेन आस्वादनशीलाः । यङन्ताल्लिहधातोः कर्तरि शानच् । यमस्य अन्तकस्य सम्बन्धिनः जिह्वा रसनैव आभोगाः यन्त्राणीव चकाशिरे शुशुभिरे उभयेषां तुल्यवृत्तित्वादिति भावः ॥ १६ ।

प्रज्वलदिति ॥ वराणां श्रेष्ठानां चक्रिणां योद्धॄणां सम्बन्धीनि चक्राणि आयुधभेदाः । कर्तॄणि । प्रज्वलत् शोभमानं कान्तीनां दीप्तीनां सम्बन्धि चक्रं मण्डलं येषां तथोक्तानि । तथा चण्डाः तीक्ष्णाः अंशवः किरणाः यस्य तथोक्तस्य सूर्यस्य मण्डलस्येव श्रीः शोभा येषां तथाभूतानि सन्ति । रणं युद्धमेव व्योम आकाशं तस्मिन् बभ्रमुः समन्ततः ययुरित्यर्थः ॥ १७ ॥

केचिदिति ॥ केचित् कतिविधाः योद्धारः । कर्तारः । अभ्युपेयुषां अभिमुखमागतानां वीराणां योद्धॄणां सम्बन्धिभिः धीरैः गम्भीरैः प्रणादैः निर्घोषैः । करणैः । क्षोभतः चित्तचाञ्चल्यात् । हेतौ तृतीया । वाहात् अश्वात् निपेतुः पतिताः

---

(४) रणार्पिताः । (५) जिह्वाभागाः ।
(६) रणाश्रये, रणाजिरे । (७) वक्राणि ।
(८) चण्डेपुमण्डल । (९) घोरैः ।
(१) तु । (२) वाहा न

कश्चिदभ्यागते वीरे जिघांसौ मुदमादधौ।
पराहृत्य गते (३)क्षुब्धे विषसादाहवप्रियः ॥१९॥
बहुभिः (४)सह युद्ध्वा वा परिभ्रम्य रणोल्बणाः।
(५)उद्दिश्य तानुपेयुः केऽपि ये पूर्वहता रणे ॥२०
अभितो(६)ऽभ्यागतान्योद्धुं वीरान् रणमदोद्धतान्
(७)प्रत्यनन्दन् भुजादण्डरोमोद्गमभृतो भटाः ॥२१॥

ममूर्च्छुरित्यर्थः। अपरे अन्ये केचित् मदात् गर्वात् मुमुहुः। चेतनहीना बभूवुरित्यर्थः ॥ १८ ॥

कश्चिदिति ॥ जिघांसौ हन्तुमुद्यते वीरे योद्धरि अभ्यागते अभिमुखमागते सति। भावाधिकरणमत्र। आहवे युद्धे प्रियः अनुरक्तः कश्चित् वीरः। कर्ता। मुदम् आनन्दम् आदधौ प्राप। किन्तु तस्मिन्निति पदमूह्यम्। क्षुब्धे शत्रुकृतप्रहार-जनितक्षोभं गते अतएव पराहृत्य प्रत्यावृत्य गते सति विषसाद खेदं गतः। उभयत्र युद्धप्रियत्वादिति भावः ॥ १९ ॥

बहुभिरिति ॥ रणोल्बणाः युद्धोद्भटाः केऽपि वीराः। कर्तारः। रणे युद्धे बहुभिः अनेकैः योधैः सह। सहशब्दयोगे तृतीया। युद्ध्वा युद्धं कृत्वा परिभ्रम्य भ्रमणं कृत्वा वा। ये योधाः। कर्मभूताः। पूर्वं प्रथमं हृताः अङ्गीकृताः। आत्म-भिरिति कर्तृपदमूह्यम्। तान् पूर्वहृतात् उद्दिश्य लक्षयित्वा युद्धार्थं युद्धं कर्तुम् उपेयुः अभिजग्मुः। पूर्वकृतयुद्धैर्योधैः सार्धं पुनः युद्धं कर्तुं गतवन्त इत्यर्थः ॥ २० ॥

अभित इति ॥ भटाः वीराः। कर्तारः। भुजादण्डेषु बाहुदण्डेषु रोमणाम् उद्गमम् उद्भेदं रोमाञ्चं बिभ्रति धारय-

(३) क्षुब्धः, क्षुद्रे। (४) सहयुध्वानः।
(५) नामग्राहमुपेयुः केऽप्यग्रे पूर्वहृता वयम्।
(६) अभ्यागतान् योधौ वीरान् रणमदोल्बणान्।
(७) प्रत्यनन्दंस्तद्भुजादण्डे रोमोद्गमभृतो मदात्।

शस्त्रभिन्नेभकुम्भेभ्यो मौक्तिकानि च्युता(८)न्यधः।
(९)अध्याहवक्षेत्रमुप्तकीर्तिबीजाङ्कुरश्रियम् ॥२२॥
वीराणां विषमैर्घोषैर्विद्रुता वारणा रणे।
शास्यमाना अपि त्रासाद्भेजुर्धूताङ्कुशा दिशः ॥२३॥
रणे बाणगणैर्भिन्ना भ्रमन्तो भिन्नयोधिनः।

न्तीति भुजादण्डरोमोद्गमभृतः। भृधातोः कर्तरि क्विप्। सन्तः योद्धुं युद्धार्थम् अभितः संमुखम् अभ्यागतान् समुपस्थितान् तथा रणमदेन संग्रामगर्वेण उद्धतान् गर्वितान् वीरान् योधान्। कर्मभूतान्। अभ्यनन्दन् अभिनन्दितवन्तः। संग्रामप्रियत्वादिति भावः ॥ २१ ॥

शस्त्रेति ॥ मौक्तिकानि। कर्तृणि। अध्याहवक्षेत्रं युद्धक्षेत्रम् अधि युद्धक्षेत्रेषु।। विभक्त्यर्थेऽव्ययीभावः। शस्त्रैः आयुधैः भिन्नेभ्यः विदीर्णेभ्यः इभानां करिणां सम्बन्धिभ्यः कुम्भेभ्यः अधः च्युतानि भ्रष्टानि सन्ति। उप्तानां रोपितानां कीर्तिबीजानां यशोबीजानां सम्बन्धिनः ये अङ्कुराः प्ररोहाः तेषां श्रियं शोभां दधुरिति क्रियापदमूह्यम् ॥ २२ ॥

वीराणामिति ॥ वारणाः गजाः। कर्तारः। रणे युद्धे वीराणां योधानां सम्बन्धिभिः विषमैः भीषणैः घोषैः शब्दैः विद्रुताः पलायिताः अतएव शास्यमानाः निवार्यमाणा अपि। हस्तिपकैरिति कर्तृपदमूह्यम्। धूताङ्कुशाः निरस्ताङ्कुशाघाताः सन्तः त्रासात् भयात् हेतोः दिशः पूर्वादीः। कर्मभूताः। भेजुः प्रापुः पलायिता इत्यर्थः ॥ २३ ॥

रणे इति ॥ महान्तः बलवन्तः गजाः। कर्तारः। रणे संग्रामे बाणानां शराणां गणैः समूहैः भिन्नाः विक्षताः।

---

(८) अधुः। (९) आहवक्षेत्रमभ्युप्तकीर्तिबीजोत्करश्रियम्।

निममज्जु(१)र्मिलद्रक्त(२)निम्नगासु महागजाः २४
(३)अपारेऽसृक्सरित्पूरे रथेषूच्चैस्तरेष्वपि।
रथिनो(४)ऽभिरिपुं क्रुद्धा हुंकृतैर्व्यसृजन् शरान् २५
खड्गनिर्लूनमूर्धानो व्यापतन्तोऽपि वाजिनः।
प्रथमं पातयामासुरसिना दारितानरीन् ॥२६॥
वीराणां शस्त्र(५)भिन्नानि शिरांसि निपतन्त्यपि।

तथा भिन्नाः विक्षताः योधिनः स्वपृष्ठस्थिताः योधाः येषां तथोक्ताः। अतएव भ्रमन्तः सर्वतः धावन्तः सन्तः मिलन्तीषु सङ्गच्छन्तीषु रक्तानां शोणितानां सम्बन्धिनीषु निम्नगासु नदीषु निममज्जुः निमग्ना बभूवुः ॥ २४ ॥

अपारे इति॥ उच्चैस्तरेषु अत्युन्नतेषु अपि रथेषु अपारे अतलस्पर्शे, असृजां शोणितानां सम्बन्धिनी या सरित् नदी तस्याः पूरे स्रोतसि निमग्नेष्विति पदमूह्यम्। सत्सु रथिनः रथस्थयोधाः। कर्तारः। रिपुम् अरिम् अभि प्रति अभिलक्ष्ये-त्यर्थः। क्रुद्धाः कोपान्विताः सन्तः हुंकृतैः हुङ्कारनादैः। सहेति पदमध्याहार्यम्। शरान् बाणान् व्यसृजन् मुमुचुः ॥ २५ ॥

खड्गेति॥ वाजिनः अश्वाः। कर्तारः। खड्गेन असिना निर्लूनाः भिन्नाः मूर्धानः शिरांसि येषां तथोक्ताः। अतएव व्यापतन्तः विशेषेण आ समन्तात् पतन्तः सन्तोऽपि प्रथमं पूर्वं असिना खड्गेन दारितान् छिन्नान् अरीन् निजपृष्ठस्थिता-निति शेषः। पातयामासुः पतितान् चक्रुरित्यर्थः। प्रथममिति पदेन पश्चात् स्वयं पेतुरित्यनेनान्वयः ॥ २६ ॥

वीराणामिति॥ वीराणां योधानां सम्बन्धीनि शिरांसि

---

(१) गलत्। (२) निमग्नाः सुमहागजाः।
(३) अपरेऽसृक्सरित्पूरे।
(४) अभिरथं क्रुद्धा हुङ्कृतैः, अभिक्रुधा क्रुधहुङ्कृतैः।
(५) भिन्नानाम्।

अधावन् (७)दन्तदष्टोष्ठभीमान्यभिरिपुं क्रुधा२७
शिरांसि वरयोधानामर्धचन्द्रहृता(८)न्यलम्।
(९)आदधाना भृशं पादैः श्येना व्यानशिरे नभः२८
क्रोधादभ्यापतद्दन्ति(१)दन्ताऽऽरूढाः पदातयः।
(२)अश्वारोहा गजारोहप्राणान् प्रासैरपाहरन् २९
शस्त्रच्छिन्नगजारोहा विभ्रमन्त इतस्ततः।

मूर्धानः। कर्तॄणि। शस्त्रैः असिप्रभृतिभिः भिन्नानि लूनानि। अतएव दन्तैः दशनैः दष्टाः क्षताः ओष्ठाः येषां तथाभूतानि अतएव भीमानि भयङ्कराणि। तथा निपतन्त्यपि क्रुधा रोषेण रिपुम् अरिम् अभि प्रति। विभक्त्यर्थे अव्ययीभावः। अधावन् अभिययुः ॥ २७ ॥

शिरांसीति ॥ श्येनाः पक्षिभेदाः। कर्तारः। वराः महान्तः ये योधाः वीराः तेषां सम्बन्धीनि अलम् अत्यर्थं यथा तथा अर्धचन्द्रैः अर्धचन्द्राख्यबाणभेदैः हृतानि भिन्नानि शिरांसि मस्तकानि। कर्मभूतानि। पादैः चरणैः। करणैः। आदधानाः धारयन्तः सन्तः नभः गगनम्। कर्मभूतम्। भृशम् अत्यर्थं यथा तथा व्यानशिरे व्याप्तवन्तः ॥ २८ ॥

क्रोधादिति ॥ पदातयः पादचारिणः, तथा अश्वारोहाः घोटकारूढाः। कर्तारः। अभ्यापतताम् अभिमुखमागच्छतां दन्तिनां गजानां सम्बन्धिनः दन्तान् आरूढाः सन्तः क्रोधात् कोपात् हेतोः गजारोहाणां हस्त्यारूढानां प्राणान्। कर्मभूतान्। अपाहरन् विनाशितवन्तः ॥ २९ ॥

शस्त्रेति ॥ गजाः हस्तिनः। कर्तारः। शस्त्रैः असिप्रभृ-

---

(७) दन्तदष्टोष्ठभीमप्राण्यरिषु। (८) अपि।
(९) आददानाः।
(१) दन्ताऽऽरूढेषु वाजिषु, अन्ताऽऽरूढा रुषाजिषु।
(२) अश्वाऽऽरूढाः।

युगान्तवातचलिताः शैला इव गजा बभुः ॥३०॥
मिलितेषु मिथो योद्धुं दन्तिषु प्रसभं भटाः।
अगृह्णन्(३)न्युध्यमानाश्च शस्त्रैः प्राणान् परस्परम् ३१
(४)रुषा मिथो मिलद्दन्तिदन्तसंघर्षजोऽनलः।
योधान् शस्त्रहृतप्राणानदहत्(५)सहसारिभिः ३२
(६)आच्छिन्ना अपि दन्तीन्द्रैः कोपनैः पत्तयः परम्

तिभिः छिन्नाः भिन्नाः गजारोहाः हस्तिपकाः सपृष्ठस्थाः इत्यर्थः। येषां तथोक्ताः अतएव इतस्ततः समन्तात् विभ्रमन्तः विचरणं कृतवन्तः सन्तः। युगान्ते प्रलयसमये ये वाताः वायवः तैः चलिताः स्वस्थानभ्रष्टाः शैलाः अचला इव बभुः विरेजुः ॥ ३० ॥

मिलितेष्विति ॥ मिथः अन्योन्यं योद्धुं युद्धं कर्तुं मिलितेषु सङ्गतेषु दन्तिषु करिषु भटाः योधाः शस्त्रैः असिप्रभृतिभिः। करणैः। प्रसभं बलेन युध्यमानाः युद्धं कृतवन्तः सन्तः परस्परम् अन्योन्यं प्राणान्। कर्मभूतान्। अगृह्णन् विनाशितवन्तः ॥ ३१ ॥

रुषेति। रुषा कोपेन मिथः परस्परं यथा तथा मिलन्तः सङ्गच्छन्तः ये दन्तिनः गजाः तेषां सम्बन्धिनां दन्तानां [illegible]मानानां यः संघर्षः सम्पर्कः तस्मात् जायते यः तथोक्तः अनलः अग्निः। कर्ता। अरिभिः शत्रुभिः। कर्तृभिः। शस्त्रैः असिप्रभृतिभिः। करणैः। हृताः गृहीताः विनाशिता इत्यर्थः। प्राणाः असवः येषां तादृशान् योधान् वीरान्। कर्मभूतान्। अदहत् भस्मीचकार ॥ ३२ ॥

आच्छिन्ना इति॥ पत्तयः पादचारिणः वीराः। कर्तारः।

---

(३) सहयुध्यानः। (४) गजारूढ़ान्।
(५) सहसादिभिः। (६) उत्क्षिप्ताः।

(७)तदसूनहरन् खड्गघातैः स्वस्य पुरः प्रभोः ॥३३

उत्क्षिप्य करिभि(८)र्दूरान्मुक्तानां योधिनां दिवि।
प्रापि जीवात्मभि(९)र्दिव्या गतिर्वा विग्रहैर्मही॥३४

खड्गैर्धवलधारालैर्निहत्य करिणां करान्।
(१)तैर्भुवापि समं विद्वान् सन्तोषं न भटा ययुः॥३५

कोपनैः दुष्टैः दन्तीन्द्रैः महागजैः। कर्तृभिः। परं भृशं यथा तथा आक्षिप्ताः आक्रान्ताः सन्तोऽपि स्वस्य निजस्य सम्बन्धिनः प्रभोः हस्तिपकस्येति भावः। पुरः संमुखतः खड्गानां असीनां घातैः प्रहारैः। करणैः। तेषां दन्तीन्द्राणां असून् प्राणान् अहरन् नाशयामासुः ॥ ३३ ॥

उदिति ॥ कराः शुण्डादण्डाः सन्ति येषां तैः गजैः। कर्तृभिः। उत्क्षिप्य शुण्डादण्डैरुद्धृत्य दूरात् मुक्तानां परित्यक्तानां योधिनां वीराणां सम्बन्धिभिः जीवात्मभिः प्राणैः। कर्तृभिः। दिवि स्वर्गे दिव्या स्वर्गीया गतिः। कर्मभूता। प्रापि प्राप्ता। कर्मणि लुङ्। विग्रहैः देहैः तेषां योधिनामिति भावः। कर्तृभिः। मही वा पृथिवी एव प्रापीति शेषः। अत्र वाशब्द एवार्थे प्रयुक्तः। युद्धहतानां वीराणां स्वर्गप्राप्तत्वादिति भावः॥ ३४ ॥

खड्गैरिति॥ भटाः वीराः। कर्तारः। धवलधारालैः अतितीक्ष्णधारैरित्यर्थः। खड्गैः असिभिः। करणैः। भुवा धरया समं सह विद्वान् भिन्नान् करिणां गजानां सम्बन्धिनः करान् शुण्डादण्डान् निहत्य पातयित्वापि तैः तत्कार्यकरणैरित्यर्थः। सन्तोषं प्रीतिं न ययुः न जग्मुः। अन्येषामपि मारणेऽभिलाषसद्भावादिति भावः ॥ ३५ ॥

---

(७) ते रिपूनहनन्, तद्रिपूनहरन्। (८) दूरम्।
(९) दिव्याङ्गनाकण्ठपरिग्रहः, दिव्याङ्गनेषां विग्रहैर्मही।
(१) यैः।

(२)आचिप्याभिदिवं नीताः पत्तयः करिभिः करैः
दिव्याङ्गनाभिरादातुं रक्ताभि(३)र्द्रुतमीषिरे ३६
धन्विनस्तुरगारूढ़ा गजारोहान् शरैः चतान्।
(४)प्रत्यैच्छन्मूर्च्छितान् भूयो योद्धुमाश्वसतश्चिरम्३७
क्रुद्धस्य (५)दन्तिनः पत्तिर्जिघृच्चोरसिना करम्।
निर्भिद्य (६)दन्तमुसलावारुरोह जिघृच्चया ॥३८॥

आचिप्येति॥ पत्तयः पादचारिणः वीराः। कर्तारः। करिभिः हस्तिभिः। कर्तृभिः। करैः शुण्डादण्डैः। करणैः। आचिप्य आक्रम्य अभिदिवं स्वर्गं अभि प्रति नीताः प्रापिताः सन्तः। रक्ताभिः अनुरागवतीभिः दिव्याङ्गनाभिः स्वर्गनारीभिः। कर्त्रीभिः। द्रुतं सत्वरं यथा तथा आदातुं ग्रहीतुं वशीकर्तुमित्यर्थः। ईषिरे अभिलषिताः। युद्धहतानां स्वर्णनारीप्राप्तेरिति भावः॥ ३६॥

धन्विन इति॥ तुरगान् अश्वान् आरूढाः धन्विनः धनुर्धारिणः' योधाः। कर्तारः। शरैः बाणैः चतान् प्रहृतान् अतएव मूर्च्छितान् मूर्च्छां गतान् चिरं दीर्घकालात् परं भूयः पुनः योद्धं युद्धं कर्तुं आश्वसतः जीवतः अभिलषत इत्यर्थः। प्रत्यैच्छन् प्रतीचाञ्चक्रुः॥ ३७॥

क्रुद्धस्येति॥ पत्तिः पदातिः वीरः। कर्ता। क्रुद्धस्य कुपितस्य, तथा जिघृच्चोः ग्रहीतुमिच्छोः दन्तिनः करिणः सम्बन्धिनः शुण्डादण्डम्। कर्म। असिना खड्गेन। करणेन। निर्भिद्य छित्वा जिघृच्चया ग्रहीतुमिच्छया दन्तावेव मुसलौ मुसलाकारदन्तौ। कर्मभूतौ। आरुरोह आरूढः॥ ३८॥

---

(२) उत्चिप्य। (३) हृतमम्बरम्, व्याप्तमम्बरम्।
(४) प्रत्यैचन्। (५) करिणः।
(६) दन्तमुसलान्, दन्तमुसलेन।

खड्गेन (७)मूलतो हत्वा दन्तिनो (८)रदनद्वयम्।
(९)प्रातिपक्ष्ये प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम्॥३९॥
करेण करिणा वीरः सुगृहीतोऽपि कोपिना।
असिनासून् जहाराशु तस्यैव स्वयमक्षतः॥ ४०॥
(१)तुरङ्गी तुरगारूढं प्रासेनाहत्य वक्षसि।
पततस्तस्य नाज्ञासीत् (२)प्रासघातं स्वके हृदि॥४१॥

खड्गेनेति॥ प्रतिपक्षस्य विपक्षस्य भावः प्रातिपक्ष्यं विपक्षसैन्यमध्ये इत्यर्थः। प्रविष्टः प्रवेशं कृतवतोऽपि पदातिः पादचारी वीरः। कर्ता। खड्गेन असिना दन्तिनः प्रतिपक्षीयहस्तिनः रदनद्वयं शुण्डादण्डयुगलम्। कर्म। मूलतः मूलदेशात् हत्वा पाटयित्वा द्रुतं सत्वरं निरगात् निर्जगाम॥ ३९॥

करेणेति॥ कोपोऽस्ति यस्य कोपिना क्रुद्धेन, करः शुण्डादण्डोऽस्ति यस्य करिणा हस्तिना। कर्ता। करेण शुण्डादण्डेन। करणेन। सु अतिशयेन गृहीतः आक्रान्तोऽपि। ग्रहधातोः कर्मणि क्तप्रत्ययः। वीरः। कश्चिदिति विशेषणपदमूह्यम्। कर्ता। स्वयम् अक्षतः अनाहतः सन् असिना तलवारिणा स्वहस्तस्थेनेति शेषः। करणेन। तस्यैव पूर्वाक्रमकारिण इत्यर्थः। करिणः गजस्य सम्बन्धिनः असून् प्राणान्। कर्म। आशु सत्वरं समाक्रमणक्षणमेव जहार हृतवान्॥४०॥

तुरङ्गीति॥ तुरङ्गो विद्यतेऽस्य तुरङ्गी अश्वारोहः। कर्ता। तुरगारूढम् अश्वस्थितं प्रतिवीरम्। कर्म। वक्षसि हृदये प्रासेन प्रासाख्यास्त्रविशेषेण। करणेन। आहत्य प्रहृत्य पततः पतनशीलस्य तस्य पूर्वप्रहृतस्येत्यर्थः। प्रासप्रहारेणेति विशेष्यपदमूह्यम्। स्वके स्वसंक्रान्ते हृदि हृदयदेशे

(७) आमूलतः। (८) अङ्घ्रिचतुष्टयम्। (९) प्रपतिष्णोः।
(१) तुरगी। (२) प्रासपातम्।

द्विषा प्रासहृतप्राणो वाजिपृष्ठदृढासनः ।
(३)हस्तोद्धृतमहाप्रासो भुवि जीवन्निवाभ्रमत् ४२
तुरङ्गसादिनं शस्त्रहृतप्राणं गतं भुवि ।
(४)अबद्धोऽपि महावाजी न सास्रुनयनोऽत्यजत्४३
(५)भल्लेन शितधारेण भिन्नोऽपि रिपुणाश्वगः ।
नामूर्च्छत्कोपतो हन्तुमियेष (६)प्रपतन्नपि ॥४४॥

प्रासस्य प्रासास्त्रस्य घातं प्रहारम् । कर्म । न अज्ञासीत् न बुबोध ॥ ४१ ॥

द्विषेति ॥ कश्चित् वीरः । कर्तृपदमिदमाहार्यम् । द्विषा शत्रुणा प्रतियोधेनेत्यर्थः । कर्त्रा । प्रासेन प्रासास्त्रेण हृताः प्राणाः यस्य तथाभूतः । अपिशब्दोऽध्याहार्यः । तथा वाजिनः अश्वस्य पृष्ठे दृढम् अचलम् आसनम् उपवेशनं यस्य तादृशः । तथा हस्तेन उद्धृतः उद्गृहीतः महान् तीक्ष्णः प्रासः प्रासाख्यास्त्रभेदः येन तथोक्तः सन् जीवन् प्राणवानिव भुवि युद्धभूमौ अभ्रमत् बभ्राम ॥ ४२ ॥

तुरङ्गेति ॥ महान् वाजी घोटकः । कर्ता । अबद्धः शृङ्खलैरसंयतः अपि । अबद्धत्वात् पलायनसम्भवेऽपीति भावः । अस्रुभिः नेत्राम्बुभिः सह वर्तमाने नयने नेत्रे यस्य तथोक्तः सन् । प्रभुमरणजनितस्नेहादिति भावः । शस्त्रैः प्रासप्रभृतिभिरायुधैः । करणैः । हृताः विनाशिताः । प्रतिपक्षयोधैरिति कर्तृपदमूह्यम् । प्राणाः असवः यस्य तादृशम् । अतएव भुवि पृथिव्यां गतं पतितं तुरङ्गसादिनम् अश्वारोहम् । कर्म । न अत्यजत् स्नेहात् तत्र स्थित इत्यर्थः ॥ ४३ ॥

भल्लेनेति ॥ रिपुणा अरिणा । कर्त्रा । शितधारेण तीक्ष्णधारेण भल्लेन भल्लाख्यशस्त्रेण । करणभूतेन । भिन्नः विदारितः

---

(३) हस्तोद्धतमहाप्रासाः । (४) अन्नाद्यः, अन्नाद्यः ।
(५) खड्गेन । (६) च पतन्, निपतन् ।

मिथः (७)प्रासाहतौ वाजिच्युतौ भूमिगतौ रुषा।
शक्त्या युयुधतुः कौचित् केशाकेशि भुजाभुजि ४५
रथिनो रथिभिर्बाणैर्हृतप्राणा दृढ़ासनाः।
(८)च्युतकार्मुकसन्धाना: सप्राणा इव मेनिरे ॥४६
न रथी रथिनं भूयः प्राहरच्छस्त्रमूर्च्छितम्।

अतएव प्रपतन् भूमिं गतोऽपि अश्वगः अश्वारोहः। कर्ता। न अमूर्च्छत् न मोहं गतः। किन्तु कोपतः रोषात् भल्लप्रहारजनितादिति भावः। हेतौ तृतीया। हन्तुं प्रहर्तुं अश्वमिति कर्मपदमाहार्यम्। इयेष अभिलषितवान् ॥ ४४ ॥

मिथ इति॥ मिथः परस्परं प्रासेन प्रासाख्यायुधेन। करणेन। आहतौ प्रहृतौ। परस्परेणेति कर्तृपदमूह्यम्। अतएव वाजिभ्याम् अश्वाभ्यां च्युतौ पतितौ अतएव भूमिं पृथिवीं गतौ प्राप्तौ कौचित् वीरौ। कर्तारौ। रुषा क्रोधेन परस्परप्रहारजनितेनेत्यर्थः। हेतौ तृतीया। शक्त्या बलेन यथाशक्तीत्यर्थः। केशाकेशि केशेषु केशेषु आकृष्य यत् जातं तत्, तथा भुजाभ्यां भुजाभ्याम् आहत्य यत् वृत्तं तत् भुजाभुजि यथा तथा युयुधतुः युद्धं कृतवन्तौ ॥ ४५ ॥

रथिन इति॥ रथाः सन्ति येषां ते रथिनः। कर्म। रथिभिः स्यन्दनारूढैः। कर्तृभिः। बाणैः शरैः। करणैः। हृताः विनाशिताः प्राणाः कर्मभूताः येषां तादृशाः, अतएव च्युतं च्युतं कार्मुकाणां शरासनानां सन्धानं योजनं येषां तथोक्ता: अपि दृढ़म् अचञ्चलम् आसनम् अवस्थानं येषां तथाभूताः स्यन्दनाच्युता इत्यर्थः। अतएव प्राणैः असुभिः सह वर्तमानाः सप्राणाः सजीविता इव मेनिरे अमन्यन्त। अन्यैरिति कर्तृपदमूह्यम्। कर्मणि लिट् ॥ ४६ ॥

नेति॥ रथी स्यन्दनस्थः। कर्ता। शस्त्रैः भल्लास्त्रप्रभृतिभिः

(७) प्रासहतौ, प्रहारतः। (८) हृत।

(९)प्रत्याश्वसन्तमन्विच्छन्नातिष्ठद्युधि लोभतः ४७

अन्योन्यं रथिनौ कौचिद्व (१)गतप्राणौ दिवं गतौ।
एकामप्सरसं प्राप्य युयुधाते वरायुधौ ॥४८॥

मिथोऽर्धचन्द्रनिर्लूनमूर्धानौ (२)रथिनौ रुचा।
(३)खेचरौ भुवि नृत्यन्तौ स्वकबन्धावपश्यताम्४९

शस्त्राघातैरित्यर्थः। मूर्च्छितं मोहं गतं रथिनं रथारूढं योधम्। कर्म। भूयः पुनर्वारं न प्राहरत् न प्रहृतवान्। किन्तु प्रत्याश्वसन्तं पुनरुज्जीवन्तं तमिति शेषः। अन्विच्छन् अभिलषन् सन् लोभतः तेन सह पुनर्युद्धलोभात् हेतोः युधि युद्धभूमौ अतिष्ठत् स्थितः प्रतीक्षाञ्चक्रे इत्यर्थः। पुनःप्रहारे युद्धलाभासम्भवादिति भावः ॥ ४७ ॥

अन्योन्यमिति ॥ वराणि श्रेष्ठानि आयुधानि प्रासप्रभृतीनि ययोः तथोक्तौ। तथा अन्योन्यं परस्परेण। करणेन। गतप्राणौ गमितासू। अतएव दिवं स्वर्गम्। कर्म। गतौ प्राप्तौ कौचित् द्वौ रथिनौ रथारूढौ वीरौ। कर्तारौ। एकाम् एकसंख्यकाम् अप्सरसं सुरकामिनीम्। कर्म। प्राप्य आसाद्य युयुधाते युद्धं चक्रतुः ॥ ४८ ॥

मिथ इति ॥ मिथः अन्योन्यं यथा तथा अर्धचन्द्रेण अर्धचन्द्राख्यशस्त्रेण। करणभूतेन। निर्लूनौ छिन्नौ मूर्धानौ मस्तकौ ययोः तादृशौ। अतएव खे स्वर्गे चरतः यौ तथोक्तौ। युद्धहतानां देवत्वप्राप्तेरिति भावः। तथा रुचा दीप्त्या उपलक्षितौ। विशेषणे तृतीया। कौचित् अन्यौ रथिनौ रथारूढौ वीरौ। कर्तृभूतौ। भुवि संग्रामस्थले नृत्यन्तौ नृत्यं कुर्वन्तौ सन्तौ स्वयोः निजयोः सम्बन्धिनौ कबन्धौ अपमूर्धकलेवरौ। कर्मभूतौ। अपश्यतां ददृशतुः ॥ ४९ ॥

---

(९) प्रत्याश्वसन्तं मलैनम्। (१) हतप्राणौ, हतप्राणौ।
(२) हृषितौ रुषा। (३) खचरैः।

रणाङ्गणे (४)शोणितपङ्कपिच्छिले
कथं कथञ्चिन्ननृतुर्धृतायुधाः ।
नदत्सु तूर्येषु परेतयोषितां
गणेषु गायत्सु कबन्धराजयः ॥ ५० ॥

इति सुररिपुर्वृत्ते युद्धे सुरासुरसैन्ययो
रुधिरसरितां मज्जद्दन्तिव्रजेषु तटेष्वलम् ।
अरुणनयनः (५)क्रोधाद्भीमभ्रमद्भृकुटीमुखः
सपदि ककुभामीशानभ्यागमत्स युयुत्सया ॥५१

रणेति ॥ धृतानि पाणौ गृहीतानि आयुधानि शस्त्राणि याभिः तथोक्ताः, कबन्धानां अपमूर्धकलेवराणां राजयः समूहाः । शोणितपङ्केन रक्तकर्दमेन पिच्छिले मसृणीभूते रणाङ्गणे युद्धभूमौ तूर्येषु रणवाद्यविशेषेषु नदत्सु शब्दायमानेषु तथा परेतानां प्रेतानां सम्बन्धिनीनां योषितां रमणीनां सम्बन्धिषु गणेषु समूहेषु गायत्सु गानं कुर्वत्सु सत्सु । उभयत्र भावाधिकरणम् । कथं कथञ्चित् अत्यन्तकष्टेन ननृतुः नृत्यं कृतवत्यः । वृत्तमत्र वंशस्थविलम् । तदुक्तं—"वदन्ति वंशस्थमुदीरितं जरौ" इति ॥ ५० ॥

इतीति ॥ इति एवंप्रकारेण सुराणां असुराणाञ्च सैन्ययोः सम्बन्धिनि युद्धे वृत्ते चलिते सति । तथा रुधिरस्य शोणितस्य हतसैन्यादीनामिति भावः । सरितां नदीनां सम्बन्धिषु तटेषु तीरेषु अलं भृशं यथा तथा मज्जन्तः अदर्शनं गच्छन्तः दन्तिनां हस्तिनां सम्बन्धिनः व्रजाः समूहाः येषु तथोक्तेषु सत्सु । उभयत्र भावाधिकरणम् । स पूर्वोक्तः, सुराणां देवानां सम्बन्धी रिपुः अरिः तारकासुरः । कर्ता । क्रोधात् कोपात्

(४) शोभित ।
(५) क्रोधापीनभ्रमद्भृकुटीमुखः, क्रोधासीनभ्रमद्भ्रुकुटीमुखः ।

हेतोः अरुणे रक्तवर्णे नयने नेत्रे यस्य तथाभूतः। तथा भीमं भीषणं यथा तथा भ्रमन्तौ चलन्तौ शोभमानेत्यर्थः। भ्रुकुटी भ्रूभङ्गो यस्य तथोक्तं मुखं यस्य तादृशः सन् सपदि सहसा युयुत्सया योद्धुमिच्छया युद्धाभिलाषेणेत्यर्थः। इति तृतीया। ककुभां पूर्वादीनां दिशां मम्बन्धिनः ईशान् पतीन् इन्द्रप्रभृतीन्। कर्म। अभ्यागमत् अभ्यागतः। हरिणी वृत्तम्। लक्षणन्तूक्तं प्राक्॥ ५१॥

इति श्रीचित्रमोहनकृतया मोहिनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये सुरासुरसंग्रामवर्णनं नाम षोड़शः सर्गः।

---

## सप्तदशः सर्गः।

दृष्ट्वाभ्युपेतमथ (१)दैत्यपतिं पुरस्तात्
संग्रामकेलिकुतुकेन घन(२)प्रमोदम्।
योद्धुं मदेन मिमिलुः ककुभामधीशा
बाणान्धकारितदिगम्बर(३)गर्भमित्य॥ १॥

दृष्टेति॥ अथ अनन्तरं तारकस्य संमुखागमनानन्तरमित्यर्थः। ककुभां पूर्वादीनां दिशां सम्बन्धिनः अधीशाः अधिपतयः इन्द्रप्रभृतयः। कर्तारः। संग्रामे युद्धविषये केलिकुतुकेन क्रीड़ाकुतूहलेन हेतुना घनः निविड़ः प्रमोदः आनन्दः यस्य तादृशम्। तथा बाणैः शरैः। करणैः। अन्धकारितः अदर्शनं प्रापितः दिशां आशानां तथा अम्बरस्य आकाशस्य सम्बन्धी गर्भः उदरं येन तथोक्तं दैत्यानाम् असुराणां

---

(१) तं च पतिम्। (२) प्रसादम्। (३) भर्त्सिम्।

देवद्विषां परिवृढो विकटं विहस्य
बाणावलीभि(४)रमरान्विकटान्ववर्ष ।
शैलानिव (५)प्रवरवारिधरो गरिष्ठा-
नद्भिः पराभिरथ गाढमनारताभिः ॥ २ ॥
जन्यद्विषत्प्रभृतिदिक्पतिचापमुक्ता
बाणाः (६)शिता (७)दनुजनायकबाणसङ्घान् ।

सम्बन्धिनं पतिम् ईश्वरं तारकम् । कर्म । पुरस्तात् संमुखतः अभ्युपेतम् आगतं दृष्ट्वा अवलोक्य एत्य आगम्य मदेन गर्वेण हेतुना योद्धुं युद्धं कर्तुं मिमिलुः मिलिता बभूवुः । अस्मिन् सर्गे वसन्ततिलकं वृत्तम् "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति तल्लक्षणात् ॥ १ ॥

देवेति ॥ अथ अनन्तरं देवान् द्विषन्तीति देवद्विषः तेषाम् । द्विषधातोः कर्तरि क्विप्प्रत्ययः । असुराणां सम्बन्धी परिवृढः स्वामी तारकासुरः । कर्ता । विकटम् उत्कटं यथा तथा विहस्य हास्यं कृत्वा, प्रवरः महान् वारिधरः जलधरः । उपमानपक्षे कर्ता । पराभिः अत्यन्ताभिः अनारताभिः अविरताभिः अविच्छिन्नाभिरित्यर्थः । अद्भिः जलैः । करणे । गरिष्ठान् अतिमहतः शैलान् पर्वतानिव । उपमानपक्षे कर्म । बाणानां शराणाम् आवलीभिः निकरैः । करणैः । विकटान् पराक्रान्तान् अमरान् देवान् । उपमेयपक्षे कर्म । गाढं भृशं यथा तथा ववर्ष छादितवान् । उपमेयम् ॥ २ ॥

जन्येति ॥ रणस्य युद्धस्य सम्बन्धिनि अन्ते सीमायाम्

---

(४) अभितः कुपितो ववर्ष ।

(५) प्रबलवारिधरो गरिष्ठानश्रान्ततोभिः, प्रबलवारिधरो परिष्ठानश्रान्तटीभिः, प्रचुरवारिधरो गरिष्ठानश्रान्तनीभिः ।

(६) शितान् । (७) असुरराजकबाणसङ्घान् ।

अङ्काय तार्क्ष्यनिवहा इव नागपूगान्
सद्यो विचिच्छिदुरलं कणशो रणान्ते ॥ ३ ॥
(८)तान् प्रज्वलत्फलमुखै(९)र्विषमैः सुरारि-
नामाङ्कितैः पिहितदिग्गगनान्तरालैः।
(१)आच्छादितस्तृणचयानिव (२)हव्यवाह-
श्चिच्छेद सोऽपि सुरसैन्यशरान् शरौघैः ॥ ४ ॥

जम्भस्य जम्भासुरस्य द्विषन् शत्रुः इन्द्रः प्रभृतिः प्रथमः येषां तथोक्ताः दिशां पूर्वादीनां ये पतयः ईशाः तेषां सम्बन्धिभिः चापैः धनुर्भिः मुक्ताः त्यक्ताः शिताः तीक्ष्णाः बाणाः शराः। उपमेयपक्षे कर्तारः। तार्क्ष्याणां गरुडानां सम्बन्धिनः निवहाः समूहाः। उपमानपक्षे कर्तारः। सद्यः सहसा नागानां सर्पाणां पूगान् समूहानिव। उपमानपक्षे कर्म। अङ्काय सद्यः अलम् अत्यर्थं यथा तथा दनुजानां दैत्यानां नायकस्य नाथस्य तारकस्य सम्बन्धिनः बाणानां शराणां सङ्घान् निचयान्। उपमेयपक्षे कर्म। कणशः क्षुद्रांशैः विचिच्छिदुः संचूर्णित-वन्तः। उपमालङ्कारः ॥ ३ ॥

तानिति ॥ हव्यवाहः अनलः। उपमानपक्षे कर्ता। तृणानां चयान् पुञ्जानिव। स तारकासुरोऽपि आच्छादितः सन्। सुरशरजालैरिति कर्तृपदमूह्यम्। प्रज्वलत् दीप्तिमत् फलं फलकं मुखे येषां तथोक्तैः। तथा विषमैः भीषणैः। तथा सुराणां देवानां सम्बन्धिनः अरेः शत्रोः तारकस्य यत् नाम तेन अङ्कितैः चिह्नितैः अधिकारित्वबोधकैरिति भावः। तथा पिहितम् आवृतं दिशां पूर्वादीनां आशानां गगनस्य आका-शस्य च अन्तरालम् अवकाशः यैः तादृशैः, शराणां बाणानां ओघैः संघैः। करणैः। तान् सुराणां सैन्यानां शरान् बाणान्।

---

(८) ते, तैः। (९) विशिखैः सुरारिम्, समरेऽसुरारिम्।
(१) प्राच्छादयंस्तृणचयैरिव। (२) हव्यवाहम्।

दैत्येश्वरो ज्वलितरोषविशेषभीमः
सद्यो मुमोच युधि यान्विशिखान् (३)सहेलः ।
ते प्रापुरुद्भटभुजङ्गमभीमभावं
(४)गाढं बबन्धुरपि तां(५)स्त्रिदशेन्द्रमुख्यान् ॥५॥

ते नागपाशविशिखैरसुरेण बद्धाः
(६)श्वासानिलाकुलमुखा विमुखा (७)रणास्य ।
दिङ्नायका बलरिपुप्रमुखाः स्मरारि-
सूनोः समीपमगमन्विपदन्तहेतोः ॥ ६ ॥

उपमेयपक्षे कर्म । चिच्छेद छेदयामास । उपमालङ्कारः ॥४॥

दैत्येति ॥ दैत्यानाम् असुराणाम् ईश्वरः प्रभुः तारकः । कर्ता । ज्वलितः दीपितः यः रोषः कोपः तेन विशेषभीमः अतिभीषणः । तथा हेलया अवज्ञया सह वर्तमानः सहेलः सन् सद्यः सहसा युधि संग्रामे यान् विशिखान् बाणान् । कर्म । मुमोच मुक्तवान्, ते विशिखाः । कर्तारः । उद्भटानां भीषणानां भुजङ्गमानां सर्पाणां भीमभावं भीषणतां प्रापुः जग्मुः तद्वद्भीषणा बभूवुरित्यर्थः । अत्र निदर्शनालङ्कारः । लक्षणन्तु दर्पणे स्पष्टम् । तान् त्रिदशेन्द्रः देवेन्द्रः मुख्यः प्रधानं येषां तथोक्तान् इन्द्रप्रभृतीन् । कर्मभूतान् । गाढं दृढं यथा तथा बबन्धुरपि नागपाशप्रभृतिरस्त्रैर्बद्धान् कृतवन्तोऽपीत्यर्थः । ते इति कर्तृपदेन सहान्वयः कार्यः ॥ ५ ॥

ते इति ॥ बलरिपुः इन्द्रः प्रमुखः अग्रगण्यः येषां तथोक्ताः दिशां पूर्वादीनां नायकाः अधिपाः । कर्तारः । असुरेण तारकदैत्येन । कर्त्रा । नागपाशा एव विशिखाः बाणाः तैः करणैः । बद्धाः संयताः निगड़िता इत्यर्थः । अतएव श्वास

(३) सहेलम् । (४) काढम् । (५) त्रिदिवेन्द्र ।
(६) श्वासाकुल । (७) रणान्तात् ।

दृष्टिप्रपातवशतोऽपि पुरारिसूनो-
स्ते नागपाशघनबन्धविपत्तिदुःखात्।
इन्द्राद्यो मुमुचिरे स्वयमस्य देवाः
सेवां (८)व्यधुर्निकटमेत्य महाजिगीषोः॥ ७॥
(९)उद्दीप्तकोपदहनोऽथ सुरेन्द्रशत्रु-
रङ्गाय सारथिमवोचत चण्डबाहुः।

निःश्वासस्य ये अनिलाः वायवः तैः आकुलानि व्याप्तानि मलिनानीत्यर्थः। मुखानि आननानि येषां तादृशाः। अतएव रणस्य रणात्। सम्बन्धविवक्षया पञ्चमीस्थाने षष्ठीप्रयोगः। विमुखाः वैमुख्यं गताः सन्तः विपदः तारककृतोपद्रवस्येत्यर्थः। नाशः अभाव एव हेतुः कारणं तस्मात् हेतोः स्मरारेः हरस्य सम्बन्धिनः सूनोः कार्त्तिकेयस्य समीपं निकटम् अगमन् गतवन्तः॥ ६॥

दृष्टीति॥ ते इन्द्रादयः इन्द्रप्रभृतयः अष्टदिगीशाः। कर्त्तारः। पुरस्य त्रिपुरस्य अरेः शत्रोः हरस्य सम्बन्धिनः सूनोः कुमारस्य दृष्टेः नेत्रस्य यः प्रपातः पतनं तस्य वशतः मात्रतः एव प्रभावेणेत्यर्थः। नागपाशैः नागपाशाख्यशरैः घनः निविड़ः बन्धः बन्धनमेव विपत्तिः विपद् तया यत् दुःखं क्लेशः तस्मात् मुमुचिरे मुक्ता बभूवुः। तथा महतः प्रबलस्य जिगीषोः जेतुमिच्छोः अस्य कार्त्तिकेयस्य निकटं समीपम्। कर्म। स्वयम् आत्मना नत्वपरेणेत्यर्थः। एत्य आगम्य सेवां स्तुतिमित्यर्थः। व्यधुः कृतवन्तः॥ ७॥

अथ उद्दीप्तेत्यादिना श्लोकद्वयेनाह—

उद्दीप्तेति॥ मत्ता इति च॥ अथ अनन्तरं देवानां नाग-

---

(८) व्यधुश्च पुनरित्य।

(९) उद्यत्प्रकोपदहनोऽथ सुरेन्द्रशत्रुः, उद्दप्तकोपदहनोऽप्यसुरेन्द्रसूनुः।

बद्धा मया सुरपतिप्रमुखाः प्रसह्य
बालस्य धूर्जटिसुतस्य निरीक्षणेन ॥ ८ ॥
मुक्ता बभूवुरधुना तदिमान्विहाय
कर्ता(१)स्म्यमुं समरभूमिपशूपहारम् ।
तत्स्यन्दनं सपदि वाहय शम्भुसूनुं
द्रष्टास्मि दर्पितभुजाबलमाहवाय ॥ ९ ॥

पाश्रमुक्त्यनन्तरमित्यर्थः । चण्डो उग्रो बाहू बाहुबलमित्यर्थः । यस्य तथोक्तः । तथा उद्दीप्तः प्रज्ज्वलितः कोपः क्रोध एव दहनः अग्निः यस्य तथाभूतः । सुरेन्द्राणाम् इन्द्रप्रभृतिदेवानां शत्रुः अरिः तारकः । कर्ता । अह्नाय शीघ्रं सारथिं सूतम् । कर्म । अवोचत उक्तवान् । किं तदित्याह—बद्धा इति । सुराणां देवानां पतिः नायकः इन्द्रः प्रमुखः अग्रगामी येषां तथोक्ताः देवाः सुराः। मया । कर्त्रा । प्रसह्य सहसा बद्धाः नाग-पाशेन निगड़िता अपीत्यर्थः । बालस्य अल्पवयस्कस्य । अपि-शब्दोऽत्राध्याह्यः । धूर्जटिसुतस्य हरतनयस्य निरीक्षणेन कृपादृष्ट्या मुक्ता बभूवुः अभूवन् । तत् तस्मात् अधुना इदनीम् इमान् सुरान् । कर्म । विहाय विमुच्य अमुं दृश्यमानं कार्त्तिकेयम् । कर्म । समरस्य संग्रामस्य या भूमिः क्षेत्रं तस्यां पशूनां शृगा-लप्रभृतीनां यः उपहारः उपढौकनं तं कर्तास्मि । युद्धहतोऽयं भक्षणार्थं पशुभ्यो दातव्य इति भावः । तत् तस्मात् हेतोः सपदि सत्वरं स्यन्दनं रथम् । कर्म । वाहय चालय । त्वमिति कर्तृपदमूह्यम् । अनुज्ञायां लोट् । अस्मि अहम् । कर्ता । दर्पितभुजाबलं बाहुबलोद्धतमित्यर्थः । शम्भोः हरस्य सम्बन्धिनं सूनुं तनयम् । कर्म । आहवाय युद्धार्थं द्रष्टा अवलोकयिष्यामि । कुलकम् ॥ ८ ॥ ९ ॥

---

(१) अहम् ।

तत्स्यन्दनः सपदि सारथिसंप्रणुन्नः
(२)प्रक्षुब्धवारिधरधीरगभीरघोषः।
(३)चण्डश्चचाल दलिताखिलशत्रुसैन्य-
मांसास्थि(४)शोणितविपङ्कविलुप्तचक्रः॥१०॥
दृष्ट्वा रथं प्रलयवातचलद्गिरीन्द्र-
कल्पं दलद्बल(५)विरावविशेषरौद्रम्।
अभ्यागतं सुररिपोः सुरराजसैन्यं
क्षोभं जगाम परमं भयवेपमानम्॥ ११ ॥

तदिति॥ प्रक्षुब्धस्य रोषान्वितस्य। प्रलयकालीनस्येति भावः। वारिधरस्य जलदस्येव धीरः गम्भीरः घनः निविड़श्च घोषो यस्य तथाभूतः। तथा दलितस्य चूर्णितस्य अखिलस्य समस्तस्य शत्रुसैन्यस्य अरिसेनायाः मांसेन, अस्थिभिः, शोणित-विपङ्केन रक्तकर्दमेन च विलुप्तानि चक्राणि चरणानि यस्य तादृशः। अतएव चण्डः प्रचण्डः तस्य तारकासुरस्य सम्बन्धी स्यन्दनः रथः। कर्ता। सपदि तत्क्षणमेव। न तु विलम्बेनेति भावः। सारथिना सूतेन तारकस्येति शेषः। कर्त्रा। संप्रणुन्नः प्रेरितः सन् चचाल जगाम॥ १० ॥

दृष्ट्वेति॥ सुराणां देवानां राज्ञः अधिपस्य सैन्यं सेना। कर्तृ। प्रलये कल्पान्तसमये जातेन वातेन पवनेन चलतः गिरीन्द्रात् पर्वतराजात् ईषदूनम्। तथा दलन्ति चूर्णीभवन्ति यानि बलानि सैन्यानि तेषां यः विरावः आर्तनादः तेन विशेषरौद्रम् अतिभयङ्करम्। तथा अभ्यागतं समुपस्थितं सुराणां देवानां रिपोः अरेः तारकस्य सम्बन्धिनं रथं स्यन्दनम्।

(२) प्रारब्ध। (३) चण्डम्।
(४) शोणितसुपभुविलुप्तवेगः, शोणितजपभुविलुप्तचक्रः।
(५) विराम।

प्रक्षुभ्यमाणमवलोक्य दिगीशसैन्यं
शम्भोः सुतं (६)कलहकेलिकुतूहलोत्कम् ।
उद्दामदोःकलितकार्मुकदण्डचण्डः
प्रोवाच वाचमुपगम्य स कार्त्तिकेयम् ॥ १२ ॥
रे (७)शम्भुतापसशिशो वत मुञ्च मुञ्च
(८)दोर्दर्पमत्र विरम (९)त्रिदिवेन्द्रकार्यात् ।

कर्म। दृष्ट्वा अवलोक्य भयेन शङ्कया वेपमानं कम्पमानं सत् परमम् अत्यर्थं क्षोभम् उद्वेगम्। कर्म। जगाम प्राप्तवान् क्षुब्धवानित्यर्थः ॥ ११ ॥

प्रक्षुभ्येति ॥ स तारकासुरः। कर्त्ता। दिगीशानाम् अष्टदिक्पालानां सर्व्वम् सैन्यम्। कर्मभूतम्। प्र प्रकर्षेण क्षुभ्यमाणं क्षोभं गच्छत्। क्षुभधातुर्दैवादिकस्तदाकृतिगणत्वात्। अवलोक्य निरीक्ष्य उद्दामौ उत्कटौ यौ दोषौ बाहू तयोः कलितः गृहीतः कार्मुकं धनुरेव दण्डः तेन चण्डः उत्कटः सन्। कलहः विग्रह एव केलिः क्रीड़ा तत्र यत् कुतूहलं कौतुकं तत्र उत्कम् उत्सुकम्। तथा शम्भोः महादेवस्य सम्बन्धिनं सुतं तनयं कार्त्तिकेयम्। कर्म। उपगम्य प्राप्य वाचं निम्नोक्तं वचनं प्रोवाच उक्तवान् ॥ १२ ॥

अथ रे इत्यादिभिस्त्रिभिः श्लोकैर्वाचं विवृणोति—

रे इति ॥ रे भोः शम्भुरेव तापसः तपस्वी तस्य शिशो कुमार। रे इति अवज्ञासूचकसम्बोधनपदम्। अत्र मयि। विषयाधिकरणम्। दोर्दर्पं भुजवीर्यजनितमहङ्कारं मुञ्च मुञ्च। सर्वथैव त्यजेत्यर्थः। त्वमिति कर्तृपदमूह्यम्। तथा त्रिदिवेन्द्रः महेन्द्रः तस्य यत् कार्यं मदीयवधरूपं तस्मात्

---

(६) समरकेलि। (७) शम्भुतात्मज शिशो।
(८) दोर्द्दर्पम। (९) त्रिदिवेश।

(१)शस्त्रैः किमत्र भवतोऽनुचितै(२)रतीव
(३)बालत्वकोमलभुजातुलभारभूतैः ॥ १३ ॥
(४)एवं (५)त्वमेव तनयोऽसि गिरीशगौर्यो:
किं यासि कालविषयं विषमैः शरैर्मे।
(६)संग्रामतोऽपसर जीव पितुर्जनन्याः
(७)तूर्णं प्रविश्य वरमङ्कतलं विधेहि ॥ १४ ॥

विरम निवृत्तो भव। विपूर्वत्वात् रमधातोः परस्मैपदित्वम्। तत्र हेतुमाह—शस्त्रैरिति। अतीव बालस्येति शेषः। एतेनास्याक्षमत्वं व्यज्यते। भवतः तव बालत्वात् शैशवात् कोमलौ पेलवौ यौ भुजौ बाहू तयोः अतुलं बहु भारभूतैः वहनायोग्यैरित्यर्थः। अतएव अत्र मयि अनुचितैः अनुपयुक्तैः शस्त्रैः कृपाणादिभिः किम् अलम्। किंशब्दयोगे तृतीया। तव शस्त्राणि मयि निष्फलानीति भावः॥ १३॥

एवमिति॥ रे शिशो। सम्बोधनपदमिदमूह्यम्। एवं पूर्वोक्तप्रकारः त्वम्। कर्ता। गिरीशस्य हरस्य गौर्याः पार्वत्याश्च सम्बन्धी तनयः पुत्रः असि भवसि एव। गिरीशगौरीतनयत्वादेतादृशकार्ये त्वत्प्रवृत्तिरिति भावः। तथापि बालस्त्वमिति शेषः। मे मम विषमैः भीषणैः शरैः बाणैः। करणैः। किं कथं कालस्य शमनस्य विषयं गृहं यासि धावसि। मया सह योद्धुं प्रवृत्तस्य ते मरणमवधारितमिति भावः। इदानीं कर्तव्यतामाह—संग्रामतः युद्धात् अपसर दूरं गच्छ। तथा जीव प्राणिहि। युद्धादपसरणे ते जीवनहानिर्नास्तीति भावः। तथा तूर्णं सत्वरं यथा तथा पितुः जनकस्य मातुः जनन्याश्च

---

(१) शश्वत्। (२) असारैः, चरित्रैः।
(३) बालत्वकोमलभुजक्रमभारभूतैः, बालाब्जकोमलभुजाक्रमभीरुभूतैः। (४) एकः। (५) एकतनयः।
(६) तत्रासतः। (७) पूर्णम्।

सम्यक् स्वयं किल विमृश्य गिरीशपुत्र
जम्भद्विषोऽस्य जहिहि प्रतिपक्षमाशु ।
एष स्वयं पयसि मज्जति (८)दुर्विगाह्ये
पाषाणनौरिव निमज्जयते पुरा त्वाम् ॥ १५ ॥

इत्थं निशम्य वचनं युधि तारकस्य
कम्प्राधरो विकचकोकनदारुणाक्षः ।
(९)क्षोभात्त्रिलोचनसुतो धनुरीक्षमाणः
प्रोवाच वाचमुचितां (१)परिमृश्य शक्तिम् ॥१६॥

प्रविश्य निकटं गत्वा अङ्कतलं क्रोड़देशं वरं श्रेष्ठं विधेहि कुरु ॥ १४ ॥

सम्यगिति ॥ हे गिरीशपुत्र शिवकुमार स्वयं विमृश्य विविच्य जम्भं जम्भासुरं द्वेष्टीति तथोक्तस्य इन्द्रस्य सम्बन्धिनं प्रतिपक्षं शत्रुम् अपराजेयमिति भावः । मामित्यर्थः । कर्म । आशु तूर्णं जहिहि त्यज । किलेति निश्चयार्थमव्ययम् । एष जम्भारिपुः । अनेनात्मनिर्देशः । स्वयं दुर्विगाह्ये अतलस्पर्शे इत्यर्थः । पयसि जले पाषाणस्य प्रस्तरस्य नौः नौकेव मज्जति मग्नो भवति । तथा मां पुरा निमज्जयते निमज्जयिष्यति । अत्र पुराशब्दयोगे भवष्यत्काले लट्प्रयोगः । इन्द्रशत्रुत्वान्मया सह ते युद्धं न सम्भाव्यते इति भावः । उत्प्रेक्षेयम् ॥ १५ ॥

इत्थमिति ॥ त्रिलोचनस्य हरस्य सम्बन्धी सुतः कुमारः । कर्ता । तारकस्य सम्बन्धि इत्थं उक्तप्रकारं गर्वितमिति भावः । वचनं वाक्यं निशम्य आकर्ण्य क्षोभात् कोपात् हेतोः कम्प्राधरः कम्पिताधरोष्ठः । तथा विकचे प्रस्फुटिते कोकनदे रक्तक-

---

(८) दुर्विगाह्ये, दुर्विगाढ़े ।
(९) कोपात् । (१) परिमृज्य ।

दैत्याधिराज भवता (२)यदवादि गर्वात्
तत्सर्वमप्युचितमेव तवैव किं तु ।
द्रष्टास्मि ते प्रवरबाहुबलं वरिष्ठं
शस्त्रं गृहाण कुरु कार्मुकमाततज्यम् ॥ १७ ॥
इत्युक्तवन्तमवदत्त्रिपुरारिपुत्रं
दैत्यः क्रुधौष्ठमधरं किल (३)निर्विभिद्य ।

मले इव अरुणे रक्तवर्णे अक्षिणी नयने यस्य तथोक्तः । तथा धनुः शरासनम् ईक्षमाणः अवलोकयन् सन् शक्तिं शक्तिसंज्ञकमस्त्रं परिमृश्य स्पृष्ट्वा उचिताम् आत्मानुरूपां वाचं वाक्यम् । कर्म । प्रोवाच उक्तवान् ॥ १६ ॥

दैत्येति ॥ हे दैत्याधिराज असुरेन्द्र तारक । भवता त्वया । कर्त्रा । गर्वात् दर्पात् अहङ्कारादिति यावत् । यत् पूर्वोक्तं वाक्यम् । कर्म । अवादि कथितं तत् सर्वमपि तवैव । अत्रैवशब्दोऽन्यव्यवच्छेदकः । उचितमेव उपयुक्तमेव भवतीति शेषः । किन्तु तवोक्तवाक्यस्योचितत्वेऽपि ते तव सर्वस्मिन् वरिष्ठं महत् प्रवरं श्रेष्ठं, बाह्वोः हस्तयोः यत् बलं वीर्यं तत् । कर्म । द्रष्टास्मि अवलोकयिष्यामि । शस्त्रं स्वायुधं गृहाण तथा कार्मुकं धनुः । कर्म । आतता आरोपिता ज्या मौर्वी यत्र तादृशं कुरु । त्वमिति कर्तृपदमूह्यम् ॥ १७ ॥

इतीति ॥ दैत्यः तारकासुरः । कर्ता । इति पूर्वोक्तं वाक्यं उक्तवन्तं कथितवन्तं त्रिपुरारेः हरस्य पुत्रं तनयं कार्तिकेयमित्यर्थः । कर्म । क्रुधा रोषेण । हेतौ तृतीया । ओष्ठम् अधरञ्च निर्विभिद्य किल दंशित्वेव । अत्र किलशब्द एवार्थे प्रयुक्तः । अवदत् उवाच । किं तदित्याह—युद्धार्थमिति । भोः शिशो । सम्बोधनपदमिदमूह्यम् । युद्धार्थं युद्धं कर्तुम् उत्कटम् उल्वणं भुजयोः हस्तयोः यत् बलं वीर्यं तेन

(२) यदवोचि । (३) निर्विभुज्य ।

युद्धार्थमुद्भट(४)भुजाबलदर्पितोऽसि
बाणान् सहस्व मम (५)सादितशत्रुपृष्ठान् ॥१८॥
दुःप्रेक्षणीयमरिभिर्धनुराततज्यं
सद्यो विधाय विषमान्विशिखान्यधत्त ।
स क्रोधभीमभुजगेन्द्रनिभं स्वचापं
(६)चण्डं प्रपञ्चयति जैत्रशरैः कुमारे ॥ १९ ॥

दर्पितः अहङ्कृतोऽसि। त्वमिति कर्तृपदमाहार्यम्। अतः। पदमिदमूह्यम्। सादितानि विदारितानि शत्रुपृष्ठानि अरिपृष्ठदेशाः यैः तथाभूतान् मम सम्बन्धिनः बाणान् शरान्। कर्मभूतान्। सहस्व सह्यान् कुर्वित्यर्थः। मया सह युध्यतस्ते महती दुर्दशा भविष्यतीति भावः ॥ १८ ॥

दुःप्रेक्षणीयेति ॥ स तारकासुरः। कर्ता। सद्यः तत्क्षणमेव अरिभिः शत्रुभिः। कर्तृभिः। दुःप्रेक्षणीयं दुरवलोकनीयं भयजनकत्वादिति भावः। धनुः। कर्म। आतता विस्तृता ज्या मौर्वी यत्र तथोक्तं विधाय सम्पाद्य ज्यायुक्तं कृत्वेत्यर्थः। क्रोधेन रोषेण भीमः भयङ्करः भुजगानां नागानां यः इन्द्रः श्रेष्ठः तन्निभं तत्तुल्यं तथा चण्डं भीषणं स्वस्य आत्मनः चापं धनुः। कर्म। जैत्राः जयसाधना ये शराः बाणाः तैः। करणैः। प्रपञ्चयति संयोजयति कुमारे कार्तिकेये विषमान् भीषणान् विशिखान् बाणान्। कर्म। न्यधत्त निहितवान् ॥ १९ ॥

---

(४) भुजावलिदर्पितः।
(५) शातितशत्रुपृष्ठान्, शोणितरक्तपृष्ठान्।
(६) चण्डं प्रपञ्चयति जैत्रशरे कुमारे, चण्डप्रभं यशसि जैत्रशरं कुमारः।

कर्णान्तमेत्य दितिजेन विकृष्यमाणं
(७)कोदण्डमेतदभितः (८)सुषुवे शरौघान् ।
व्योमाङ्गणे लिपिकरान् (९)किरणप्ररोहैः
(१)सान्द्रैरशेषककुभां (२)पलितं करिष्णून् ॥२०॥
बाणैः सुरारिधनुषः प्रसृतैरनन्तै-
र्निर्घोषभीषित(३)भटो लसदंशुजालैः ।

कर्णेति ॥ दितेः असुरजनन्याः जायते उत्पद्यते यः तथोक्तेन । जनधातोः कर्तरि डप्रत्ययः । तारकासुरेण । कर्त्रा । विकृष्यमाणम् आकृष्यमाणम् एतत् पूर्वोक्तं कोदण्डं चापम् । कर्तृ । कर्णान्तं श्रवणसमीपम् एत्य आगम्य आकर्णाकृष्टं भूत्वेत्यर्थः । अभितः समन्तात् सान्द्रैः निविडैः किरणप्ररोहैः मयूखाङ्कुरैः व्योम्नः गगनस्य सम्बन्धिनि अङ्गणे चत्वरे लिपिं चित्रकर्मेत्यर्थः । कुर्वन्तीति तथोक्तान् । तथा नास्ति शेषः यासां तथोक्तानां ककुभां सर्वदिशां पलितं वार्धक्यजनितशुक्लत्वं करिष्णून् कर्तुमिच्छून् । प्रतीयमानोत्प्रेक्षा । शराणां बाणानां ओघान् संघान् । कर्मभूतान् । सुषुवे उत्पादयामास ॥ २० ॥

बाणैरिति ॥ निर्घोषेण रवेण बाणानामिति शेषः । कर्त्रा । भीषिताः भयं प्रापिताः भटाः योद्धारः यस्य तादृशः । तथा अस्वीकृतानि आच्छादितानि अखिलानि सकलानि सुरेश्वरस्य देवेन्द्रस्य सम्बन्धीनि सैन्यानि यस्य तथोक्तः । ईशसूनुः शम्भुकुमारः कार्तिकेयः । कर्ता । सुराणां देवानाम् अरेः शत्रोः तारकासुरस्य सम्बन्धिनः धनुषः चापात् प्रसृतैः

---

(७) कोदण्डदण्डम् । (८) शुशुभे । (९) स्वकरप्रहामान् ।
(१) चन्द्रैः । (२) पलितवत्करिष्यत् । (३) भटैः ।

मन्धीकृताखिलसुरेश्वर(४)सैन्य ईश-

सूनुः कुतोऽपि विषयं न जगाम दृष्टेः ॥२१॥

देवेन मन्मथरिपोस्तनयेन गाढ-

माकर्णकृष्टमभितो धनुराततज्यम् ।

बाणानसूत (५)निशितान्युधि यान् (६)सुजैत्रा-

स्तैः सायका (७)विभिदिरे सहसा सुरारेः॥२२

रेजे सुरारिशरदुर्दिनके निरस्ते

(८)सद्यस्तरां निखिलखेचर(९)खेदहेतौ ।

निर्गतैः। तथा लसन्ति दीप्यमानानि अंशूनां मयूखानां जालानि समूहाः येषां तथाभूतैः। तथा नास्ति अन्तः शेषः येषां तादृशैः बाणैः शरैः। करणैः। कुतोऽपि कस्मादपि दृष्टेः दर्शनस्य विषयं गोचरत्वं न जगाम गतवान्। शराच्छन्नशरीरत्वादिति भावः ॥ २१ ॥

देवेनेति ॥ मन्मथस्य कामस्य सम्बन्धिनः रिपोः शत्रोः शिवस्य तनयेन पुत्रेण देवेन। कर्त्रा। गाढं भृशं यथा तथा आकर्णकृष्टं श्रवणपर्यन्तकृष्टं तथा आतता आरोपिता ज्या मौर्वी यत्र तादृशं धनुः। कर्म। युधि संग्रामे अभितः सर्वतः यान् निशितान् तीक्ष्णान् बाणान् शरान् असूत जनयामास। तैः बाणैः। करणैः। सुराणां अरेः शत्रोः तारकासुरस्य सम्बन्धिनः सु अतिशयेन जैत्राः जयशीलाः सायकाः बाणाः। कर्म। सहसा शीघ्रं विभिदिरे खण्डीकृताः। कर्मणि लिट् ॥ २२ ॥

रेजे इति ॥ निखिलाः समस्ताः ये खेचराः आकाश-

(४) सैन्यकोऽसौ कृताकृतिः सः, सैन्यकैः सः कृतः कुतोऽपि।
(५) विविधान्। (६) विजैत्रैः, विजैत्रान्। (७) विविदिरे।
(८) सद्यः स्वयम्। (९) खिन्नदेहे।

(१)देवः प्रभाप्रभुरिव स्मरशत्रुसूनुः
प्रद्योतनः सुघनदुर्धरधाम(२)धामा ॥ २३ ॥

तत्राथ दुःसहतरं समरे (३)तरस्वी
(४)धामाधिकं दधति धीरतरं कुमारे।
मायामयं समरमाशु महासुरेन्द्रो
माया(५)प्रचारचतुरो रचयाञ्चकार ॥ २४ ॥

अह्नाय कोपकलुषो विकटं विहस्य
(६)व्यर्थां समर्थ्य वरशस्त्रयुधं कुमारे।

विहारिणः तेषां सम्बन्धिनः खेदस्य क्लेशस्य हेतौ कारणे सुराणां देवानाम् अरेः शत्रोः तारकासुरस्य शराणां सायकानां दुर्दिनके वर्षणे निरस्ते निवारिते सति। कुमारेणेति कर्तृपदमाहार्यम्। सद्यस्तरां सहसा देवः स्मरशत्रुसूनुः हरतनयः। कर्ता। प्रभाप्रभुः सूर्य इव प्र प्रकर्षेण द्योतनः दीप्यमानः। तथा सु अतिशयेन घनानां निविडानां, दुर्धराणां दुर्वहानाञ्च धाम्नां तेजसां धाम स्थानं आधारभूतः सन्नित्यर्थः। रेजे दिदीपे ॥ २३ ॥

तत्रेति ॥ अथ अनन्तरं तत्र संग्रामे कुमारे कार्त्तिकेये दुःसहतरं सोढुमशक्यतरं तथा धीरतरं अतिगम्भीरं तथा अधिकं महत् धाम तेजः। कर्म। दधति धारयति सति। तरः बलमस्ति यस्य स तरस्वी महान् असुरेन्द्रः तारकः। कर्ता। मयायाः कपटस्य प्रचारे प्रकाशे चतुरः पटुः सन् मयामयं कपटप्रचुरं समरं संग्रामम्। कर्म। आशु शीघ्रं यथा तथा रचयाञ्चकार कल्पितवान् ॥ २४ ॥

---

(१) देवप्रभोः प्रभुः। (२) धाम। (३) तरसा।
(४) धामाधिकं दधति धीरतरे, धामोदधावधिकधीरतरः।
(५) प्रपञ्च। (६) व्यर्थम्।

(७)जिष्णुर्जगद्विजयदुर्ललितः सहेलं
वायव्यमस्त्रमसुरो धनुषि न्यधत्त ॥ २५ ॥
(८)सन्धानमात्रमपि यस्य युगान्तकाल-
(९)भूतभ्रमं परुषभीषणघोरघोषः ।
उद्भूतधूलि(१)पटलैः पिहिताम्बराशः
प्रच्छन्नचण्डकिरणो (२)व्यसरत्समीरः ॥ २६ ॥

अक्लायेति । जगतां भुवनानां कर्मभूतानां विजयेन पराजयेन दुर्ललितः दुर्विनीतः । तथा जिष्णुः जयशीलः स असुरः तारकः । कर्ता । अक्लाय सहसा कोपकलुषः रोषमलिनः सन् कुमारे कार्तिकेये वरैः श्रेष्ठैः आयुधैः अस्त्रैः या युत् युद्धं तां व्यर्थां निष्फलां समर्थ्य विचार्य तथा विकटम् उत्कटं यथा तथा विहस्य हास्यं कृत्वा हेलया अवज्ञया सह वर्तमानं यथा तथा धनुषि स्वचापे वायव्यं वायुदेवतम् अस्त्रम् । कर्म । न्यधत्त निहितवान् योजयामासेत्यर्थः ॥ २५ ॥

सन्धानेति ॥ यस्य वायव्यास्त्रस्य सन्धानमात्रमपि चापसंयोगमात्रेणैव परुषः कर्कशः, भीषणः भयानकः, घोरः गभीरः घोषः शब्दः यस्य तादृशः । तथा उद्भूतैः उत्पतितैः धूलीनां रजसां पटलैः पुञ्जैः । कर्तृभिः । पिहिताः आच्छादिताः अम्बरं गगनम्, आशाः पूर्वादिदिशश्च येन तथाभूतः । अतएव प्रच्छन्नः आच्छादितः चण्डकिरणः सूर्यः येन तादृशः समीरः पवनः । कर्ता । युगान्तस्य प्रलयस्य यः कालः समयः तस्मात् भूतः जातः भ्रमः भ्रान्तिः यत्र तत् यथा तथा व्यसरत् ववाह ॥ २६ ॥

---

(७) जिष्णौ । (८) सन्धानमात्रसमभवत्, सन्धानकालसमभवत् ।
(९) भूमभ्रमः ।
(१) पटलीपिहिताम्बरान्तः, पटलीपिहिताम्बराशः, पटलीपिहिताम्बराङ्कः । (२) व्यवहत्, अभ्यसरत् ।

कुन्दोज्ज्वलानि सकलातपवारणानि
धूतानि तेन मरुता सुरसैनिकानाम्।
उड्डीयमान(३)कलहंसकुलोपमानि
(४)मेघाभधूलिमलिने नभसि प्रसस्रुः ॥२७॥

विध्वस्य तेन सुरसैन्यमहापताका
नीता (५)नभःस्थलमलं नवमल्लिकाभाः।
स्वर्गापगाजलमहौघसहस्रलीलां
व्यातेनिरे (६)दिवि सिताम्बरकैतवेन ॥२८॥

कुन्देति॥ सुराणां देवानां सम्बन्धिनां सैनिकानां सैन्यानां सम्बन्धीनि कुन्दानीव कुन्दाख्यपुष्पाणीव उज्ज्वलानि शुभ्राणि सकलानि आतपवारणानि छत्राणि। कर्तृणि। तेन मरुता वायुना। कर्त्रा। धूतानि चालितानि अतएव उड्डीयमानानाम् उड्डच्छतां कलहंसानां कुलोपमानि कुलतुल्यानि सन्ति मेघस्य जलदस्येव आभा दीप्तिः येषां तथोक्तैः मलिनैरित्यर्थः। धूलिभिः रजोभिः मलिने कृष्णवर्णे नभसि गगने प्रसस्रुः छन्नानि बभूवुरित्यर्थः॥ २७॥

विध्वस्येति॥ नवानां नूतनविकासितानां मल्लिकानां मल्लिकाख्यपुष्पाणामिव आभा सादृश्यं यासां तादृशाः। सुरसैन्यानां देवसेनानां सम्बन्धिन्यः महत्यः पताकाः। कर्त्र्यः। तेन वायुना। कर्त्रा। अलं भृशं यथा तथा विध्वस्य खण्डयित्वा नभःस्थलं गगनं नीताः प्रापिताः सत्यः दिवि आकाशे सितं शुभ्रं यत् अम्बरं वसनं तस्य कैतवेन छलेन स्वर्गस्य आकाशस्य या आपगा नदी मन्दाकिनी तस्याः जलस्य ये महान्तः

(३) वरहंस। (४) सङ्ग्रामधूलिमलिने, मेघाभ्रधूलिमिलिते।
(५) नभस्तलम्।
(६) दिविचरीं चिरविभ्रमेण, दिविचरीचिरविभ्रमेण।

धूतानि तेन सुरसैन्यमहागजानां
सद्यः (७)शतानि विधुराणि (८)दलत्कुथानि।
पेतुः क्षितौ कुपितवासववज्रलून-
पक्षस्य भूधरकुलस्य तुलां वहन्ति ॥ २९ ॥
(९)तास्ताः खरेण मरुता रथराजयोऽपि
दोधूयमाननिपतिष्णु(१)तुरङ्गमाश्च।
(२)विस्रस्तसारथिकुलप्रवराः समन्ताद्
(३)व्याहत्य पेतुरवनौ सुरवाहिनीनाम् ॥ ३० ॥

ओघाः प्रवाहाः तेषां सहस्रस्य या लीला विलासः तां व्यातेनिरे विस्तारयामासुः गता इत्यर्थः ॥ २८ ॥

धूतानीति ॥ तेन वायुना। कर्त्रा। धूतानि चालितानि तथा विधुराणि कातराणि तथा दलन् छिन्नः कुथः पृष्ठास्तरणभेदः येषां तादृशानि। अतएव कुपितः क्रुद्धः यो वासवः इन्द्रः तस्य वज्रेण वज्राख्यशस्त्रेण लूनाः छेदं प्राप्ताः पक्षाः यस्य तथोक्तस्य भूधराणां पर्वतानां कुलस्य समूहस्य तुलां तुल्यतां सादृश्यमिति यावत्। वहन्ति धारयन्ति सुराणां देवानां सैन्येषु सेनासु महतां गजानां सम्बन्धीनि शतानि। कर्तृणि। सद्यः सहसा क्षितौ रणभूमौ पेतुः निपतन्ति। उपमालङ्कारः ॥ २९ ॥

ता इति ॥ खरेण प्रचण्डेन मरुता वायुना। कर्त्रा। दोधूयमानाः वारंवारं कम्प्यमानाः। अतएव निपतिष्णवः निपतनशीलाः तुरङ्गमाः घोटकाः यासां तादृशाः। तथा

---

(७) कुलानि। (८) गलत्कुथानि।
(९) भ्रष्टाः। (१) तुरङ्गमध्ये।
(२) विस्रस्तसारथिवरप्रकराः, विध्वस्तसारथिरथप्रवराः।
(३) व्याहत्तिमापुः।

छित्वायुधानि सुरसैन्य(४)तुरङ्गवाहा
वातेन तेन (५)विधुराः सुरसैन्यमध्ये।
(६)शस्त्राभिघातमनवाप्य निपेतुरुर्व्यां
स्वीयेषु (७)वाहनवरेषु पतत्सु सत्सु ॥ ३१ ॥
तेनाहतास्त्रिदशसैन्यपदातयोऽपि
स्रस्तायुधाः सुविधुराः परुषं रसन्तः।

प्रशस्ताः विश्रुताः सारथिकुलप्रवराः सूतसमूहश्रेष्ठाः यासां तथोक्ताः। सुराणां देवानां याः वाहिन्यः सेनाः तासां सम्बन्धिन्यः ताः ताः पूर्वोक्ताः रथानां स्यन्दनानां राजयः समूहाः अपि। कर्त्र्यः। समन्तात् सर्वतः व्यावृत्य विपरिवृत्य पर्याकुला भूत्वेत्यर्थः। अवनौ युद्धभूमौ पेतुः पतिताः ॥ ३० ॥

छित्वेति ॥ तेन वातेन वायुना विधुराः कातराः सुराणां देवानां यानि सैन्यानि तेषु तुरङ्गवाहाः अश्वारूढाः। कर्तारः। सुराणां यानि सैन्यानि तेषां मध्ये आयुधानि शस्त्राणि छित्वा विसृज्य शस्त्राणां यः अभिघातः प्रहारः तम्। कर्म। अनवाप्य अप्राप्य अप्नोति शेषः। स्वीयेषु स्वकीयेषु वाहनानां घोटकानां वरेषु श्रेष्ठेषु पतत्सु भूमिं गच्छत्सु सत्सु उर्व्यां पृथिव्यां निपेतुः निपतिताः ॥ ३१ ॥

तेनेति॥ त्रिदशसैन्येषु पदातयः पादचारिणः वीराः अपि। कर्तारः। तेन वायुना। करणं। आहताः ताड़िताः। अतएव स्रस्तायुधाः पतितशस्त्राः। अतएव सु अतिशयेन विधुराः कातराः। तथा पुरुषं कर्कशं यथा तथा रसन्तः शब्दायमानाः सन्तः वात्यया वायुसंघेन विवर्तदलवत् भ्रान्तपत्रवत् दूरम् आधिक्येन भ्रमं भ्रान्तिम्। कर्म। एत्य आसाद्य

---

(४) तुरङ्गधारावेगेन, तुरङ्गवारा दैत्येन।
(५) विधुता विधुरा रणान्ते।
(६) शस्त्राभिघातमथिताः परिपेतुः। (७) वारणवरेषु।

(८)वात्याविवर्तदलवद्भ्रममेत्य दूरं
निःपेतुरम्बरतलाद्वसुधातले(९)ऽस्मिन् ॥ ३२ ॥
इत्थं विलोक्य सुरसैन्य(१)मथो अशेषं
दैत्येश्वरेण विधुरीकृतमस्त्रयोगात् ।
स्वर्लोकनाथ(२)कमलाकुशलैकहेतु
र्दिव्यं प्रभावमतनोद(३)तनुः स देवः ॥ ३३ ॥
तेनो(४)ज्झितं सकलमेव सुरेन्द्रसैन्यं
स्वास्थ्यं प्रपद्य पुनरेव (५)युधि प्रवृत्तम् ।

अम्बरस्य गगनस्य तलात् मध्यात् अस्मिन् वसुधातले पृथिव्यां निपेतुः पतिताः ॥ ३२ ॥

इत्थमिति ॥ अथो अनन्तरम् अतनुः महान् । शक्त्यादि-कुशल इत्यर्थः । स उर्वोक्तः देवः कार्तिकेयः । कर्ता । अशेषं समग्रं सुराणाम् इन्द्रादीनां सैन्यम् । कर्म । दैत्यानाम् असुराणाम् ईश्वरेण तारकेण । कर्त्रा । इत्थम् अनेन प्रकारेण अस्त्रस्य वायव्यस्य योगात् प्रयोगात् हेतोः अविधुरं विधुरं सम्पद्यमानं कृतं विधुरीकृतम् । अभूततद्भावे च्विप्रत्ययः । पीड़ितमित्यर्थः । विलोक्य दृष्ट्वा दिवि भवं दिव्यम् अलोकसामान्यमित्यर्थः । प्रभावं बलम् । कर्म । अतनोत् विस्तारयामास । पवननाशकास्त्रं चिक्षेपेत्यर्थः । यतः स्वर्लोकनाथस्य इन्द्रस्य कमलायाः लक्ष्म्याः कुशले एकहेतुः अद्वितीयनिदानम् ॥३३॥

तेनेति ॥ तेन कार्तिकेयसंक्रान्तप्रभावेण उज्झितं वायव्यास्त्रनिर्मुक्तं सकलमेव समस्तमेव सुरेन्द्रस्य देवेन्द्रस्य

(८) वात्या विधूतदलवद्भ्रमम्, वायोर्हि हस्तदलवुर्द्धमिव ।
(९) अपि, ते । (१) अशेषमेव ।
(२) कमलाकसनैकहेतुम्, कमलाकुशलैकहेतुम् ।
(३) अतनुम् । (४) उद्धृतम्, अन्वितम् । (५) युधे ।

दृष्ट्वासृजद्दहनदैवतमस्त्रमिद्ध-
(६)मुद्दीप्तकोपदहनः सहसा सुरारिः ॥ ३४ ॥
(७)वर्षातिकालजलदद्युतयो नभोऽन्ते
(८)गाढान्धकारितदिशो घनधूमसङ्घाः ।
सद्यः प्रसस्रुरसितोत्पलदामभासो
दृग्गोचरत्वमखिलं (९)न हि सन्नयन्तः ॥३५॥

सैन्यम् । कर्मभूतम् । स्वास्थ्यम् अविकलत्वं प्रपद्य लब्ध्वा पुनः युधि संग्रामे एव नतु पलायने इति भावः । प्रवृत्तं नियुक्तं दृष्ट्वा विलोक्य उद्दीप्तः यः कोपः रोषः स एव दहनः अनलः यस्य तादृशः । सुराणाम् अरिः तारकः । कर्ता । सहसा तत्-क्षणमेव इद्धं प्रज्वलितं दहनदैवतम् आग्नेयम् अस्त्रम् । कर्म । असृजत् तत्याज । तुदादिगणीयात् सृजधातोर्लङ् ॥ ३४ ॥

वर्षेति । वर्षेषु अतिकालानाम् अतिकृष्णानां जलदानां मेघानामिव द्युतिः शोभा येषां तादृशाः । तथा गाढं भृशं यथा तथा अन्धकारिताः अन्धकारं प्रापिताः दिशः पूर्वादयः यैः तथोक्ताः । तथा असितानि नीलानि यानि उत्पलानि पद्मानि तेषां यानि दामानि माल्यानि तेषां भास इव भासः दीप्तयः येषां तथाभूताः । घनाः निविड़ाः धूमानां सङ्घाः समूहाः । कर्तारः । अखिलं समग्रं जगत् दृग्गोचरत्वं दृष्टि-विषयत्वं नहि सन्नयन्तः नैव प्रापयन्तः सन्तः सर्वेषां दृष्टिशक्तिं हरन्त इत्यर्थः । नीधातुत्वाद्द्विकर्मकत्वम् । नभसः गगनस्य अन्ते अवकाशे सद्यः तत्क्षणमेव प्रसस्रुः निस्सारं जगाम ॥ ३५ ॥

---

(६) उच्चैः प्रकोपदहनः । (७) तत्कालजातजलद ।
(८) तत्र । (९) द्युसदां हरन्तः ।

दिक्चक्रवाल(१)गिलनैर्मलिनैस्तमोभि-
र्लिप्तं (२)नभःस्थलमलं घनवृन्दसान्द्रैः ।
धूमैर्विलोक्य (३)मुदिताः खलु राजहंसा
गन्तुं सरः सपदि मानसमीषुरुच्चैः ॥ ३६ ॥

जज्वाल वह्निरतुलः सुरसैनिकेषु
कल्पान्तकालदहनप्रतिमः समन्तात् ।
आशामुखानि (४)विमलान्यखिलानि कीला-
जालैरलं (५)कपिलयन् सकलं नभोऽपि ॥३७॥

दिगिति ॥ राजहंसाः पक्षिभेदाः । कर्तारः । दिशां पूर्वादीनां यत् चक्रवालं मण्डलं तस्य गिलनैः आच्छादकैः । तथा घनानां जलदानां यानि वृन्दानि तद्वत् सान्द्रैः निबिडैः तमोभिः तमोरूपैः मलिनैः कृष्णैः धूमैः नभःस्थलं गगनम् अलं भृशं यथा तथा लिप्तम् आच्छादितं विलोक्य खलु निरीक्ष्यैव मुदिताः हृष्टाः सन्तः मेघोदयभ्रमादिति भावः । सपदि सहसा मानसं मानसाख्यं सरः सरोवरम् । कर्म । गन्तुं यातुम् उच्चैः भृशं यथा तथा ईषुः अभिलषितवन्तः । वर्षाकाले मानसं यान्ति हंसा इति भावः ॥ ३६ ॥

जज्वालेति ॥ सुराणां देवानां सैनिकेषु सेनासु कल्पान्ते प्रलये यः कालदहनः कालानलः तत्प्रतिमः तत्सदृशः । तथा नास्ति तुला सादृश्यं यस्य तथोक्तः महानित्यर्थः । वह्निः । कर्ता । कीलानां शिखानां जालैः संघैः विमलानि निर्मलानि अखिलानि समग्राणि आशानां दिशां मुखानि तथा सकलं समग्रं नभोऽपि गगनञ्च अलं भृशं यथा तथा कपिलयन् पिङ्गरीकुर्वन् समन्तात् सर्वतः जज्वाल शुशुभे ॥ ३७ ॥

---

(१) मिलितैः । (२) नभस्तलम् । (३) पिपिहिताः ।
(४) अपिदधद्विखिलानि । (५) कपिशयन् ।

उज्जागरस्य दहनस्य निरर्गलस्य
ज्वालावलीभिरतुलाभिरनारताभिः।
कीर्णं पयोदनिवहैरिव धूमसङ्घै-
र्व्योमाभ्यलक्ष्यत कुलैस्तड़ितामिवोच्चैः ॥३८॥
(६)गाढ़ाद्भयाद्वियति (७)विद्रुतखेचरेण
(८)दीप्तेन तेन दहनेन सुदुःसहेन।
दन्दह्यमान(९)मखिलं सुरराजसैन्य-
मत्याकुलं शिवसुतस्य समीप(१)माप ॥ ३९ ॥

उज्जागरस्येति ॥ व्योम अन्तरीक्षम्। कर्म। उज्जागरस्य प्रदीप्तस्य तथा निर्नास्ति अर्गलः प्रतिबन्धः यस्य तादृशस्य दहनस्य अनलस्य निर्नास्ति तुला सादृश्यं यस्याः तथोक्ताभिः तथा अनारताभिः निरन्तराभिः ज्वालानां कीलानां सम्बन्धि-नीभिः आवलीभिः श्रेणीभिः। तथा पयोदानां मेघानां निवहैः सङ्घैरिव धूमानां संघैः समूहैः व्याप्तं सदिति शेषः। उच्चैः वृहद्भिः तड़ितां चपलानां सम्बन्धिभिः कुलैः समूहैः कीर्णं व्याप्तमिव अभ्यलक्ष्यत अदृश्यत। जनैरिति कर्तृपद-मध्याहार्य्यम्। उत्प्रेक्षालङ्कारः॥ ३८ ॥

गाढादिति ॥ गाढात् महतः भयात् तारकप्रयुक्ताग्नेया-स्त्रजनितादित्यर्थः। हेतौ तृतीया। विद्रुताः पलायनं प्रापिताः खेचराः रविप्रभृतयो येन तादृशेन। तथा दीप्तेन प्रज्वलितेन। तथा सुदुःसहेन अतिशयेन सोढुमशक्येन तेन उक्तेन दहनेन अग्निना। कर्ता। दन्दह्यमानं पुनःपुनरति-शयेन भस्मीक्रियमाणम्। अतएव अत्याकुलम् अतिविकलम् अखिलं समग्रं सुरराजस्य देवेन्द्रस्य सम्बन्धि सैन्यं सेना।

---

(६) तद्भीतितः, तस्मात्ततः। (७) चाद्भुतसञ्चरेण।
(८) दीर्घेण। (९) अनिशम्। (१) आयात्, आगात्।

इत्यग्निना घनतरेण (२)ततोऽभिभूतं
तद्देवसैन्यमखिलं विकलं विलोक्य ।
सस्मेरवक्त्रकमलाऽन्धकशत्रुसूनु-
(३)र्बाणासनेन समधत्त स वारुणास्त्रम् ॥ ४० ॥

घोरान्धकारनिकरप्रतिमो युगान्त-
कालानलप्रबलधूमनिभो नभोऽन्ते ।
गर्जारवै(४)र्विघटयन्नवनीधराणां
शृङ्गाणि मेघनिवहो घनमुज्जगाम ॥ ४१ ॥

कर्तृ । शिवस्य हरस्य सुतस्य तनयस्य कार्तिकेयस्य समीपं सैन्यम । कर्म । आप जगाम ॥ ३९ ॥

इतीति ॥ ततः निजसैन्यानां स्वसमीपागमनानन्तरं सः, अन्धकस्य शत्रुः शिवः तस्य सम्बन्धी सूनुः तनयः कार्तिकेयः । कर्ता । इति एवप्रकारेण घनतरेण अतिनिविडेन अग्निना अनलेन अभिभूतं पराभूतम् अखिलं समग्रं तत् पूर्वोक्तं देवानां सुराणां सैन्यम् । कर्म । विकलं कातरं विलोक्य निरीक्ष्य स्मेरेण ईषद्धास्येन सह वर्तमानं वक्त्रकमलं मुखपङ्कजं यस्य तथोक्तः सन् । बाणाः शराः अस्यन्ते क्षिप्यन्तेऽनेन बाणासनं धनुः तेन । करणेन । वरुणस्येदं वारुणं वरुणदैवतकम् अस्त्रं समधत्त संदधे इत्यर्थः । आग्नेयास्त्रनिवारणार्थमिति भावः ॥ ४० ॥

घोरेति ॥ घोराणां भीषणानाम् अन्धकाराणां सम्बन्धिनः निकरस्य समूहस्येव प्रतिमा स्वरूपं यस्य तादृशः । तथा युगान्तकालस्य कल्पान्तसमयस्य सम्बन्धी यः अनलः दहनः तस्य सम्बन्धिना प्रबलेन अधिकेन धूमेन निभः सदृशः मेघानां निवहः समूहः । कर्ता । गर्जस्य गर्जनस्य आरवैः घोषैः ।

(२) तदा । (३) बाणासनेऽथ । (४) विधमयन् ।

विद्युल्लता वियति वारिद(५)वृन्दमध्ये
गम्भीरभीषण(६)रवैः कपिशीकृताशा ।
घोरा युगान्तचलितस्य (७) भयङ्कराथ
कालस्य लोलरसनेव चमच्चकार ॥ ४२ ॥
कादम्बिनी विकरुचे (८)विषकण्ठिकाभि-
रुत्तालकाल(९)रजनीजलदावलीभिः ।

करणैः । अवनीधराणां अचलानां सम्बन्धीनि शृङ्गाणि शिखराणि । कर्म । विघटयन् स्फोटयन् नभसः गगनस्य अन्ते मध्ये घनं निविड़ं यथा तथा उज्जगाम उदितः । वारुणास्त्रप्रभावादिति भावः ॥ ४१ ॥

विद्युदिति ॥ अथ अनन्तरं मेघोदयानन्तरमित्यर्थः । विद्युल्लता चपलारूपिणी स्वर्णलता । कर्त्री । वियति आकाशे गम्भीरैः निविड़ैः । अतएव भीषणैः भयोत्पादकैः रवैः घोषैः उपलक्षिता । विशेषणे तृतीया । तथा अकपिशाः कपिशाः सम्पद्यमानाः कृताः कपिशीकृताः पिशङ्गीकृताः आशाः पूर्वादिदिशो यया तादृशा । तथा युगान्ते प्रलये चलितस्य लोकभक्षणार्थं प्रस्थितस्य कालस्य अन्तकस्य सम्बन्धिनी भयङ्करा भीषणा, लोला चञ्चला रसना जिह्वेव घोरा भीषणा सती वारिदानां मेघानां यत् वृन्दं समूहः तस्य मध्ये अन्तराले चमच्चकार चमत्कृतवती ॥ ४२ ॥

कादम्बिनीति ॥ कादम्बिनी मेघमाला । कर्त्री । अचिरा क्षणस्थायिनी रुक् कान्तिः यासां तादृशाभिः विद्युद्भिः प्रयोज्यकर्त्रीभिः परिदीपिताः आलोकिताः आशाः दिशो यया प्रयोजककर्त्र्या तादृशा । तथा अदृष्टिच्छदा अनेत्रावरण-

---

(५) वृन्दवर्ग, वृन्दवर्गे । (६) रवै । (७) भयङ्करस्य ।
(८) विस । (९) रजनीव रदावलीभिः ।

व्योम्नुग्रचक्रै(१)रचिररुक्परिदीपिताशा-
(२)दृष्टिच्छटा (३)विषमघोषविभीषणा च ॥४३॥
व्योम्नस्तलं पिदधतां ककुभां मुखानि
गर्जारवै(४)रविरतैस्तुदतां मनांसि।
अम्भोभृतामतितरामनणीयसीभि-
र्धारावलीभिरभितो ववृषे समूहैः ॥ ४४ ॥

कर्त्री नेत्रप्रकाशिकेत्यर्थः। तथा विषमेण भयङ्करेण घोषेण विभीषणा भयजनिका। तथा उच्चकैः बृहति व्योम्नि आकाशे विषं तोयं कण्ठे अभ्यन्तरे यासां तथोक्ताभिः। तथा उत्तालाभिः उत्कटाभिः कालाभिः कृष्णपक्षीयाभिश्च रजनीभिः यामिनीभिरिव जलदावलीभिः मेघश्रेणीभिः उपलक्षिता सती विरुरुचे दिदीपे ॥ ४३ ॥

व्योम्न इति ॥ व्योम्नः गगनस्य तलं स्वरूपम्। कर्म। तथा ककुभाम् आशानां सम्बन्धीनि मुखानि अग्रभागान्। कर्म। पिदधताम् आच्छादयताम्। तथा अविरतैः निरन्तरैः गर्जारवैः गर्जनशब्दैः। करणैः। मनांसि चित्तानि तत्रत्यलोकानामिति भावः। कर्म। तुदतां पीडयताम्, अम्भो जलं बिभ्रति ये तथोक्तानाम्। भृधातोः कर्तरि क्विप्। मेघानां सम्बन्धिभिः समूहैः। कर्तृभिः। अणनीयसीभिः अलघुतराभिः महतीभिरित्यर्थः। धाराणां सम्पातानाम् आवलीभिः श्रेणीभिः। करणभूताभिः। अतितरां भृशं यथा तथा अभितः समन्ततः ववृषे अवृष्यत। भावे लिट्प्रयोगः ॥ ४४ ॥

---

(१) अचिररोचिररोचताशे। (२) दृष्टिच्छलात्, दृष्टिच्छटा।
(३) विषमकोपविभीषणेव, विषमरोषविभीषणेव।
(४) अवितथैः।

(५)घोरान्धकारपटलैः पिहिताम्बराणां
गम्भीरगर्जनरवैर्व्यथितासुराणाम्।
दृष्ट्या तया जलमुचां वरुणात्मजानां
विश्वोदरम्भरि(६)रपि प्रशशाम वह्निः॥ ४५॥
दैत्योऽपि (७)रोषकलुषो निशितैः क्षुरप्रै-
राकर्णकृष्टधनुरुत्पतितैः स भीमैः।
तद्भीतिविद्रुतसमस्तसुरेन्द्र(८)सैन्यो
गाढं जघान मकरध्वजशत्रुसूनुम्॥ ४६॥

घोरेति॥ विश्वेन समग्रजगता। करणेन। उदरं भरतीति तादृशोऽपि वह्निः अनलः। कर्त्ता। घोरैः भयङ्करैः अन्धकाराणाम् अन्धतमसां पटलैः समूहैः। करणैः। पिहितम् आच्छादितम् अम्बरं आकाशं यैः तादृशानाम्। तथा गम्भीरैः भीषणैः गर्जनरवैः गर्जनध्वनिभिः। करणैः। व्यथिताः व्यथां प्रापिताः असुराः दैत्याः यैः तथोक्तानाम्। तथा वरुणात् वरुणदेवतास्मात् जायन्ते उत्पद्यन्ते ये तथाभूतानां जलं मुञ्चन्तीति तादृशानां मेघानां सम्बन्धिन्या तया प्रसिद्धया वृष्ट्या वर्षणेन। करणेन। प्रशशाम प्रशान्तो बभूव॥ ४५॥

दैत्य इति॥ स दैत्यः तारकोऽपि। कर्त्ता। रोषकलुषः क्रोधाविलः। तथा निशितैः तीक्ष्णैः अतएव भीमैः भयङ्करैः, तथा आकर्णं श्रवणपर्यन्तं यथा तथा कृष्टात् कर्षितात् धनुषः शरासनात् उत्पतितैः निर्गतैः क्षुरप्रैः अस्त्रभेदैः। करणैः। तेभ्यः क्षुरप्रेभ्यः या भीतिः शङ्का तया हेतुना विद्रुतं

---

(५) आप्लावितो बहुभवोऽपिहिताम्बराणां गम्भीरगर्ज-निपतद्विधुरासुराणाम्, आप्लाविताद्दवभुवां पिहिताम्बराणां गम्भीरगर्जितपतद्विधुरासुराणाम्। (६) मथ।
(७) कोपकलुषः। (८) सैन्यैः।

देवोऽपि दैत्यविशिख(८)प्रकरं सचापं
बाणैश्चकर्त कणशो (१)रणकेलिकारी।
योगीव योग(२)विधिशुष्कमना यमाद्यैः
सांसारिकं (३)विषयसङ्ग(४)ममोघवीर्यम् ॥४७॥
भ्रूभङ्गभीषणमुखोऽसुरचक्रवर्ती
सन्दीप्तकोपदहनोऽथ रथं विहाय।

पलायनं प्रापितं समस्तं समग्रं सुरेन्द्रसैन्यं देवेन्द्रबलं येन तथोक्तः सन् गाढं भृशं यथा तथा मकरध्वजस्य कन्दर्पस्य सम्बन्धिनः शत्रोः शरैः हरस्य सूनुं तनयं कार्तिकेयम्। कर्म। जघान हतवान् ॥ ४६ ॥

देव इति॥ रणः संग्राम एव केलिः क्रीड़ा तां करोति विदधातीति तथोक्तः देवः कर्तिकेयोऽपि। उपमेयपक्षे कर्ता। बाणैः शरैः। करणभूतैः। चापेन कोदण्डेन सह वर्तमानं सचापं, दैत्यस्य तारकासुरस्य विशिखप्रकरं शरसमूहम्। उपमेयपक्षे कर्म। योगविधिना योगाभ्यासव्यापारेण। करणेन। शुष्कं नीरसं मनो यस्य तथोक्तः योगी। उपमानपक्षे कर्ता। यमः आदिः प्रभृतिः येषां तथोक्तैः यमनियमादिभिः योगस्य साधनैः। करणैः। अमोघं सफलं वीर्यं प्रभावः यस्य तथोक्तं, सांसारिकं संसारसंक्रान्तं विषयाणां चक्षुरादीन्द्रियोपभोग्यवस्तूनां सङ्गं समूहमिव। उपमानपक्षे कर्म। कणशः क्षुद्रांशैः चकर्त कर्त्तितवान् ॥ ४७ ॥

भ्रूभङ्गेति॥ अथ शस्त्रयुद्धानन्तरम् असुराणां दैत्यानां चक्रवर्ती सम्राट्। तथा असुराणां दैत्यानाम् इन्द्रः तारकः। कर्ता। सं सम्यक् यथा तथा दीप्तः उद्दीप्तः कोपः रोष एव दहनः अनलः यस्य तथोक्तः। अतएव भ्रुवोः भ्रूकुट्योः भङ्गेन

(८) प्रवरम्। (१) रणकेलिकारः। (२) विमिषक्तमनाः।
(३) विषयवर्गम्। (४) अयोघवीर्यैः।

क्रीड़त्करालकरवालकरो(५)ऽसुरेन्द्र-
स्तं प्रत्यधावदभितस्त्रिपुरारि(६)सूनुम् ॥४८॥
अभ्यापतन्त(७)मसुराधिपमीशपुत्रो
दुर्वारबाहुविभवं सुरसैनिकै(८)स्तम्।
दृष्ट्वा युगान्तदहनप्रतिमां मुमोच
शक्तिं प्रमोदविकसद्वदनारविन्दः ॥ ४९ ॥
उद्योतिताम्बरदिगन्तरमंशुजालैः
शक्तिः पपात हृदि तस्य महासुरस्य।

वक्रत्वेन भीषणं भयजनकं मुखम् आननं यस्य तथाभूतः। तथा क्रीड़न् ऊर्ध्वदिशि कम्पमानः, करालः भयङ्करश्च करवालः खड्गः करे दक्षिणहस्ते यस्य तादृशः सन् रथं स्यन्दनम्। कर्म। विहाय परित्यज्य तं त्रिपुरारिसूनुं हरतनयम् अभितः संमुखम्। अभितस्शब्दयोगे द्वितीया। प्रत्यधावत् प्रतिदुद्रावेत्यर्थः॥ ४८ ॥

अभ्यापतन्तमिति॥ ईशस्य हरस्य पुत्रः कार्तिकेयः। प्रमोदेन आह्लादेन विकसत् विकासं गच्छत् वदनं मुखमेव अरविन्दं कमलं यस्य तादृशः सन् सुराणां देवानां सम्बन्धिभिः सैनिकैः सेनासंक्रान्तजनैः। कर्तृभिः। दुर्वारः निवारयितुमसाध्यः बाह्वोः भुजयोः विभवः बलं यस्य तथोक्तं तम् असुराणां दैत्यानाम् अधिपं नायकं तारकासुरम्। कर्म। अभ्यापतन्तम् अभ्यागच्छन्तं दृष्ट्वा अवलोक्य युगान्ते प्रलयसमये यः दहनः अनलः तस्येव प्रतिमा सादृश्यं यस्याः तथाभूतां शक्तिं शक्तिसंज्ञकमस्त्रं मुमोच त्यक्तवान्॥ ४९ ॥

उदितिति॥ शक्तिः कुमारस्येति भावः। कर्त्री। अंशूनां

---

(५) दधानवर्माभ्यधावत। (६) पुत्रम्।
(७) असुरेश्वरम्। (८) तैः।

हर्षाश्रुभिः सह (८)समस्तदिगीश्वराणां
(१)शोकोष्णबाष्पसलिलैः सह दानवानाम् ॥५०॥
शक्त्या (२)हतासुमसुरेश्वरमापतन्तं
कल्पान्तवात(३)हतभिन्नमिवाद्रिशृङ्गम् ।
दृष्ट्वा (४)प्ररूढ़पुलकाञ्चितचारुदेहा
देवाः प्रमोदमगमं(५)स्त्रिदशेन्द्रमुख्याः ॥ ५१ ॥

प्रभाणां जालैः पुञ्जैः स्वसंक्रान्तैरिति भावः । कर्त्तृभिः । उद्योतितम् उद्दीपितम् अम्बरं गगनं तथा दिशाम् आशानाम् अन्तरम् अवकाशः यत्र तत् यथा तथा तस्य महतः असुरस्य दैत्यस्य तारकस्य सर्व्वाम्बिमि हृदि वक्षःस्थले समस्ताः समग्राः ये दिशां पूर्वादीनाम् ईश्वराः पतयः तेषां सम्बन्धिभिः, हर्षस्य आनन्दस्य अश्रुभिः बाष्पैः सह तथा दानवानाम् असुराणां सम्बन्धिभिः शोकेन उष्णैः उत्तप्तैः बाष्पसलिलैः नेत्रजलैः सह पपात पतिता ॥ ५० ॥

शक्त्येति ॥ त्रिदशेन्द्रः देवेन्द्रः मुख्यः प्रधानं येषां तथोक्ताः देवाः सुराः । कर्त्तृभूताः । आपतन्तम् अभ्यागच्छन्तम् असुरेश्वरं तारकम् । कर्म । शक्त्या शक्तिसंज्ञकास्त्रेण हृताः नाशं प्रापिताः असवः प्राणाः यस्य तादृशम् । अतएव कल्पान्तस्य प्रलयकालस्य यः वातः पवनः तेन हतं ताड़ितम् अतएव भिन्नं भेदं प्राप्तम् अद्रेः पर्वतस्य शृङ्गं शिखरमिव दृष्ट्वा निरीक्ष्य प्ररूढ़पुलकैः सञ्जातरोमाञ्चैः चारवः मनोहराः देहाः शरीराणि येषां तादृशाः सन्तः प्रमोदम् आनन्दम् । कर्म । अगमन् प्राप्तवन्तः ॥ ५१ ॥

---

(८) समग्र । (१) शोकोत्थ । (२) हतासुम्, अथ तारम् ।
(३) हति । (४) प्ररूढ़पुलकाङ्कित, अवरूढ़पुलकाञ्चित ।
(५) त्रिदिवेशमुख्याः ।

यत्रापतत्स दनुजाधिपतिः परासुः
(६)संवर्तकालनिपतच्छिखरीन्द्र(७)तुल्यः ।
तत्राऽदधात् फणिपतिर्धरणीं फणाभि-
स्तद्भूरिभारविधुराभिरधोव्रजन्तीम् ॥ ५२ ॥
स्वर्गापगासलिलसीकरिणी समन्तात्
सौरभ्यलुब्धमधुपावलिसेव्यमाना ।
कल्पद्रुमप्रसववृष्टिरभून्नभस्तः
शम्भोः सुतस्य शिरसि त्रिदशारिशत्रोः ॥५३॥

यत्रेति ॥ स दनुजाधिपतिः दैत्यराजः । कर्ता । परासुः गतप्राणः । अतएव संवर्तस्य प्रलयस्य काले समये निपतता पतनं गच्छता शिखरीन्द्रेण शैलेन्द्रेण तुल्यः सदृशः सन् यत्र स्थले अपतत् पपात, तत्र स्थाने फणिनां सर्पाणां पतिः राजा अनन्तः । कर्ता । तस्य तारकासुरस्य यः भूरिभारः प्रभूतगौरवं तेन विधुराभिः कातराभिः फणाभिः आभोगैः । करणैः । अधो-व्रजन्तीं पातालं गच्छन्तीं धरणीम् । कर्म । अदधात् दधार ॥ ५२ ॥

स्वर्गेति ॥ कल्पद्रुमाणां कल्पपादपानां सम्बन्धिनी प्रसव-वृष्टिः कुसुमवर्षणम् । कर्त्री । स्वर्गस्य आकाशस्य या आपगा नदी मन्दाकिनी तस्याः सलिलानां जलानां सीकराः कणाः सन्ति यस्याः तथाभूता । तथा समन्तात् चतुर्दिक्षु सौरभ्येण सौगन्ध्येन लुब्धा लोलुपाः याः मधुपावलयः भ्रमरश्रेणयः ताभिः । कर्त्रीभिः । सेव्यमाना अनुस्रियमाणा सती नभस्तः गगनात् त्रिदशानां सुराणां सम्बन्धिनः अरेः शत्रोः तारकासुरस्य शत्रोः हरस्य सुतस्य तनयस्य कार्त्तिकेयस्य सम्बन्धिनि शिरसि मस्तके अभूत् पपात ॥ ५३ ॥

(६) संवर्तवात । (७) कल्पः ।

पुलकभरविभिन्न(८)वारबाणा
भुजविभवं बहु तारकस्य शत्रोः ।
(६)सकलसुरगणा महेन्द्रमुख्याः
प्रमदमुख(१)च्छविसम्पदोऽभ्यनन्दन् ॥ ५४ ॥

इति विषमशरारेः सूनुना जिष्णुनाजौ
त्रिभुवन(२)वरशल्ये (३)प्रोद्धृते दानवेन्द्रे ।

पुलकेति ॥ महेन्द्रमुख्याः देवेन्द्रप्रभृतयः, सकलाः समस्ताः सुरगणाः देवाः । कर्तारः । पुलकानां रोमाञ्चानां भरेण आधिक्येन भिन्नानि भेदं प्राप्तानि वारबाणानि वर्माणि येषां तादृशाः । तथा प्रमदेन प्रकृष्टानन्देन मुखच्छविसम्पद् वदनौज्ज्वल्यसमृद्धिः येषां तथाभूताः सन्तः तारकस्य शत्रोः परिभूतस्य कार्तिकेयस्य सम्बन्धिनं भुजविभवं बाहुबलम् । कर्म । बहु भूरि यथा तथा अभ्यनन्दन् अभिनन्दितवन्तः प्रशशंसुरित्यर्थः । पुष्पिताग्रावृत्तम् । तदुक्तम्—"अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति ॥ ५४ ॥

इतीति ॥ इति पूर्वोक्तप्रकारेण विषमाः पञ्चेत्यर्थः । शराः बाणाः यस्य तथोक्तस्य कन्दर्पस्य अरिः शत्रुः शिवः तस्य सूनुना तनयेन, जिष्णुना जयशीलेन कार्तिकेयेन । कर्त्रा । आजौ संग्रामे त्रिभुवनस्य वरं प्रबलं शल्यं शल्यभूत इत्यर्थः । तस्मिन्, दानवानाम् असुराणाम् इन्द्रे तारकासुरे कर्मभूते प्रोद्धृते प्रकर्षेण उन्मूलिते विनाशिते इत्यर्थः । सति । भावाधिकरणमत्र । अथ अनन्तरं बलस्य बलासुरस्य रिपुः अरिः इन्द्रः । कर्ता । नाकस्य त्रिदिवस्य आधिपत्यम् अधिपतित्वम् ।

---

(८) चारुदेहाः । (६) समस्तसुरगणाः । (१) द्युति ।
(२) खरशल्ये । (३) प्रेरिते, पातिते ।

बलरिपु(४)रथ नाकस्याधिपत्यं प्रपद्य
व्यजयत सुरचूड़ारत्नघृष्टाग्रपादः ॥ ५५ ॥

कर्म । प्रपद्य आसाद्य सुराणाम् अमराणां यानि चूड़ारत्नानि शिरोमणयः तैः घृष्टौ प्रणतावित्यर्थः । अग्रपादौ चरणाग्रे यस्य तादृशः सन् व्यजायत जययुक्तो बभूव । मालिनीवृत्तमेतत् । तदुक्तम्—"ननमयययुतेयं मालिनी भोगिलोकैः" इति ॥ ५५ ॥

इति श्रीचेत्रमोहनकृतया मोहिनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये तारकासुरबधो नाम सप्तदशः सर्गः ।

समाप्तम् ।

---

(४) अपि ।



